ग्रन्थाङ्कः १८

# सौरपुराणं व्यासकृतम् ।

एतत्पुस्तकं लेले इत्युपाह्वैः काशीनाथशास्त्रिभिः संशोधितम् ।

तच्च

महादेव चिमणाजी आपटे

इत्यनेन

पुण्याख्यपत्तने

आनन्दाश्रममुद्रणालये

आयसाक्षरैर्मुद्रयित्वा

प्रकाशितम् ।

शालिवाहनशकाब्दाः १८११



मूल्यं ३ रूपकत्रयम् ।

# शुद्धिपत्रम् ।

| पृष्ठाङ्काः । | पङ्क्त्यङ्काः । | अशुद्धम् । | शुद्धम् । | पृष्ठाङ्काः । | पङ्क्त्यङ्काः । | अशुद्धम् । | शुद्धम् । |
|---|---|---|---|---|---|---|---|
| २ | ६ | कञ्चुक | कञ्चुक | ३६ | २३ | सैहं | सैंहं |
| ३ | २० | विलक्षाय | द्विलक्षाय | ३६ | २३ | कौकुट | कौक्कुट |
| ५ | ४ | मुक्त | भक्त | ३६ | २५ | खड्गं | खड्गं |
| ५ | १७ | ज्ञानयर्यी | ज्ञानमयी | ३६ | २८ | चानालिकं | च नालिकं |
| ६ | ३२ | यत्रत्येत | यत्र त्येत | ३६ | २८ | मुनिः | मुनिः |
| ७ | १३ | न्यामुपरि | न्या उपरि | ३८ | २ | सदावत्स | सदा वत्स |
| ७ | १७ | विश्वतश्वक्षु | विश्वतश्चक्षु | ४२ | १७ | स्वरस्वतीम् | सरस्वतीम् । |
| ८ | २९ | °त्तियं | °त्ति यं | ४७ | १२ | वैकुण्ठं | वै कण्ठं |
| ८ | २९ | °त्तितं | °त्ति तं | ४७ | १४ | बुद्धनामा | बुद्धनाम्ना |
| ८ | ३० | °नेऽपि | °मानेऽपि | ४७ | १५ | कल्किनामा | कल्किनाम्ना |
| ९ | १ | वरा | वरं | ५४ | १४ | लम्भनं | लभनं |
| ९ | ९ | मज्ञानां | मज्ञानं | ५६ | २० | ॥ ६१ ॥ गृह° | * |
| ९ | १६ | भक्तिलेशे न | भक्तिलेशेन | ५९ | ११ | विवर्जयत् । | विसर्जयेत् । |
| १० | ३२ | द्रष्टं | द्रष्टुं | ६१ | २० | षाञ्शिव | षाच्छिव |
| १२ | ३१ | °यी य° | °यी त° | ६४ | १९ | नन्यथा | नन्यथा |
| १३ | २९ | बै | वै | ६५ | ३ | सर्वतो मुखम् । | सर्वतोमुखम् |
| १४ | १२ | महात्मानो | महात्मनो | ६५ | ४ | रं | °रं |
| १६ | १५ | जगत्रये | जगत्त्रये | ६९ | १३ | स्त्रंचान्ध | स्त्रश्चान्ध । |
| १६ | २३ | मूत उवाच | सूत उवाच | ८३ | १२ | क्रतवे | क्रतवे |
| १६ | ३० | ठ्यास का° | °व्यासं का | ८३ | १६ | भेरो | मेरो |
| १७ | २२ | कारेश्वर | कारेश्वर | ८९ | २९ | २६ | २८ |
| १९ | ३१ | °र्थेनरः | °र्थे नरः | ९० | ६ | शार्ङ्गिणं | शार्ङ्गिणं |
| २१ | १० | धृक् | धृत् | ९५ | २३ | राज्ञीरेवंत | राज्ञी रेवन्त |
| २१ | १२ | पशूनस्य | पशूनस्य | ९९ | ११ | वारुं | चानुं |
| २८ | २० | ० | सूत उवाच | १०७ | २४ | बभुवा | बभूवा |
| ३० | २९ | °र्दतो | °र्दत्तो | १२३ | २६ | श्रूलिनः | शूलिनः |
| ३२ | २ | ता ह्लोका | ताल्लोका | १२४ | ४ | लंधरमया | लंधर मया |
| ३३ | ८ | भर्गविश्वे | भर्ग विश्वे | १२४ | २३ | साहस्त्रं | साहस्त्रं |
| ३३ | २७ | मुर्खो | मूर्खो | १२४ | ३० | भूते ततः | भूत्तेन तत्क्ष |

* ॥ ६१ ॥ शरीरं सर्वतो रक्षेच्छरीरं धर्मसाधनम् । गृह०

| पृष्ठाङ्कः। | पङ्क्त्यङ्कः। | अशुद्धम्। | शुद्धम्। | पृष्ठाङ्कः। | पङ्क्त्यङ्कः। | अशुद्धम्। | शुद्धम्। |
|---|---|---|---|---|---|---|---|
| १३१ | २२ | कधृग्भवः | कधुग्भवः | १८३ | १५ | ॅदंशन्ति | दशन्ति |
| १३२ | २१ | तद्रूपं | तद्रूपं | १८४ | २० | षाड्गुण्य | षाड्गुण्य |
| १३५ | २ | त्त्रसर्वं | त्वं सर्वं | १८८ | २५ | रवेदः | खेदः |
| १३९ | २१ | म्लेच्छै | म्लेच्छै | १९५ | २२ | दैत्य | दैत्य |
| १४० | ६ | पश्यसे | शप्स्यसे | १९६ | ९ | रद्रीके | रद्रीन्के |
| १४१ | २३ | च्छास्त्रनि | च्छास्त्रनि | २०० | ८ | मारुह्य | ० |
| १४३ | ̄५ | विरुपाक्षो | विरूपाक्षो | २०० | ९ | ० | मारुह्य |
| १४४ | ६ | परश्वधीः | परस्वधीः | २०० | ११ | खड्ग | खड्ग |
| १४८ | १९ | धृक्। | धृत्। | २०१ | २९ | यैं | ० |
| १४८ | २५ | अलङ्करिष्णु | अलङ्करिष्णु | २०१ | ३० | ० | यैं |
| १४९ | १८ | धृक् | धृत् | २१० | ९ | यणव्रतम् | यणत्रयम् |
| १५० | ८ | रवरमयः | स्वरमयः | २५८ | १४ | सरवा | सखा |
| १५१ | १७ | यैंक | यैंक | २६८ | ९ | सवंतः | सर्वतः |
| १६० | ८ | सर्वतो भद्र | सर्वतोभद्र | २६८ | १२ | गृह्वाति | गृह्णाति |
| १६३ | ३ | आनन्तं | आनन्त्यं | २७४ | ३२ | श्वर | श्वरं |
| १६७ | २ | वर | वरः | २७५ | १ | द्रक्ष्यान्त | द्रक्ष्यन्ति |
| १६९ | १२ | वाँलोका | वाँल्लोका | २७७ | ४ | स्तः श्चरणो | विन्यस्तचर |
| १८३ | १ | वाचम | वच्मि | २८० | २१ | दिग्मागे | दिग्भागे |

# अथ सौरपुराणस्य विषयानुक्रमः ।

अध्यायः३७—जालंधरवधः ।

अध्यायः३८—शिवमहिमा । शिवविष्णू उद्दिश्य सूतशौनकसंवादः । प्रतर्दनोपाख्यानम् । प्रतर्दनक्षपणकसंवादः । प्रतर्दनस्य राज्यं त्यक्त्वा तपश्चरणम् । ब्रह्मप्रतर्दनसंवादः । प्रतर्दने महीं शासति वर्णाश्रमाचारवर्णनम् । गुर्विन्द्रसंवादः । प्रतर्दनप्रजानां सन्मार्गाच्चालनार्थं देवान्प्रति बृहस्पतेरुपायकथनम् । भुवं गत्वा विष्णोः किंकरः शिव इति त्वया वक्तव्यमित्यादिः किंनरं प्रति शचीपतेरादेशः । शिवविष्णू उद्दिश्य प्रतर्दनवैष्णवाभाससंवादः ।

अध्यायः३९—कलिप्रवेशः । संप्राप्ते कलौ प्रतर्दनपालितप्रजावस्थावर्णनम् । शिवमुद्दिश्य लक्ष्मीनारायणसंवादः । तयोः कैलासं प्रति प्रस्थानम् । प्रतर्दनचरितमुद्दिश्य शिवसुरसंवादः । मध्वाचार्यमधिकृत्य ब्रह्मणो भविष्यकथनम् ।

अध्यायः४०—श्रीमहेशस्य विष्णोश्च कथं तुल्यत्वमित्यादिः शौनकादीनामृषीणां सूतं प्रति प्रश्नः । तमुद्दिश्य तेषां सूतेन सह संवादः । रतिवसन्तादिसंवादः । कंदर्पनाशमधिकृत्य ब्रह्ममोहादिसंवादः । कलिमोहादिसंवादः । मधुमुद्दिश्य सूतस्य भविष्यकथनम् । मध्वाचार्यस्य गुरुं प्रति स्वोत्पत्त्यादिकथनम् । अन्धता तव सिद्धान्ते पूर्वं पक्षे च पाटवमित्यादिर्मधुं प्रति गुरोः शापः । कलिमहिमवर्णनम् । रते मा कुरु संतापमहं मोहः कलेः सखेत्यादि मोहादिभी रतेः समाश्वासनम् ।

अध्यायः४१—विष्णोः सुदर्शनाख्यचक्रप्राप्तिमुद्दिश्य सूतशौनकादिसंवादः । विष्णोस्त्वरिताख्यरुद्रलिङ्गप्रतिष्ठापनम् । विष्णुप्रोक्तशिवसहस्रनामस्तोत्रम् । दैत्यनिषूदनार्थं श्रीमहेशाद्विष्णोः सुदर्शनप्राप्तिः । भक्तिर्मयि दृढा विष्णो भविष्यति तवानघ । अजेयस्त्रिषु लोकेषु मत्प्रसादाद्भविष्यसीति विष्णवे शंभोर्वरप्रदानम् । विष्णुसमुदीरितशिवसहस्रनामस्तोत्रपठनादिमहिमा ।

अध्यायः४२—शिवपूजाविधिः ।

अध्यायः४३—उमामहेश्वरव्रतम् । दूर्वागणपतिव्रतम् ।

अध्यायः४४—शिवालयकरणफलम् । शिवालये कृतस्य कर्मणः फलम् । शिवालयसंमार्जनादिफलम् । जलादिस्नानफलम् । वर्णमण्डलपूजनादिप्रकारः । अहिंसाफलम् । शिवभक्तिफलम् । रुद्रपूजनमहिमा ।

अध्यायः४५—महेश्वरं दिदृक्षूणां ब्रह्मादिदेवानां मन्दरं प्रति प्रया

णम् । महेश्वरसुरसंवादः । शिवस्तुतिः । पाशुपतव्रतम् । पाशुपतव्रतमाहात्म्यम् । भस्मधारणफलम् ।

**अध्यायः४६**—शिवमाहात्म्यम् ।

**अध्यायः४७**—अरुन्धतीसावित्रीसंवादः । शिवायतनसंमार्जनफलम् । शिवपूजामाहात्म्यम् । कथं वैश्रवणः पूर्वं समाराध्य महेश्वरम् । लब्धं तस्मात्कुबेरत्वं सूत तद्वक्तुमर्हसीति शौनकादीनां सूतं प्रति प्रश्नः । सूतस्य तान्प्रति वैश्रवणस्य पूर्वजन्मप्रभृति कुबेरत्वप्राप्तिपर्यन्तमशेषं चरित्रकथनम् । कुबेरकृतशिवस्तोत्रम् । कुबेरस्य महेश्वराद्वरत्रयप्राप्तिः । शिवपूजनादिमहिमा । कुबेरकृतशिवस्तोत्रमहिमा ।

**अध्यायः४८**—शिवमाहात्म्यम् । शिवधर्ममहिमा । शिवार्चनादिफलम् । नरवर्मणो राज्ञो महिष्याः सुदेव्या उपाख्यानम् । शिवदर्शनादिमहिमा ।

**अध्यायः४९**—धर्मसंस्थापनार्थाय पार्वत्या अवतारः । रक्तासुरविक्रमवर्णनम् । तस्य मन्त्रिनामानि । अहमेव भवतां पूज्य इत्यादिदानवान्प्रति रक्तासुरस्योक्तिः । लोकस्य धर्महानिः । असुराभिभूतेन्द्रस्य बृहस्पतिसमीपं गत्वा स्वावस्थानकथनम् । न कालो विग्रहस्याद्येत्यादिर्मघवन्तं प्रति बृहस्पतेरुपदेशः । पुरोधोवचनमाकर्ण्य देवेन्द्रस्य अभिभूतो भृशं दैत्यैर्नाहं जीवितुमुत्सह इत्यादितं प्रति पुनरुक्तिः । मा विषादं कृथाः शक्र शरणं व्रज पार्वतीमित्यादि ब्रह्मणो देवेन्द्रं प्रत्युपायकथनम् । त्रिदशैः सार्धं शक्रस्य हिमवन्तं गिरिं प्रति प्रस्थानम् । पार्वत्यसुरयुद्धवर्णनम् । रक्तासुरवधः । शत्रुवधानन्तरं मघवते देव्या जगदैश्वर्यप्रदानम् ।

**अध्यायः५०**—प्राप्तराज्यं सुराधिपं द्रष्टुमङ्गिरआदिमुनीनामागमनम् । कथमाराध्यते देवी वरदाऽचलकन्यकेत्यादिर्देवेन्द्रस्य मुनीन्प्रति प्रश्नः । भवानीपूजनमहिमा । उल्कानवमीव्रतम् । गिरिजार्चनमाहात्म्यम् ।

**अध्यायः५१**—तिथिनिर्णयः । अर्कसंक्रान्त्यादिपर्वपुण्यकालादिनिर्णयः । युगादयः । मन्वन्तरादयः ।

**अध्यायः५२**—प्रायश्चित्तविधिः ।

**अध्यायः५३**—भानुमनुसंवादः । शिवस्मरणमहिमा । तारकासुरोपाख्यानम् । तारकभयाभिभूतानां देवानां ब्रह्माणं प्रति रक्षणार्थं गमनम् । ब्रह्मणस्तारकाय वरप्रदानम् । ब्रह्मसुरसंवादः । इन्द्रकामसंवादः । मदनदहनम् ।

अध्यायः५४—वरप्राप्त्यर्थं पार्वतीकृतमहादेवस्तुतिः। भवत्वनङ्गो मदनस्त्वत्प्रियार्थमित्यादि महादेवस्य पार्वत्यै वरप्रदानम्।

अध्यायः५५—पित्रे हिमालयाय पार्वत्या माहेश्वरज्ञानकथनम्।

अध्यायः५६—पार्वतीपरमेश्वरविवाहमण्डपकरणमुद्दिश्य पर्वतेश्वरविश्वकर्मसंवादः। विवाहमण्डपवर्णनम्।

अध्यायः५७—ईश्वरविवाहार्थं कालाग्न्याद्यावाहनम्। हरसंस्थानं प्रति कालाग्न्यादिप्रवेशः। शिवरूपवर्णनम्। शैलादेर्महेश्वराय देवासुरप्रवेशकथनम्। सिन्ध्वादिनदीप्रवेशकथनम्।

अध्यायः५८—उमाप्रदानार्थं हिमवतो मन्दरं प्रति गमनम्। शिवहिमवत्संवादः। पार्वतीप्रदानम्। विवाहवर्णनम्।

अध्यायः५९—मार्गभूषावर्णनम्। साम्बप्रत्युद्गमनार्थमागतानामप्सरआदिदिव्यस्त्रीणां वर्णनम्। शंकरात्पार्वत्या भूषणप्राप्तिः। क्रीडास्थानवर्णनम्। पार्वतीमुद्दिश्येश्वरहिमवत्संवादः। ब्रह्मशुक्रस्खलनम्। वालखिल्योत्पत्तिः। वालखिल्यरूपादिवर्णनम्। ब्रह्मादिदेवानां महेश्वराद्वरप्राप्तिः। शिवपार्वतीविवाहश्रवणादिफलम्।

अध्यायः६०—रुद्रगणरूपवर्णनम्। ईश्वरचिरक्रीडोद्भूतोत्पातवर्णनम्। उत्पातानुद्दिश्य नारददेवेन्द्रसंवादः। उत्पातकारणम्। शंकरक्रीडामधिकृत्य विष्णुसुरसंवादः। प्रवेशायोग्यकालः। विष्णवग्निसंवादः।

अध्यायः६१—अग्निस्तुतिः। अग्नेः शंभुगृहं प्रति गमनम्। नन्दिरूपवर्णनम्। हरं कथं पश्यामीत्याद्यग्नेश्चिन्ता। हंसरूपधारिणोऽग्नेर्महादेवक्रीडास्थाने प्रवेशः। पार्वतीवाहनवर्णनम्। सिंहस्य हुंकारेण ज्वलनस्य बधिरत्वम्। तस्यैव शंभुगृहान्निर्गमनम्। तं कृतकार्यं मन्यमानानां देवानां तेन सह संभाषणम्। गतोऽहं तस्य भवनं देवदेवस्य शूलिन इत्याद्यग्नेर्देवान्प्रति यथावत्स्ववृत्तान्तकथनम्। मुनिगणैः सार्धं देवानां मन्दरं प्रति प्रयाणम्। शिवस्तुतिः। वह्नेः शिवतेजोग्रहणम्। स्कन्दमुद्दिश्य शिवपार्वतीसंवादः।

अध्यायः६२—देवानां सगर्भत्वम्। गर्भमुद्दिश्य शंकरसुरसंवादः। शर्वतेजोमहिमवर्णनम्। कुमारोत्पत्तिः। तमुद्दिश्य शिवपार्वतीसंवादः। तस्य क्रीडनम्। षडाननानाशमधिकृत्य देवेन्द्रभूतसंवादः। कथमुक्तमिदं भूता बालस्य हननं प्रतीत्यादिः पुरंदरस्य भूतान्प्रत्युक्तिः। आतुरादिनिषूदनपातकम्।

गर्भोदितेर्यथा शक्र संरम्भात्सूदितस्त्वया । तदा नीतिर्गता कुत्रेत्यादिरिन्द्रं प्रति भूतानां प्रत्युक्तिः । स्कन्दवधार्थमिन्द्रप्रस्थानम् ।

अध्यायः६३—नारदमहेन्द्रसंवादः । स्कन्दवर्णनम् । स्कन्दमहेन्द्रयुद्धवर्णनम् । गुर्विन्द्रसंवादः । प्रसीद मे त्वं शरणागतस्येत्यादिर्महेन्द्रस्य स्कन्दं प्रत्युक्तिः । स्कन्दमहेन्द्रसंवादः । गुहस्य सेनापत्यप्राप्तिः । तारकासुरवधः।

अध्यायः६४—शंकरभक्तियोगमाहात्म्यम् । शिवभक्तिमहिमा । लिङ्गार्चनमहिमा । सत्यध्वजसुतवसुश्रुतोपाख्यानम् । वसुश्रुतमुद्दिश्य यमतत्किंकरसंवादः । शिवभक्तमाहात्म्यम् ।

अध्यायः६५—पञ्चाक्षरमन्त्रमहिमा । बिल्ववृक्षमहिमा । शिवार्चनफलम् । नानाविधपुष्पकृतशिवपूजाफलम् । शिवप्रियपुष्पतारतम्यम् । निषिद्धपुष्पाणि । बिल्वपत्रादिभिः कृतस्य शिवार्चनस्य माहात्म्यम् । शिवालयमण्डनफलम् । पुष्पादिकृतपूजाफलम् । कूपारामादिबन्धनफलम् । शिवक्षेत्रादिमानम् ।

अध्यायः६६—शिवप्रीतिफलम् । शिवभजनफलम् । शिवस्मरणफलम् । शिवनिर्माल्यधारणमहिमा । शिवनिर्माल्यलङ्घनपातकम् । लिङ्गव्याख्यानम् । ज्येष्ठत्वार्थे ब्रह्मविष्णुविवादः । तद्दर्पहरणाय लिङ्गप्रादुर्भावः । ज्येष्ठत्वं युवयोस्तावदास्तामित्यादिर्विष्णुब्रह्माणौ प्रति महादेवस्योक्तिः । मत्प्रसादेन सर्वस्मादधिको भव माधवेति विष्णवे महादेवस्य वरप्रदानम् । चराचरस्य जगतो मान्यो भव पितामहेति शंकरस्य ब्रह्मणे वरप्रदानम् । ब्रह्मनारदसंवादः । समुद्रदर्शनादिमहिमा । सप्तकोटीश्वरलिङ्गमाहात्म्यम् ।

अध्यायः६७—उज्जयिनीस्थमहाकाललिङ्गमाहात्म्यम् । कुक्कुटेश्वरोत्पत्तिः । शूलेश्वरमाहात्म्यम् । ओंकारेश्वरमाहात्म्यम् । अगस्त्येश्वरप्रादुर्भावः । शक्तिभेदाख्यलिङ्गमहिमा । स्थाणुलिङ्गमहिमा । प्रयागमाहात्म्यम् । गयातीर्थमाहात्म्यम् ।

अध्यायः ६८—तिथिनिर्णयः । सोमसूत्रप्रदक्षिणा । मन्त्रवीर्यहरपदार्थाः । गुरुशब्दव्युत्पत्तिः । गुरुत्यागादिदोषः । श्राद्धकर्तृनिर्णयः । साग्निकनिरग्निकव्याख्यानम् । एकहस्तकृतप्रणामादिदोषकथनम् । अक्षारगणकथनम् । परभक्षककथनम् ।

अध्यायः ६९—श्वेतोपाख्यानम् । शंभोः कालकालाख्याप्राप्तिः । ज्वालेश्वरादिलिङ्गमाहात्म्यम् । मुनिपत्नीमोहनमुद्दिश्य ब्रह्मनारदसंवादः । सौरपुराणश्रवणादिमहिमा ।

---

सौरपुराणस्याऽऽदर्शपुस्तकानि शुद्धीकरणार्थं येषां मिलितानि तेषां नामानि पुस्तकानां संज्ञाश्च प्रदर्श्यन्ते ।

---

( क. ) इति संज्ञितम्—पनवेलग्रामस्थानां बापटोपाह्वानां वे० शा० सं० रा० रा० इसलामपुरकरोपाह्वैर्वामनशास्त्रिभिर्दत्तम् ।

( ख. ) इति संज्ञितम्—दक्षिणापथवर्तिविद्यालयग्रन्थसंग्रहालयस्थं डाक्तर इत्युपपदधारिभिर्भाण्डारकरोपाह्वै रामकृष्ण गोपाल इत्येतैर्दत्तम् ।

( ग. ) इति संज्ञितम्—दक्षिणापथवर्तिविद्यालयग्रन्थसंग्रहालयस्थं डाक्तर इत्युपपदधारिभिर्भाण्डारकरोपाह्वै रामकृष्ण गोपाल इत्येतैर्दत्तम् । लेखनकालः संवत् १६४९

( घ. ) इति संज्ञितम्—दक्षिणापथवर्तिविद्यालयग्रन्थसंग्रहालयस्थं डाक्तर इत्युपपदधारिभिर्भाण्डारकरोपाह्वै रामकृष्ण गोपाल इत्येतैर्दत्तम् । लेखनकालः संवत् १७४१

( ङ. ) इति संज्ञितम्—दक्षिणापथवर्तिविद्यालयग्रन्थसंग्रहालयस्थं डाक्तर इत्युपपदधारिभिर्भाण्डारकरोपाह्वै रामकृष्ण गोपाल इत्येतैर्दत्तम् । लेखनकालः संवत् १८१९

( च. ) इति संज्ञितम्—दक्षिणापथवर्तिविद्यालयग्रन्थसंग्रहालयस्थं डाक्तर इत्युपपदधारिभिर्भाण्डारकरोपाह्वै रामकृष्ण गोपाल इत्येतैर्दत्तम् ।

( छ. ) इति संज्ञितम्—दक्षिणापथवर्तिविद्यालयग्रन्थसंग्रहालयस्थं डाक्तर इत्युपपदधारिभिर्भाण्डारकरोपाह्वै रामकृष्ण गोपाल इत्येतैर्दत्तम् । लेखनकालः संवत् १८१९

( ज. ) इति संज्ञितम्—पुण्यपत्तननिवासिनां आडघरे इत्युपाह्वानां वे०शा०सं० रा०रा०भाऊसाहेबवैद्य इत्येतेषाम् ।

( झ. ) इति संज्ञितम्—पुण्यपत्तननिवासिनां साठे इत्युपाह्वानां रा०रा० गोपळराव इत्येतेषाम् ।

॥ श्रीः ॥

# सौरपुराणम् ।

## व्यासकृतम् ।

यस्याऽऽज्ञया जगत्स्रष्टा विरञ्चिः पालको हरिः ।
संहर्ता कालरुद्राख्यो नमस्तस्मै पिनाकिने ॥ १ ॥
तीर्थानामुत्तमं तीर्थं क्षेत्राणां क्षेत्रमुत्तमम् ।
मुनीनामाश्रयो नित्यं नैमिषारण्यमुत्तमम् ॥ २ ॥
शौनकाद्या महात्मानः शिवभक्ता महौजसः ।
दीर्घसत्रं प्रकुर्वन्तस्तत्रेशानस्य तुष्टये ॥ ३ ॥
तस्मिन्सत्रे महाभागो मुनीनां भाग्यगौरवात् ।
आजगाम मुनीन्द्रष्टुं सूतः पौराणिकोत्तमः ॥ ४ ॥
तं दृष्ट्वा ते महात्मानो नैमिषारण्यवासिनः ।
प्रहृष्टाः प्रष्टुमुद्युक्ताः पप्रच्छू रोमहर्षणम् ॥ ५ ॥
**ऋषय ऊचुः**—कथं भगवता पूर्वमादित्येनाऽऽत्मरूपिणा ।
पुराणं कथितं सौरं तन्नो वक्तुमिहार्हसि ॥ ६ ॥
कृष्णद्वैपायनात्साक्षात्पूर्वं हि विदितं त्वया ।
त्वत्तो नास्ति परो वक्ता पुराणानां महातपः ॥ ७ ॥
सन्त्यन्ये बहवः शिष्या अपि तस्य महात्मनः ।
तथाऽपि शिष्यवात्सल्यात्त्वं पुराणेषु योजितः ॥ ८ ॥
यान्यन्यानि पुराणानि त्वयोक्तानि महामुने ।
अलं तैः पार्वतीकान्तभक्तौ भक्तियुतं त्विदम् ॥ ९ ॥
न यज्ञैर्न तपोभिर्वा न दानैर्न व्रतैस्तथा ।
शिवभक्तिमृते यस्मान्मुक्तिर्नास्तीति शुश्रुम ॥ १० ॥
देवोऽयं भगवान्भानुरन्तर्यामी सनातनः ।
यो ब्रूते सर्ववस्तूनां तत्त्वं ज्ञात्वैव नान्यथा ॥ ११ ॥

---

१ ( ख. ) °हा भक्ता महात्मानो म°। २ ( ङ. ) °भक्त्या म°। ३ ( ख.ग. ) °तं सूत त°। ४ ( घ. ङ. छ. ) सौम्य त°। ५ ( ख. ग. ) नास्त्यप°। ६ ( ख. ग. ) °हामते ॥ ७ ॥ ७ ( ख. ग. ) शिष्यो बा°। ८ ( ख. ग. ) °हामते । अ°।

अतः श्रद्धा हि महती श्रोतुं त्वद्वदनामृतम् ।
अस्माकं वर्तते सूते रोमहर्षण सुव्रत ॥ १२ ॥

सूत उवाच–नत्वा सूर्यं परं धाम ऋग्यजुःसामरूपिणम् ।
त्रिसत्यं त्रिजगद्योनिं त्रिमार्गं च त्रितत्त्वगम् ॥ १३ ॥
पुराणं संप्रवक्ष्यामि सौरं शिवकथाश्रयम् ।
यच्छ्रुत्वा मनुजः शीघ्रं पापकञ्चुकमुत्सृजेत् ॥ १४ ॥
श्लोकद्वयं पठेद्यस्तु श्लोकमेकमथापि वा ।
श्रद्धावान्पापकर्माऽपि स गच्छेत्सवितुः पदम् ॥ १५ ॥
पौराणीं वृत्तिमाश्रित्य ये जीवन्ति द्विजातयः ।
तन्मण्डलं विनिर्भिद्य तत्सायुज्यं व्रजन्ति ते ॥ १६ ॥
वक्ता यत्र रविः साक्षाच्छ्रोता तस्य सुतो मनुः ।
माहात्म्यं कथ्यते शंभोर्नास्त्यस्मादधिकं द्विजाः ॥ १७ ॥
इदं पुराणं वक्तव्यं धार्मिकायानसूयवे ।
द्विजाय श्रद्दधानाय शिवैकार्पितबुद्धये ॥ १८ ॥
आसीन्मनुः सूर्यसुतो वर्तते यो महातपाः ।
स कदाचिन्महाभागः कामिकाख्यं वनं ययौ ॥ १९ ॥
प्रतर्दनस्य नृपतेर्यज्ञे विपुलदक्षिणे ।
तत्त्वं विचारयामासुर्मिथो यत्र महर्षयः ॥ २० ॥
अशक्तास्ते महाभागा भृग्वाद्यास्तत्त्वनिर्णये[10] ।
एवं स्थितेषु विप्रेषु मायया मोहितात्मसु ॥ २१ ॥
संशयाविष्टचित्तेषु वागभूदशरीरिणी ।
तपः कुरुध्वं विप्रेन्द्रास्तपो ज्ञाननिबर्हणम् ॥ २२ ॥
तपसा प्राप्यते सर्वमिति ते शुश्रुवुर्गिरम् ।
श्रुत्वा तु मुनयः सर्वे भृग्वाद्या दग्धकिल्बिषाः ॥ २३ ॥
[11]मनुं पुरस्कृत्य ययुः क्षेत्रं वै द्वादशात्मनः ।
विश्रुतं द्वादशादित्यमिति लोकेषु तद्द्विजाः ॥ २४ ॥

---

१ ( च. ) °तः शुद्धा नो हि मतिः श्रो°। २ ( ख. ग. ) °त लोम°। ३ ( घ. ङ. च. छ. ) °णं तु प्र°। ४ ( क. ग. ) °मि शैवं शि°। ( ख. ) °मि शिवं शि । ५ ( क. ख. ग. ) °द्वायुक्तः पदं पादं पादार्धं वा चतुष्पदम् । ६ ( क. ख. ग. ) °मास्थाय ये पठन्ति । ७ ( क. ख. ग. ) °यः । श्रावयन्ति च मद्भक्तान्मत्सा° । ८ ( क. ख. ग. ) °ता वैवस्वतो । ९ ( क. ख. ग. ) °तेर्वर्तमाने महाध्वरे । त°। १० ( ख. ) °ये । स्थितेषु विप्रमुख्येषु । ११ ( क. ख. ) पुरस्कृत्य ययुः क्षेत्रं मनुं वै ।

यत्र संनिहितो नित्यं भानुस्त्रिदशपूजितः ।
तेपुस्तत्र[1] तपो घोरं तत्त्वदर्शनकाङ्क्षिणः ॥ २५ ॥
गते वर्षसहस्रे तु सूर्यः प्रत्यक्षतामगात् ।
किमर्थं तप्यते[2] वत्स सर्वैश्चैतै[3]र्महर्षिभिः ॥ २६ ॥
तुष्टोऽहं तव दास्यामि यत्ते मनसि[4] वर्तते ।
एते[5] च मुनयः सर्वे तपसा दग्धकिल्बिषाः ॥ २७ ॥
पश्यन्तु[6] मां परं देवं विश्वान्तर्यामिणं विभुम् ॥ २८ ॥

**सूत उवाच**—इति दृष्ट्वा[7] रविं साक्षात्प्रत्यक्षं पुरतः स्थितम् ।
मेने कृतार्थमात्मानं मनुर्वैवस्वतस्तदा ॥ २९ ॥
आत्मन्यात्मानमाधाय सर्वभावेन संयमी ।
स्तुतिं चकार स मनुर्मुनिभिः सह सुव्रतः ॥ ३० ॥

**मनुरुवाच**—नमो[8] नमो वरेण्याय वरदायांशुमालिने ।
ज्योतिर्मय नमस्तुभ्यमनन्तायाजिताय[9] ते ॥ ३१ ॥
त्रिलोकचक्षुषे तुभ्यं त्रिगुणायामृताय च ।
नमो[10] धर्माय हंसाय जगज्जननहेतवे ॥ ३२ ॥
नरनारीशरीराय नमो मीढुष्टमाय ते ।
प्रज्ञानायाखिलेशाय सप्ताश्वाय त्रिमूर्तये ॥ ३३ ॥
नमो व्याहृतिरूपाय त्रिलक्षायाशुगामिने ।
हर्यश्वाय नमस्तुभ्यं नमो हरितबाहवे ॥ ३४ ॥
एकलक्षविलक्षाय बहुलक्षाय दण्डिने ।
एकसंस्थद्विसंस्थाय बहु[11]संस्थाय ते नमः ॥ ३५ ॥
शक्तित्रयाय शुक्लाय रवये परमेष्ठिने ।
त्वं शिवस्त्वं हरिर्देव त्वं ब्रह्मा त्वं दिवस्पतिः ॥ ३६ ॥
त्वमोंकारो वषट्कारः स्वधा स्वाहा त्वमेव हि ।
त्वामृते परमात्मानं न तत्पश्यामि दैवतम् ॥ ३७ ॥
एवं स्तुत्वा मनुः प्राह भगवन्तं त्रयीमयम् ।
मुनिभिः सह धर्मात्मा सम्यग्दर्शनकाङ्क्षिभिः ॥ ३८ ॥

---

१ (क. ख. ग.) °त्र महाघो°। २ (च. छ.) °ते पुत्र स°। ३ (क. ख. ग. घ. छ.) सर्वे चैते महर्षयः। तु°। ४ (क. ख. ग.) °सि रोचते। ५ (क. ख. ग.) °ते सर्वे च मुनयस्तप°। ६ (घ.) °न्तु परमं दे°। ७ (घ.) °ष्ट्वाऽरविन्दाक्षं प्रत्य°। ८ (च.) °मो वेद्याय वरद व°। ९ (क. ख. ग.) °य वै ॥ ३१ ॥ (च.) °य ते ॥ ३१ ॥ १० (क. ख. ग.) °मो हंसाय धर्माय। ११ (घ.) °हुस्थाय नमो न°।

**मनुरुवाच**-किं तच्छ्रेयस्करं तत्त्वं वेदान्तेषु प्रतिष्ठितम् ।
कस्माद्विश्वमिदं जातं कस्मिन्वा लयमेष्यति ॥ ३९ ॥
कस्य ब्रह्मादयो देवा वशे तिष्ठन्ति सर्वदा ।
तदेकमथवाऽनेकमुभयं वा वद प्रभो ॥ ४० ॥
केन वा ज्ञायते सम्यगयमेश्व इतीतिवत् ।
ज्ञाते तस्मिंस्तु किं रूपं तस्य ज्ञानं किमात्मकम् ॥ ४१ ॥
चरितं तस्य किं तात किं तीर्थं तदधिष्ठितम् ।
केषामनुग्रहस्तस्य तीर्थे निवसतां प्रभो ॥ ४२ ॥
लक्षणं च पुराणानां व्रतानां च क्रमो यथा ।
वर्णानामाश्रमाणां च वर्णाचारविधिः कथम् ॥ ४३ ॥
श्राद्धं कथं वा क्रियते प्रायश्चित्तविधिः कथम् ।
एतत्सर्वं हि भगवन्पृष्टं वक्तुमिहार्हसि ॥ ४४ ॥
एवं मनोर्वचः श्रुत्वा भगवान्भास्करो द्विजाः ।
यत्पृष्टं तदशेषेण वक्तुं समुपचक्रमे ॥ ४५ ॥

इति श्रीब्रह्मपुराणोपपुराणे श्रीसौरे सूतशौनकसंवादे नैमिषारण्यप्रशंसादिकथनं नाम प्रथमोऽध्यायः ॥ १ ॥

**भानुरुवाच**-शृणु पुत्र प्रवक्ष्यामि तत्त्वं यत्र प्रतिष्ठितम् ।
पुराणेऽस्मिन्महाभाग सर्ववेदार्थसंग्रहे ॥ १ ॥
तत्तत्त्वं यद्भगवतो रूपमीशस्य शूलिनः ।
विश्वं तेनाखिलं व्याप्तं नान्येनेत्यब्रवीच्छ्रुतिः ॥ २ ॥
स एवाऽऽत्मा समस्तानां भूतानां मनुजाधिप ।
चैतन्यरूपो भगवान्महादेवः सहोमया ॥ ३ ॥
एकोऽपि बहुधा भाति लीलया केवलः शिवः ।
ब्रह्मविष्ण्वादिरूपेण देवदेवो महेश्वरः ॥ ४ ॥
पृष्टो ब्रह्मादिभिर्देवैः कस्त्वं देवेति शंकरः ।
अब्रवीदहमेवैको नान्यः कश्चिदिति श्रुतिः ॥ ५ ॥
आत्मभूतान्महादेवाल्लीलाविग्रहरूपिणः ।
आदिसर्गे समुद्भूतौ ब्रह्मविष्णू सुरोत्तमौ ॥ ६ ॥
तमेकं परमात्मानमादिकर्तारमीश्वरम् ।
प्राहुर्बहुविधं तज्ज्ञा इन्द्रं मित्र इतिश्रुतिः ॥ ७ ॥

---

१ (क.ख.ग.) वा त्राय° । २ (क.ख.ग.) °मर्थ इ° । ३ (क.ख.ग.) °ति षट् । ज्ञा° । ४ (घ.) °न्पृष्टो ब° । ५ (घ.) °क्तुं तमु° । ६ (घ.) यत्तु तत्त्वं भग° । (ङ.) यत्तत्त्वं य° । ७ (ङ.छ.) °। देदेवानां दे° । ८ (ख.) °म् । आहु° ।

न तस्मादधिकः कश्चिन्नाणीयानपि कश्चन ।
तेनेदमखिलं पूर्णं शंकरेण महात्मना ॥ ८ ॥
मुमुक्षुभिः सदा ध्येयः शिव एको निरञ्जनः ।
सर्वमन्यत्परित्यज्य मुक्त एव विमुच्यते ॥ ९ ॥
*न तस्य कर्मकार्यं वा बन्धमुक्ती महेशितुः ।
आनन्दरूपया गौर्या क्रीडति स्म महेश्वरः ॥ १० ॥
अक्षरं परमं व्योम शैवं ज्योतिरनामयम् ।
यस्तन्न वेद किं वेदैर्ब्राह्मणस्य भविष्यति ॥ ११ ॥
†नान्यो वेद्यः स्वयंज्योती रुद्र एको निरञ्जनः ।
तस्मिञ्ज्ञातेऽखिलं ज्ञातमित्याहुर्वेदवादिनः ॥ १२ ॥
अहं ब्रह्मा च विष्णुश्च शक्रश्चान्ये दिवौकसः ।
अद्याप्युपायैर्विविधैः शंभोर्दर्शनकाङ्क्षिणः ॥ १३ ॥
न दानैर्न तपोभिर्वा नाश्वमेधादिभिर्मखैः ।
भक्त्यैवानन्यया राजञ्ज्ञायते भगवाञ्शिवः ॥ १४ ॥
यतो वाचो निवर्तन्ते अप्राप्य मनसा सह ।
भर्गाद्विश्वस्य भरणाद्विश्वयोनेरुमापतेः ॥ १५ ॥
तस्य ज्ञानमयी शक्तिरव्यया गिरिजा शिवा ।
तया सह महादेवः सृजत्यवति हन्ति च ॥ १६ ॥
आचक्षते तयोर्भेदमज्ञा न परमार्थतः ।
अभेदः शिवयोः सिद्धो वह्निदाहकयोरिव ॥ १७ ॥
माया सा परमा शक्तिरक्षेरा गिरिजाऽव्यया ।
मायाविश्वात्मको रुद्रस्तज्ज्ञात्वा ह्यमृतीभवेत् ॥ १८ ॥

---

*छसंज्ञितपुस्तके न तस्येत्यादिश्लोकात्पूर्वं धर्मार्थकामेत्यादि वेदसिद्धान्त इत्यन्तमधिकं दृश्यते । तद्यथा—
धर्मार्थकाममोक्षाणां प्रायणे कारणं परम् । शिवभक्तिः सदा सत्यं नान्यत्किंचन भूतले ॥ १ ॥
त्रिलोक्यां सुखकामो यस्तेन पूज्यः सदाशिवः । शिवभक्तिमृते सौख्यं कुतः स्यात्सर्वदेहिनाम् ॥ २ ॥
शिवभक्त्या धनं विद्या यशः शत्रुक्षयस्तथा । प्राप्यते विजयः सर्वे सत्यमेतन्न संशयः ॥ ३ ॥
रोगक्षयस्तथाऽऽरोग्यं यद्यद्धि मनसेच्छति । जनस्तत्सर्वमाप्नोति वेदस्य वचनं यथा ॥ ४ ॥
तर्हि सर्वेऽपि शिवभक्तिं कथं न कुर्वन्ति तत्राऽऽह ।
यदा ललाटे धात्रा हि लिखितं सौख्यमुत्तमम् । शिवभक्तौ तदा बुद्धिर्जायते नान्यथा ध्रुवम् ॥ ५ ॥
यदा ललाटे सुखप्राप्तिर्लिखिता भवेत्तदा शिवसेवायां मतिर्भवतीति वेदसिद्धान्तः ।

† घसंज्ञितपुस्तकेऽयं श्लोको नास्ति ।

---

१ ( क. ख. ) °मुक्ति म° । २ ( क. ख. ) °क्षयं प° । ३ ( क. ख. ग. ) नान्यं वे° । ४ क. ख.) अनाप्य । ५ ( क. ख. ग. ) °क्षया गि° ।

स्वात्मन्यवस्थितं देवं विश्वव्यापिनमीश्वरम् ।
भक्त्या परमया राजञ्ज्ञात्वा पाशैर्विमुच्यते ॥ १९ ॥
सकलं तस्य भासैव भाति नान्येन शंकरः ।
तस्मिन्प्रकाशमाने हि नैवभान्त्यनलादयः ॥ २० ॥
तस्मिन्महेश्वरे गूढे विद्याविद्ये क्षराक्षरे ।
विधातरि जगन्नाथे विश्वं भाति न वस्तुतः ॥ २१ ॥
तस्मिन्महेश्वरे विश्वमोतं प्रोतं न संशयः ।
तस्मिञ्ज्ञातेऽखिलैः पाशैर्मुच्यते मनुजेश्वरः ॥ २२ ॥
ब्रह्मविष्ण्वादयो देवा मुनयो मनवस्तथा ।
सर्वे क्रीडनकास्तस्य देवदेवस्य शूलिनः ॥ २३ ॥
स एवैको न चानेको न द्विरूपः कदाचन ।
तस्याऽऽज्ञयाऽखिलं विश्वं वर्तते तन्नियन्त्रितम् ॥ २४ ॥
आदिसर्गे महादेवो ब्रह्माणमसृजत्प्रभुः ।
दक्षिणाङ्गाद्विरूपाक्षः सृष्ट्यर्थं लीलया किल ॥ २५ ॥
तस्मै वेदान्पुराणानि दत्तवानग्रजन्मने ।
वासुदेवं जगद्योनिं सत्त्वोद्रिक्तं सनातनम् ॥ २६ ॥
असृजत्पालनार्थं च वामभागान्महेश्वरः ।
हृदयात्कालरुद्राख्यं जगत्संहारकारकम् ॥ २७ ॥
असृजद्योगिनां ध्येयो निर्गुणस्तु स्वयं शिवः ।
विश्वं तस्माद्धि संभूतं तस्मिंस्तिष्ठति शंकरे ॥ २८ ॥
लयमेष्यति तत्रैव त्रयमेतत्स्वलीलया ।
स एवाऽऽत्मा महादेवः सर्वेषामेव देहिनाम् ॥ २९ ॥
ज्ञानेन भक्तियुक्तेन ज्ञातव्यः परमेश्वरः ।
न पश्यामि महादेवादधिकं देवतान्तरम् ॥ ३० ॥
वेदा अपि तमेवार्थमाहुः स्वायंभुवेऽन्तरे ॥

**वेदा ऊचुः**—यं प्रपश्यन्ति विद्वांसो योगिनः क्षपिताशयाः ।
नियम्य करणग्रामं सएवाऽऽत्मा महेश्वरः ॥ ३१ ॥
ब्रह्मविष्ण्विन्द्रचन्द्राद्या यस्य देवस्य किंकराः ।
यस्य प्रसादाज्जीवन्ति स देवः पार्वतीपतिः ॥ ३२ ॥

---

१ (घ. ङ. च. छ.) °त्मव्यव°। २ (क. ख. ग.) तस्य भासैव सकलं भा°। ३ (क. ख. ग.) यस्मि°। ४ (ग.) °मोतप्रो°। ५ (घ. ङ. च. छ.) °को भवाने°। ६ (च.) °त्पार्वतीनाथो वा°। ७ (क. ख. ग.) °कारिणम्। ८ (घ. ङ. च. छ.) °त्र यत्नत्वेन°। ९ (घ. ङ. च. छ.) °न मुक्ति°।

न जानन्ति परं भावं यस्य ब्रह्मादयः सुराः ।
अद्यापि न वयं विद्मः स देवस्त्रिपुरान्तकः ॥ ३३ ॥
शृण्वन्तु देवताः सर्वाः सत्यमस्मद्वचः परम् ।
नास्ति रुद्रान्महादेवादधिकं दैवतं परम् ॥ ३४ ॥
न यथा कूर्मरोमाणि शृङ्गं न शशमस्तके ।
न यथाऽस्ति वियत्पुष्पं तथा नास्ति हरात्परम् ॥ ३५ ॥
शिवभक्तिमृते यस्तु सुखमाप्तुमिहेच्छति ।
अजागलस्तनादेव स दुग्धं पातुमिच्छति ॥ ३६ ॥
महादेवं विजानीयादहमस्मीति पण्डितः ।
अन्यत्किमस्मादप्यस्ति ज्ञातव्यं मुक्तिहेतवे ॥ ३७ ॥
ब्राह्मीं नारायणीं रौद्रीं पूजयित्वा महेश्वरीम् ।
यत्प्रपश्यन्ति योगीन्द्रास्तद्विद्याच्छांकरं पदम् ॥ ३८ ॥
क्रमाच्चक्राणि चंक्रम्य शङ्खिन्यामुपरि स्थितम् ।
यदभिव्यज्यते ज्योतिस्तद्विद्याच्छांकरं पदम् ॥ ३९ ॥
देवयानपथं हित्वा पितृयानं तथोत्तरम् ।
गगनाद्यो रवः सूक्ष्मः शंकरस्य स वाचकः ॥ ४० ॥
विश्वतश्चक्षुरीशानस्त्रिशूली विश्वतोमुखः ।
जनकः सर्वभूतानामेक एव महेश्वरः ॥ ४१ ॥
वालाग्रमात्रं हृत्पद्मे स्थितं देवमुमापतिम् ।
येऽनुपश्यन्ति विद्वांसस्तेषां शान्तिर्हि शाश्वती ॥ ४२ ॥
पृथिव्यां तिष्ठति विभुः पृथिवी वेत्ति नैव तम् ।
रूपं च पृथिवी यस्य तस्मै भूम्यात्मने नमः ॥ ४३ ॥
अप्सु तिष्ठति नैवाऽऽपस्तं विदुः परमेश्वरम् ।
आपो रूपं च यस्यैव नमस्तस्मै जलात्मने ॥ ४४ ॥
योऽग्नौ तिष्ठत्यमेयात्मा न तं वेत्ति कदाचन ।
अग्नी रूपं भवेद्यस्य तस्मै वह्न्यात्मने नमः ॥ ४५ ॥
तिष्ठत्यजस्रं यो वायौ न वायुर्वेत्ति तं परम् ।
वायुर्यस्य भवेद्रूपं तस्मै वाय्वात्मने नमः॥ ४६ ॥
व्योम्नि तिष्ठति यो नित्यं व्योम वेत्ति न तं हरम् ।
व्योम यस्य भवेद्रूपं तस्मै व्योमात्मने नमः ॥ ४७ ॥

१ (घ. ङ. च. छ.) °दयम°। २ (क. ख. ग. घ. ङ.) पुरारि°। ३ (घ.) तं पर°।

सूर्ये तिष्ठति यो देवो न सूर्यो वेत्ति शंकरम् ।
यस्य सूर्यो भवेद्रूपं तस्मै सूर्यात्मने नमः ॥ ४८ ॥
यश्चन्द्रे तिष्ठति विभुश्चन्द्रो वेत्ति न शाश्वतम् ।
चन्द्रो यस्य भवेद्रूपं तस्मै चन्द्रात्मने नमः ॥ ४९ ॥
यजमाने तिष्ठति यो न तं वेत्ति कदाचन ।
यजमानोऽपि यद्रूपं यजमानात्मने नमः ॥ ५० ॥
त्वत्तो वयं समुद्भूतास्त्वय्येव विलयस्तथा ।
प्रमाणपदमारूढास्त्वत्प्रसादाद्वृषध्वज ॥ ५१ ॥
**भानुरुवाच**-एवं वेदस्तुतिं श्रुत्वा भगवान्गिरिजापतिः ।
प्रत्यक्षः समभूत्तेषां वेदानां मनुजाधिप ॥ ५२ ॥
सूर्यकोटिप्रतीकाशः सहस्राक्षः सहस्रपात् ।
सहस्रशीर्षा पुरुषः सूर्यसोमाग्निलोचनः ॥ ५३ ॥
स्थूलात्स्थूलतरः स्थूलः सूक्ष्मात्सूक्ष्मतरः परः ।
वेदानुवाच भगवान्देवदेवो महेश्वरः ॥ ५४ ॥
**ईश्वर उवाच**-मत्प्रसादाद्भविष्यध्वं हे वेदा लोकपूजिताः ।
युष्मानाश्रित्य विप्रेन्द्राः कर्म कुर्वन्ति नान्यथा ॥ ५५ ॥
ये युष्मान्समतिक्रम्य यत्किंचित्कर्म कुर्वते ।
निष्फलं तद्भवेत्कर्म तेषां युष्मदवज्ञया ॥ ५६ ॥
नित्यं नैमित्तिकं काम्यं यच्चान्यन्मोक्षसाधनम् ।
युष्मद्वचो नान्यैदिति मत्वा धीरो न शोचति ॥ ५७ ॥
ये वै युष्माननादृत्य शास्त्रं कुर्वन्ति मानवाः ।
निरये ते विपच्यन्ते यावदिन्द्राश्चतुर्दश ॥ ५८ ॥
श्रेयसे त्रिषु लोकेषु न वेदादधिकं परम् ।
विद्यते नात्र संदेह इति दत्तो वरो मया ॥ ५९ ॥
युष्मत्कृतं परं स्तोत्रं ये पठिष्यन्ति वै द्विजाः ।
तेषामध्ययनं पुण्यं मत्प्रसादाद्भविष्यति ॥ ६० ॥

---

१ (क.ख.ग.) °त्तियं हर°। (घ.)°त्तितं प°।२ (क.ख.) °भुर्न चन्द्रो वेत्ति शा°। ३ (क.ख.ग.) °मानोऽपि यद्रूपं न । (ङ.च.छ.) °नेऽपि यद्रूपं न। ४ (घ.ङ.च.छ.) विप्राद्याः क°। ५ (घ.) °दनुज्ञ°। ६ (क. ख. ग.)°न्यथेति महार्थी°। ७ (घ.ङ.च.छ.) ते प्रप°। ८ (च.) परस्तो°। ९ (ग.)°त्रं पठिष्यन्ति द्विजोत्तमाः । ते°।

**भानुरुवाच**-एवं दत्वा वरान्देवो वेदेभ्यो गिरिजापतिः ।
पश्यतामेव वेदानां क्षणादन्तर्हितोऽभवत् ॥ ६१ ॥ १०६ ॥

इति श्रीब्रह्मपुराणोपपुराणे श्रीसौरे सूतशौनकसंवादे शिवमहिमवर्णनं नाम द्वितीयोऽध्यायः ॥ २ ॥

**भानुरुवाच**-यदेतदैश्वरं तेजः सर्वगं भाति केवलम् ।
तदेव शरणं गच्छ यदीच्छसि परं पदम् ॥ १ ॥
तदेव सर्वभूतस्थं चिन्मात्रं तमसः परम् ।
अक्षरं निर्गुणं शुद्धमानन्दं परमव्ययम् ॥ २ ॥
प्रत्यक्षं सर्वभूतानामज्ञानां तद्विपर्ययः ।
विश्वमायाविधातारं द्विरष्टादशरूपिणम् ॥ ३ ॥
भक्तिग्राह्यं महादेवं जानीह्यात्मनि संस्थितम् ।
आत्मभूते महादेवे योगिध्येये सनातने ॥ ४ ॥
भक्तिमास्थाय परमां परं निर्वाणमाप्नुहि ।
तीर्थयात्रा बहुविधा यज्ञाश्च विविधाः कृताः ॥ ५ ॥
येषां जन्मसहस्रेषु तेषां भक्तिर्भवेच्छिवे ।
अक्षयः परमो धर्मो भक्तिलेशे न जायते ॥ ६ ॥
नास्ति तस्मात्परो धर्म इत्याहुर्वेदवादिनः ।
धर्मो बहुविधः प्रोक्तो मुनिभिस्तत्त्वदर्शिभिः ॥ ७ ॥
तत्राक्षयः परो धर्मः शिवधर्मः सनातनः ।
यज्ञात्तीर्थाज्जपाद्दानाद्धर्मः स्याद्बहुसाधनः॥ ८ ॥
साधनप्रार्थनाक्लेशः परसंपत्तिदुःखदः ।
यः पुनः शिवधर्मस्तु न साधनमुपेक्षते ॥ ९ ॥
संचितं जन्मसाहस्रैः पापं मेरूपमं यदि ।
करोति भस्मसाच्छक्तिः शंभोरमिततेजसः ॥ १० ॥
कुर्वन्नपि सदा पापं सकृदेवार्चयेच्छिवम् ।
लिप्यते न स पापेन याति माहेश्वरं पदम् ॥ ११ ॥
ये स्मरन्ति महादेवं यदि पापरता अपि ।
ते विज्ञेया महात्मान इति सत्यं ब्रवीम्यहम् ॥ १२ ॥

---

१ ( क. ख. ग. ) °श्यतां सर्वेते°। २ ( ङ. ) °देवं स°। ३ ( क. ख. ग. ) °ज्ञानं त°। ४ ( घ. ङ. च. छ. ) °त्मन्यवस्थि°। ५ ( घ. ) °मां निर्वाणं पदमा°। ६ ( क. ख. ग. ) धर्मो ह्याहुर्वे वेद°। ७ ( घ. ङ. च. छ. ) °तं बहुमा° । ८ ( घ. ) मेरुसमं । ९ ( क. ख. ग. )°साङ्गाक्तिः । १० ( घ. ङ. ) पापैस्तु या°।

नामानि च महेशस्य गृणन्त्यज्ञानतोऽपि वा ।
तेषामपि शिवो मुक्तिं ददाति किमतः परम् ॥ १३ ॥
अत्राहं संप्रवक्ष्यामि कथां पापप्रणाशनीम् ।
पाद्मकल्पसमुद्भूतां ब्रह्मणा समुदीरिताम् ॥ १४ ॥
श्रद्धया परया राजञ्शृणु त्वं गदतो मम ।
वक्ष्येऽहं तं प्रणम्यादावीशं भुवननायकम् ॥ १५ ॥
आसीदाद्ये कृतयुगे सप्तद्वीपैकराड्बली ।
इन्द्रद्युम्न इति ख्यातो राजा परमधार्मिकः ॥ १६ ॥
तस्य पुत्रो महाभागः सुद्युम्न इति विश्रुतः ।
ऐश्वर्यैरखिलैर्भाति यथा दिवि शचीपतिः ॥ १७ ॥
प्रतिष्ठानपुरे रम्ये गङ्गातीरे मनोरमे ।
तत्र स्थित्वाऽखिलां पृथ्वीं तस्मिन्राजनि शासति ॥ १८ ॥
कदाचित्तत्र भगवांस्तृणबिन्दुर्महामुनिः ।
आजगाम स तं द्रष्टुं सुद्युम्नं प्रियदर्शनम् ॥ १९ ॥
तमायान्तं मुनिं दृष्ट्वा राजा रुद्रार्चने रतः ।
उद्वास्यार्चां महाबाहुरुत्थाय च कृताञ्जलिः ॥ २० ॥
यथावदभिवाद्याथ ददावासनमुत्तमम् ।
यथावन्मधुपर्कादि तस्मै सर्वं न्यवेदयत् ॥ २१ ॥
अद्य धन्यः कृतार्थोऽस्मि सफलं जीवितं मम ।
भगवानागतो यस्मान्मां द्रष्टुं मुनिसत्तम ॥ २२ ॥
किमर्थमागतो ब्रह्मन्कृतकृत्योऽस्मि सुव्रत ।
विशेषाच्छंकरे भक्तो न दुर्लभमिहास्ति ते ॥ २३ ॥

**भानुरुवाच**—सुद्युम्नस्य वचः श्रुत्वा मुनिराह महामनाः ।
शिवभक्त्यमृतास्वादपरानन्दैकनिर्भरः ॥ २४ ॥

**तृणबिन्दुरुवाच**—राजन्यदुक्तं भवता तत्तथैव न संशयः ।
तथाऽपि चरितं श्रुत्वा तवाहं विस्मयान्वितः ॥ २५ ॥
प्रष्टुं समागतो राजन्नन्मनस्तव गौरवम् ।
कथयस्व महाबाहो श्रोतुं कौतूहलं हि मे ॥ २६ ॥

---

१ (क. ख. ग.) °पि ये । ते°। २ (क. ख. ग.) °ट् स्वयम् । इ°। ३ (क. ख. ग. ङ.) °भाग सु°। ४ (क. ख. ग.) °स्मिञ्शासति राजनि ॥१८॥ ५ (क. ख. ङ.) तं प्रष्टुं । ६ (ङ.) °त्तमः ॥ २२ ॥ ७ (क. ख.) °व्रतः । वि°। ८ (क. ख. ग.) °भक्तिमहास्वा°। ९ (च. छ.) °न्वितम् ॥ २५ ॥ १० (घ.) द्रष्टुं ।

**सुद्युम्न उवाच**–जन्मन्यहमतीतेऽस्मिन्व्याधोऽहं[१] गोमतीतटे।
देवतानामहं द्वेष्टा सर्वेषां प्राणिनामपि ॥ २७ ॥
सुव्याडिरिति नामाहं ख्यातोऽहं व्याधराड्मुने।
न कश्चिद्धर्मलेशोऽस्ति पापकर्मस्वहं रतः ॥ २८ ॥
मया ये निहता मार्गे तेषां संख्या न विद्यते।
परस्वं यदपहृतं तत्पापं पर्वतोपमम् ॥ २९ ॥
एवं बहुतिथे काले गतेऽहं पञ्चतां गतः।
धर्मराजस्य पुरतो नीतोऽहं यमकिंकरैः ॥ ३० ॥
मां दृष्ट्वाऽथाब्रवीद्धर्मश्चित्रगुप्तं विचारकम्।
किमनेन कृतो धर्मलेशोऽस्ति वद सुव्रत ॥ ३१ ॥

**चित्रगुप्त उवाच**–अनेन यत्कृतं पुण्यं मया वक्तुं न शक्यते।
जानाति भगवानेको विश्वव्यापी महेश्वरः ॥ ३२ ॥
इदं पुण्यमिति ज्ञात्वा कृतं नानेन यद्यपि।
आहर प्रहरेत्यादि नामसंकीर्तनं च यत् ॥ ३३ ॥
करोति तेन पुण्येन दुष्कृतं भस्मसात्कृतम्।
पापलेशोऽपि नास्यास्ति इति मे निश्चिता मतिः ॥ ३४ ॥

**सुद्युम्न उवाच**–तस्य तद्वचनं श्रुत्वा चित्रगुप्तस्य धीमतः।
सुव्याडिं पूजयामास यथावद्विधिपूर्वकम् ॥ ३५ ॥
एतस्मिन्नन्तरे तत्र विमानं सार्वकामिकम्।
सूर्यायुतप्रतीकाशं दिव्यस्त्रीभिर्विराजितम् ॥ ३६ ॥
देवदूतैः समानीतमारुह्य मुनिपुङ्गव।
धर्मराजमनुज्ञाप्य गतोऽहममरावतीम् ॥ ३७ ॥
तत्र भुक्त्वा महाभोगान्युगानामयुतं ततः।
गतोऽस्मि ब्रह्मसदनं ब्रह्मणाऽहं प्रपूजितः ॥ ३८ ॥
तत्राहं कल्पपर्यन्तं भोगान्भुक्त्वा यथेप्सितान्।
ततस्तु कर्मणः शेषं भोक्तुमत्र महीतले ॥ ३९ ॥
इन्द्रद्युम्नस्य राजर्षेः[८] कुले जातोऽस्मि सुव्रत।
स्मरामि पूर्विकां जातिं प्रसादाच्छूलिनो मुने ॥ ४० ॥

---

१ (घ. ङ. च. छ.) °हं गोतमीत°। २ (क. ख. ग.) °मेण्यहं। ३ (क. ख. ग. ङ. च. छ.) मतोऽहं पञ्चतां ततः। ४ (क. ख. ग.) °नेव वि°। ५ (क. ख. ग.) °नं सदा। क°। (घ. ङ.) °नं यदा। क°। ६ (घ. ङ. च. छ.) °स्तु धर्मतः शे°। ७ (क. ख.) °हीपते ॥३९॥ ८ (क. ख. ग.) °र्षेः पुत्रो जा°। ९ (क. ख.) °प्रतः। स्म° (च. छ.) °प्रते। स्म°

ईश्वरे सहसा भक्तिर्मम त्रिदशपूजिते ।
जानाति को महेशस्य माहात्म्यं परमात्मनः ॥ ४१ ॥
यस्य नाम्नः फलमिदमज्ञानोच्चारणादपि ।
ज्ञात्वा यः कीर्तयेच्छंभोर्नामान्यमिततेजसः ॥ ४२ ॥
मुक्तिः करतले तस्य स्थितेति मुनयो जगुः ।
**भानुरुवाच**–इति सर्वमशेषेण चरितं तस्य धीमतः ।
सुद्युम्नस्य मुनिः श्रुत्वा विस्मितोऽभूत्पुनः पुनः ॥ ४३ ॥
समालिङ्ग्य महात्मानं सुद्युम्नं राजपुङ्गवम् ।
राजन्स्वमाश्रमपदं यामीत्युक्त्वा जगाम सः ॥ ४४ ॥
एतत्ते चरितं राजन्सुद्युम्नस्य महात्मनः ।
कथितं यः पठेद्भक्त्या ब्रह्मलोकं स गच्छति ॥ ४५ ॥ १५१ ॥

इति श्रीब्रह्मपुराणोपपुराणे श्रीसौरे भानुमनुसंवादे सुद्युम्नाख्यानं नाम तृतीयोऽध्यायः ॥ ३ ॥

**मनुरुवाच**–राज्ञः सकाशात्स मुनिर्गत्वा किं कृतवान्पुनः ।
तस्याऽऽश्रमस्य किं नाम भगवन्ब्रूहि मे प्रभो ॥ १ ॥
**भानुरुवाच**–रेवातीरे महत्पुण्यं जालेश्वरमिति स्मृतम् ।
आश्रमं तृणबिन्दोस्तु मुनिसिद्धनिषेवितम् ॥ २ ॥
गत्वा तत्र मुनिश्रेष्ठो भवभावसमन्वितः ।
शिवलिङ्गं प्रतिष्ठाप्य तीर्थयात्रां चकार सः ॥ ३ ॥
**मनुरुवाच**–कानि तीर्थानि गुह्यानि येषु संनिहितः शिवः ।
ब्रूहि मे तानि भगवन्नन्यान्यपि च तत्त्वतः ॥ ४ ॥
**भानुरुवाच**–तीर्थानामुत्तमं तीर्थं क्षेत्राणां क्षेत्रमुत्तमम् ।
वाराणसीतिनगरी प्रिया देवस्य शूलिनः ॥ ५ ॥
यत्र विश्वेश्वरो देवः सर्वेषामिह देहिनाम् ।
ददाति तारकं ज्ञानं संसारान्मोचकं परम् ॥ ६ ॥
गङ्गा ब्रह्ममयी यत्र मूर्तिश्चोत्तरवाहिनी ।
संहर्त्री सर्वपापानां दृष्टा स्पृष्टा नमस्कृता ॥ ७ ॥
नास्ति गङ्गासमं तीर्थं वाराणस्यां विशेषतः ।
तत्रापि मणिकर्ण्याख्यं तीर्थं विश्वेश्वरप्रियम् ॥ ८ ॥

---

१ (घ.ङ.च.छ.) °त्वा यत्की°। २ (क.ख.ग.) अत्र। ३ (क.ख.ग.) °षामेव दे°। ४ (घ.) °थी य°।

तस्मिंस्तीर्थे नरः स्नात्वा पातकी वाऽप्यपातकी ।
दृष्ट्वा विश्वेश्वरं देवं मुक्तिभाग्जायते नरः ॥ ९ ॥
विश्वेश्वरस्य माहात्म्यं यदुक्तं ब्रह्मसूनुना ।
तदहं संप्रवक्ष्यामि व्यासायामिततेजसे ॥ १० ॥
घोरं कलियुगं प्राप्य कृष्णद्वैपायनः प्रभुः ।
किंतच्छ्रेयस्करमिति हृदि कृत्वा जगाम सः ॥ ११ ॥
नन्दीश्वरस्य यः शिष्यो योगिनामग्रणीः स्वयम् ।
सनत्कुमारो भगवान्यत्राऽऽस्ते हिमवद्गिरौ ॥ १२ ॥
नानादेवगणाकीर्णे यक्षगन्धर्वसेविते ।
सिद्धचारणकूष्माण्डैरप्सरोभिश्च संकुले ॥ १३ ॥
गङ्गा मन्दाकिनी यत्र राजते दुःखहारिणी ।
शोभिता हेमकमलैः पुष्पैरन्यैर्मनोहरैः ॥ १४ ॥
तस्याऽऽश्रममनुप्राप्य पाराशर्यो महामुनिः ।
अभिवाद्य यथान्यायं तस्याग्र उपविश्य च ॥ १५ ॥
कृताञ्जलिपुटो भूत्वा वाक्यमेतदुवाच ह ॥ १६ ॥

**व्यास उवाच**–प्राप्तं कलियुगं घोरं पुण्यमार्गबहिष्कृतम् ।
पाखण्डाचारनिरतं म्लेच्छान्धजनसंकुलम् ॥ १७ ॥
अधार्मिकाः क्रूरसत्त्वा ज्ञानाचोराल्पमेधसः ।
तस्मिन्युगे भविष्यन्ति ब्राह्मणाः शूद्रयाजकाः ॥ १८ ॥
स्नानं देवार्चनं दानं होमं च पितृतर्पणम् ।
स्वाध्यायं न करिष्यन्ति ब्राह्मणा हि कलौ युगे ॥ १९ ॥
*न पठन्ति तथा वेदाञ्श्रेयसे ब्राह्मणाधमाः ।
प्रतिग्रहार्थं वेदांश्च पठिष्यन्ति कलौ युगे ॥ २० ॥
पुरुषोत्तममाश्रित्य शिवनिन्दारता द्विजाः ।
कलौ युगे भविष्यन्ति तेषां त्राता न माधवः ॥ २१ ॥

* घसंज्ञितपुस्तकेऽयं श्लोको न विद्यते ।

१ (ख. ङ. ग.) यस्मि°। २ (च.) °रोगणसं°। ३ (घ.) °र्महोरगैः ॥ १४ ॥ ४ (क.ख.ग.ङ.)पाषण्डा°। ५ (घ.) °रमता ख्य°। (क.ख.) °रसहा ख्य°।६(ङ.)°चारैकतत्पराः ।त°७(ङ.)°याचकाः° ॥ १८ ॥ ८ (क. ख. ग. घ. च. छ.) °म् । परार्थे वै क°। ९ (ङ.च.छ.) °न्ति यथा°। १० (च.) हार्थेवेदाश्च संप्राप्ते तु क°।

स्वां स्वां वृत्तिं परित्यज्य परवृत्त्युपजीवकाः ।
ब्राह्मणाद्या भविष्यन्ति संप्राप्ते तु कलौ युगे ॥ २२ ॥
एतान्पापरतान्दृष्ट्वा राजानश्चाविचारकाः ।
भविष्यन्ति कलौ प्राप्ते वृथा जात्यभिमानिनः ॥ २३ ॥
उच्चासनगताः शूद्रा दृष्ट्वा च ब्राह्मणांस्तदा ।
न चलन्त्यल्पमतयः संप्राप्ते तु कलौ युगे ॥ २४ ॥
काषायिणश्च निर्ग्रन्था नग्नाः कापालिकास्तथा ।
बौद्धा वैशेषिका जैना भविष्यन्ति कलौ युगे ॥ २५ ॥
तपोयज्ञफलानां तु विक्रेतारो द्विजाधमाः ।
यतयश्च भविष्यन्ति शतशोऽथ सहस्रशः ॥ २६ ॥
विनिन्दन्ति महादेवं संसारान्मोचकं परम् ।
तद्भक्तांश्च महात्मानो ब्राह्मणां श्च कलौ युगे ॥ २७ ॥
*ताडयन्ति दुरात्मानो ब्राह्मणान्राजसेवकाः ।
न निवारयते राजा तान्दृष्ट्वाऽपि कलौ युगे ॥ २८ ॥
एवं घोरे कलियुगे किं तच्छ्रेयस्करं द्विज ।
ब्रूहि तद्भगवन्मह्यं संसारान्मोचकं परम् ॥ २९ ॥ १८० ॥

इति श्रीब्रह्मपुराणोपपुराणे श्रीसौरे भानुमनुसंवादे वाराणसी-
महिमकलियुगवर्णनं नाम चतुर्थोऽध्यायः ॥ ४ ॥

**सनत्कुमार उवाच**–गच्छ वाराणसीं व्यास यत्र विश्वेश्वरः शिवः ।
न तत्र युगधर्मोऽस्ति नैव लग्ना वसुंधरा ॥ १ ॥
विश्वेश्वरस्य यल्लिङ्गं ज्योतिर्लिङ्गं तदुच्यते ।
यस्मिन्दृष्टे क्षणाज्जन्तुः संसारं न पुनर्विशेत् ॥ २ ॥
गत्वा पश्य परं लिङ्गं तत्र सत्यवतीसुत ।
प्राप्स्यसे परमां मुक्तिं देवैरपि सुदुर्लभाम् ॥ ३ ॥
स्नात्वा गङ्गाजले पुण्ये पश्य विश्वेश्वरं परम् ।
स दास्यति परं ज्ञानं येन मुक्तो भविष्यति ॥ ४ ॥
दृष्ट्वा विश्वेश्वरं देवं यावत्तिष्ठति तत्क्षणात् ।
आगमिष्यन्ति मुनयस्त्वां द्रष्टुं सर्व एव ते ॥ ५ ॥

---

* खसंज्ञितपुस्तकेऽयं श्लोको न विद्यते ।

---

१ (ग.) °सारोन्मो°। २ (च. छ.) °ह्मणाश्च । ३ (ग.) °सारोन्मो°। ४ (ङ. च. छ.) पश्येत्परं ।

विश्वेश्वरस्य माहात्म्यं प्रक्ष्यन्ति त्वां महामुने।
ब्रूहिमद्वचनात्तेषां ज्ञानं माहेश्वरं[1] परम्॥ ६॥
एवं सत्यवतीसूनुस्तन्माहात्म्यमशेषतः।
सनत्कुमारात्स्वगुरोः श्रुत्वा माहेश्वराग्रणीः॥ ७॥
प्रणिपत्य गुरुं भक्त्या रुद्रं ब्रह्मादि[2]सेवितम्।
स शिष्यः प्रययौ शीघ्रं व्यासो वाराणसीं[3] प्रति॥ ८॥
**मनुरुवाच**—गत्वा वाराणसीं व्यासः सिद्धर्षिमुनिसेविताम्।
[4]अकरोत्किं तदाचक्ष्व भगवन्विश्वपूजित॥ ९॥
**भानुरुवाच**—संप्राप्य काशीं धर्मात्मा कृष्णद्वैपायनो मुनिः।
स्नात्वा यथावज्जाह्नव्यां तर्पयित्वा सुरान्पितॄन्॥ १०॥
ययौ विश्वेश्वरं द्रष्टुं ज्योतिर्लिङ्गमनामयम्।
संपूज्य सर्वभावेन दण्डवत्प्रणिपत्य च॥ ११॥
देवस्य दक्षिणा मूर्तावुपविश्य महामुनिः।
पश्यन्विश्वेश्वरं लिङ्गं जपन्वै[5] शतरुद्रियम्॥ १२॥
क्षणाल्लिङ्गात्परं ज्योतिराविर्भूतं निरञ्जनम्।
सूक्ष्मात्सूक्ष्मं च परममानन्दं तमसः परम्॥ १३॥
आदिमध्यान्तरहितं सूर्यकोटिसमप्रभम्।
यत्तन्माहेश्वरं ज्योतिर्वेदान्तेषु प्रतिष्ठितम्॥ १४॥
दर्शनात्तस्य च मुनेः पाराशर्यस्य धीमतः।
दिव्यं माहेश्वरं ज्ञानमुद्भूतं केवलं शिवम्॥ १५॥
मेने कृतार्थमात्मानं दुःखत्रयविवर्जितम्।
अद्वयं निर्गुणं शान्तं जीवन्मुक्तस्तदा मुनिः॥ १६॥
अहो विश्वेश्वरो देवः कथं कैर्वा न सेव्यते।
यस्मिन्दृष्टे क्षणाज्ज्ञानमुदितं मम निर्मलम्॥ १७॥
नमो भगवते तुभ्यं विश्वनाथाय शूलिने।
पिनाकिने जगत्कर्त्रे विश्वमायाप्रवर्तिने॥ १८॥
दुर्विज्ञेयाप्रमेयाय परमानन्दरूपिणे।
[6]भक्तिप्रियाय सूक्ष्माय पार्वतीशाय ते नमः॥ १९॥

---

१ (ङ. च. छ.) °रं मुने॥ ६॥ २ (क. ख. ग.) °दिदैवत°। ३ (घ. ङ. च. छ.) °सीं पुरीम्॥ ८॥ ४ (ङ.) °म्। तं पू°। ५ (घ. ङ. च. छ.) जपित्वा श°। ६ (क. ख. ग.) नमद्रुतं।

नमो जगत्प्रतिष्ठाय जगज्जननहेतवे ।
संहर्त्रे ऋग्यजुःसाममूर्तये तत्प्रवर्तिने ॥ २० ॥
जानाति कस्त्वां विश्वेश तत्त्वतो मादृशो जनः ।
वेदा अपि न जानन्ति साङ्गोपनिषदक्रमाः ॥ २१ ॥
**भानुरुवाच**—अथ तस्मिन्महादेवे परंज्योतिषि विश्वभुक् ।
शूलपाणिरमेयात्मा प्रादुरासीद्वृषध्वजः ॥ २२ ॥
ततस्तमब्रवीद्वाक्यं कारुण्याच्छुभया गिरा ।
वरं वरय दास्यामि येत्ते मनसि रोचते ॥ २३ ॥
**व्यास उवाच**—भगवन्कृतकृत्योऽस्मि दर्शनात्तव शंकर ।
जातं त्वद्विषयं ज्ञानं देवानामपि दुर्लभम् ॥ २४ ॥
भक्तिं परे भगवति त्वय्येवाव्यभिचारिणीम् ।
देहि मे देवदेवेश नान्यदिष्टं वरं मम ॥ २५ ॥
**भानुरुवाच**—एवमस्त्वति देवेशो व्यासायामिततेजसे ।
वरं दत्वा मुनीन्द्राय क्षणादन्तर्हितोऽभवत् ॥ २६ ॥
तस्माद्व्यासात्परो नान्यः शिवभक्तो जगत्त्रये ।
कृष्णो वा देवकीसूनुरर्जुनो वा महामतिः ॥ २७ ॥
एवं हराल्लब्धवरः कृष्णद्वैपायनः प्रभुः ।
तत्र यानि च लिङ्गानि तानि द्रष्टुं ययौ मुनिः ॥ २८ ॥२०८॥

इति श्रीब्रह्मपुराणोपपुराणे श्रीसौरे भानुमनुसंवादे महादेव-
वरप्रदानं नाम पञ्चमोऽध्यायः ॥ ५ ॥

**ऋषय ऊचुः**—कानि दिव्यानि लिङ्गानि यानि द्रष्टुं ययौ मुनिः ।
आचक्ष्व तानि नः सूत माहात्म्यं चापि कृत्स्नशः ॥ १ ॥
**सूत उवाच**—यदुक्तं भानुना पूर्वं मनवे मुनिसत्तमाः ।
तदेव कथयिष्यामि शृणुध्वं गदतो मम ॥ २ ॥
आग्नेय्यामविमुक्तस्य वापी त्रैलोक्यविश्रुता ।
यत्र सन्निहितो देवो नित्यं विश्वेश्वरः शिवः ॥ ३ ॥
यत्र स्नानं द्विजश्रेष्ठा देवानामपि दुर्लभम् ।
भक्त्या येस्तज्जलं पीतं ते रुद्रा एव भूतले ॥ ४ ॥

---

१ (घ. ङ. च. छ.) तन्त्रव°। २ (क.) °स्त्वां देवेशं त°। (ख. ग.) °स्त्वां देवेश। ३ (च.) °श्वेशं त°। ४ (क. ख.) °वीद्व्यास का°। (ग.) °वीद्व्यास का°। ५ (क. ख. ग.) यस्ते म°। ६ (क. ख. ग.) °ति विश्वेशो। ७ (क. ख. ग.) °तो नित्यं देवो वि°। ८ (क. ख. ग.) तत्र।

तेषां लिङ्गानि जायन्ते हृदये त्रीणि सुव्रताः ।
दुर्लभं तज्जलं तस्मात्तिष्ठत्येव हि मुद्रितम् ॥ ५ ॥
तत्र सत्यवती सूनुः स्नात्वा चैव यथाविधि ।
अविमुक्तेश्वरं दृष्ट्वा लाङ्गलीशं ततो ययौ ॥ ६ ॥
तत्र ब्रह्मादयो देवाः सेवन्ते शूलपाणिनम् ।
तस्य दर्शनमात्रेण ज्ञानं पाशुपतं भवेत् ॥ ७ ॥
जगाम स मुनिः पश्चाद्द्रष्टुं वै तारकेश्वरम् ।
यमान्तकाले भगवाञ्ज्ञानं तत्संप्रयच्छति ॥ ८ ॥
यत्रैवानेन देवस्य स्थापितं लिङ्गमुत्तमम् ।
यस्य दर्शनमात्रेण ब्रह्महत्यां व्यपोहति ॥ ९ ॥
तद्दृष्ट्वा[1] परमं लिङ्गं व्यासः सत्यवतीसुतः ।
ययौ शुक्रेश्वरं[2] द्रष्टुं सर्वसिद्धिप्रदायकम् ॥ १० ॥
*आराध्य मुनिना यत्र शुक्रेणामिततेजसा ।
प्राप्ता संजीविनी विद्या सुराणामपि दुर्लभा ॥ ११ ॥
देवस्य वह्निदिग्भागे कूपस्तिष्ठति शोभनः ।
स्नानं तत्राश्वमेधस्य फलं यच्छति शोभनम् ॥ १२ ॥
तस्मिन्कूपे मुनिः स्नात्वा दृष्ट्वा शुक्रेश्वरं शिवम् ।
ब्रह्मेश्वरं ययौ द्रष्टुं[3] तत्र ब्रह्मा विराट् स्वयम् ॥ १३ ॥
तपस्तप्त्वा महाघोरं[4] प्रीतये पार्वतीपतेः ।
ब्रह्मत्वं प्राप्तवान्ब्रह्मा योगं चान्ये महर्षयः ॥ १४ ॥
दर्शनात्तस्य[5] लिङ्गस्य सर्वयज्ञफलं लभेत् ।
पुनर्जगाम भगवानोंकारेश्वरमव्ययम् ॥ १५ ॥
स्मरणाद्यस्य लिङ्गस्य मुच्यते सर्वपातकैः ।
यत्र साक्षाच्छिवः सूक्ष्मो नित्यं तिष्ठति वै द्विजाः ॥ १६ ॥
अनुग्रहाय लोकानां पशुपाशविमोचकः ।
यत्र पाशुपताः सिद्धा ओंकारेश्वरमीश्वरम् ॥ १७ ॥
संपूज्य परमां सिद्धिं प्राप्तवन्तो द्विजोत्तमाः ।
कृष्णपक्षे चतुर्दश्यां तस्मिंल्लिङ्ग उपोषितः ॥ १८ ॥

---

* अयं श्लोको घङचछसंज्ञितपुस्तकेषु नास्ति ।

---

१ ( घ. च. छ. ) तं दृष्ट्वा । २ ( घ. ङ. च छ. ) ०रं लिङ्गं द्रष्टुं सि०। ३ ( ङ. च. छ. ) द्रष्टुं यत्र । ४ ( क ख. ग. ) महदघोरं । ५ ( ङ. ) ०णात्तस्य ।

यदि जागरणं कुर्यात्परां सिद्धिमवाप्नुयात् ।
ततः सत्यवतीसूनुः कृत्तिवासेश्वरं ययौ ॥ १९ ॥
उपासते महादेवं यत्र ब्रह्मादयः सुराः ।
मुनयः[1] शंसितात्मानो रुद्रजाप्यपरायणाः ॥ २० ॥
कृत्तिवासेश्वरे लिङ्गे लीलाश्च बहवो द्विजाः ।
देवस्य पूर्वदिग्भागे हंसतीर्थं महत्सरः[2] ॥ २१ ॥
स्नात्वा तत्र महादेवं कृत्तिवासेश्वरं[3] शिवम् ।
*ये द्रक्ष्यन्ति महात्मानस्ते वै ब्रह्मादिवन्दिताः ॥ २२ ॥
सकृत्पश्यति यो भक्त्या कृत्तिवासेश्वरं विभुम् ।
न पतत्येव संसारे रुद्र एव न संशयः ॥ २३ ॥
हंसतीर्थे नरः स्नात्वा कृत्तिवासेश्वरं विभुम् ।
संपूज्य परया भक्त्या कृत्तिवासेश्वरं शिवम् ॥ २४ ॥
न पतत्येव संसारे नात्रकार्या विचारणा ।
ययौ रत्नेश्वरं द्रष्टुं मोक्षो यत्र प्रतिष्ठितः ॥ २५ ॥
दर्शनात्तस्य लिङ्गस्य फलं वक्तुं न शक्यते ।
सर्वस्मादधिको योगो वेदविद्भिर्निषेव्यते ॥ २६ ॥
योऽयं पाशुपतो योगः पशुपाशविमोचकः ।
वर्षैर्द्वादशभिः सम्यकृते पाशुपते द्विजाः ॥ २७ ॥
रत्नेश्वरे तदा ज्योतिर्दर्शनान्मनुजोत्तमः[4] ।
रत्नेश्वरं[5] तु संपूज्य पाराशर्यो महामुनिः ॥ २८ ॥
द्रष्टुं देवाधिदेवेशं वृद्धकालेश्वरं ययौ ।
तस्मिँल्लिङ्गे महादेवः सदा तिष्ठति लीलया ॥ २९ ॥
अनुग्रहाय लोकानामुमया सह विश्वभुक् ।
पृथिव्यां यानि लिङ्गानि सन्ति दिव्यानि वै द्विजाः ॥ ३० ॥
वृद्धकालेश्वरे दृष्टे दृष्टान्येव न संशयः ।
देवस्य पूर्वदिग्भागे कूपो मुनिनिषेवितः ॥ ३१ ॥
पूरितः पुण्यसलिलैर्देवदेवेन शंभुना ।
यैः पीतं तस्य सलिलं प्राकृतैश्चुलुकत्रयम् ॥ ३२ ॥

* घङचछसंज्ञितपुस्तकेष्वयं श्लोको नास्ति ।

१ (क. ख. ग.) ०यः संशिता०। २ (क. ख. ग.) महासरः । ३ (ख.) ०रं विभुम् ।
४ (क. ख. ग.) कृष्णद्वैपायनो मुनिः । ययौ । ५ (घ.) ०नजेश्वरः । र०।

प्रकृतिर्मुच्यते तेभ्यो मुक्तात्मानो भवन्ति ते ।
तत्र द्वैपायनो विप्राः स्नानं कृत्वा समाहितः ॥ ३३ ॥
वृद्धकालेश्वरं[2] लिङ्गं संपूज्य च ततो ययौ ।
मन्दाकिनीतटे रम्ये मुनिसिद्धनिषेविते ॥ ३४ ॥
मध्यमेश्वरनामानं मोक्षलिङ्गमनुत्तमम् ।
यत्र ब्रह्मादयो देवा मुनयः सनकादयः ॥ ३५ ॥
उपासते परं लिङ्गं शिवदर्शनकाङ्क्षिणः ।
मन्दाकिन्यां मुनिः स्नात्वा दृष्ट्वा वै मध्यमेश्वरम् ॥ ३६ ॥
घण्टाकर्णह्रदे[3] स्नात्वा लिङ्गं तद्विमलं शिवम् ।
प्रतिष्ठाप्य मुनिश्रेष्ठो लब्धवाञ्ज्ञानमुत्तमम् ॥ ३७ ॥
घण्टाकर्णह्रदे[4] तत्र दृष्ट्वा व्यासेश्वरं शिवम् ।
यत्र यत्र मृतो वाऽपि वाराणस्यां मृतो भवेत् ॥ ३८ ॥
ततः सत्यवतीसूनुः कपर्दीश्वरमीश्वरम् ।
द्रष्टुं जगाम विप्रेन्द्रा लिङ्गं तत्पारमेश्वरम् ॥ ३९ ॥
पिशाचमोचनं नाम तत्र तीर्थमनुत्तमम्[5] ।
रुद्रलोकस्य सोपानमिति प्राह महामुनिः ॥ ४० ॥
ये द्रक्ष्यन्ति कपर्दीशं कृतार्थास्ते न संशयः ।
मानुषीं तनुमाश्रित्य रुद्रा एव न संशयः ॥ ४१ ॥
तस्मिंस्तीर्थे[7] मुनिः स्नात्वा संतर्प्य च सुरान्पितॄन् ।
कपर्दीश्वरमीशानं संपूज्य प्रययौ मुनिः ॥ ४२ ॥ २५० ॥

इति श्रीब्रह्मपुराणोपपुराणे श्रीसौरे सूतशौनकसंवादे वाराणसी-
लिङ्गमहिमवर्णनं नाम षष्ठोऽध्यायः ॥ ६ ॥

**सूत उवाच**—पुनर्जगाम भगवान्कृष्णद्वैपायनः प्रभुः ।
द्रष्टुं दक्षेश्वरं देवं भक्तानां सिद्धिदायकम् ॥ १ ॥
यच्छिवावज्ञया पापं जातं दक्षप्रजापतेः ।
तस्य पापस्य मोक्षाय तस्मिँल्लिङ्गे द्विजोत्तमाः ॥ २ ॥
आराध्य देवदेवेशं बहून्यब्दशतानि वै ।
तस्य प्रसन्नो भगवान्देवदेवः सहोमया ॥ ३ ॥

---

१ (क.) विप्रः स्ना० । २ (क. ख. ग.) ०रं देवं सं० । ३ (क. ख. ग.) ०दे तत्र लि० । ४ (क. ख. ग.) ०दे स्नात्वा दृ० । ५ (क.) ०म् । इन्द्रलो० । ६ (क. च. छ.) ०नुपीत० । ७ (घ. ङ. च. छ.) ०र्थेनरः स्ना० ।




ददौ माहेश्वरं योगं तस्मै दक्षाय धीमते ।
लब्ध्वा तं परमं योगं तस्मिँल्लिङ्गे लयं गतः ॥ ४ ॥
ततः प्रभृति तल्लिङ्गं योगिभिः सेव्यते द्विजाः ।
योगं ददाति सर्वेषां देवो दक्षेश्वरः शिवः ॥ ५ ॥
गङ्गायां प्रयतः स्नात्वा दृष्ट्वा दक्षेश्वरं शिवम् ।
प्राप्नोति परमं योगमिति द्वैपायनोऽब्रवीत् ॥ ६ ॥
स्नात्वा सत्यवतीसूनुर्गङ्गायां प्रयतो द्विजाः ।
दृष्ट्वा दक्षेश्वरं देवं ययौ पश्चात्त्रिलोचनम् ॥ ७ ॥

**ऋषय ऊचुः**—हेतुना केन दक्षस्य निन्दाऽभूच्छांकरी पुरा ।
कारणं वद तत्सूत श्रोतुं वाञ्छा प्रवर्तते ॥ ८ ॥

**सूत उवाच**—आसीद्ब्रह्मसुतो दक्षः पुनः प्राचेतसोऽभवत् ।
शप्तो देवेन रुद्रेण क्रोधाच्छंभोरवज्ञया ॥ ९ ॥
वैरं निधाय मनसि शंभुना सह सुव्रताः ।
दक्षः प्राचेतसो यज्ञमकरोज्जाह्नवीतटे ॥ १० ॥
तस्मिन्यज्ञे समाहूता इन्द्राद्या देवतागणाः ।
ऋषयो मुनयः सिद्धा राजानः प्रथितौजसः ॥ ११ ॥
ब्रह्मा च विष्णुना सार्धमाहूतस्तेन धीमता ।
देवान्सर्वांश्च भागार्थमाहूतान्पद्मसंभवः ॥ १२ ॥
दृष्ट्वा शिवेन रहितान्दक्षं प्रत्येवमब्रवीत् ।

**ब्रह्मोवाच**—अहो दक्ष महामूढ दुर्बुद्धे किं कृतं त्वया ।
देवाः सर्वे समाहूताः शंकरेण विना कथम् ॥ १३ ॥
अन्तर्यामी स विश्वेशः सर्वेषामेव देहिनाम् ।
भोक्ता स सर्वयज्ञानां शंकरः परमार्थतः ॥ १४ ॥
एते च मुनयः सर्वे तव साहाय्यकारिणः ।
न जानन्ति परं भावं महादेवस्य शूलिनः ॥ १५ ॥
एते च देवाः शक्राद्या आगता यज्ञभागिनः ।
तन्मायामोहिताः सर्वे न जानन्ति पिनाकिनम् ॥ १६ ॥
यस्य पादरजःस्पर्शाद्ब्रह्मत्वं प्राप्तवानहम् ।
शार्ङ्गिणाऽपि सदा मूर्ध्ना धार्यते कः शिवात्परः ॥ १७ ॥

---

१ ( घ. ) °ते मुधाः । यो°। २ ( च. ) गर्गायां । ३ ( क. ख. ग. ) °तो रुद्रेण देवेन क्रो°। ४ ( क. ख. ग. ) °देवांश्च सर्वान्भागा°। ५ ( क. ख. ग. ) °मागता°।

यस्य वामाङ्गजो विष्णुर्दक्षिणाङ्गाद्भवाम्यहम्।
यस्याऽऽज्ञयाऽखिलं विश्वं सूर्यो भ्रमति सर्वदा ॥ १८ ॥
चन्द्रश्च तारकाश्चैव ग्रहाश्च भुवनानि च।
धर्माधर्मव्यवस्था च वर्णाश्चैवाऽऽश्रमाणि च ॥ १९ ॥
तिष्ठन्ति शासनात्तस्य देवदेवस्य शूलिनः।
सा च शक्तिः परा गौरी स्वेच्छाविग्रहधारिणी ॥ २० ॥
तव पुत्रीति दुर्बुद्धे मन्यसे तमसाऽऽवृतः।
कस्तां जानाति विश्वेशीमीश्वरार्धशरीरिणीम् ॥ २१ ॥
अहं नाद्यापि जानामि चक्री शक्रस्य का कथा।
स्वेच्छाविग्रहरूपिण्या गौर्या सह पिनाकधृक् ॥ २२ ॥
भ्रामयत्यखिलं विश्वमिति सत्यं न संशयः।
स एव बध्नाति पशूनस्मदादीन्महेश्वरः ॥ २३ ॥
स एव मोचको देवः पशूनां न इतिश्रुतिः।
नामसंकीर्तनाद्यस्य भिद्यते पापपञ्जरम् ॥ २४ ॥
कथं न पूज्यते देवस्त्वया दक्ष सुदुर्मते।
शंभोरवज्ञा यत्राऽऽस्ते स्थातव्यं नैव सूरिभिः ॥ २५ ॥
इत्युक्त्वा प्रययौ ब्रह्मा स्तूयमानो महर्षिभिः ॥ २६ ॥

**सूत उवाच**—गते चतुर्मुखे देवे सर्वलोकपितामहे।
दधीचिरब्रवीद्दक्षं मुनीनामग्रणीः स्वयम् ॥ २७ ॥

**दधीचिरुवाच**—कथं देवाधिदेवेशः कर्मसाक्षी सनातनः।
विश्वेश्वरो महादेवस्त्वया दक्ष न पूज्यते ॥ २८ ॥
वाचकः प्रणवो यस्य ज्ञानमूर्तेरुमापतेः।
अनुग्रहं विना तस्य कथं जानाति शूलिनम् ॥ २९ ॥
एक एवेति यो रुद्रः सर्ववेदेषु गीयते।
तस्य प्रसादलेशेन मुक्तिर्भवति किंकरी ॥ ३० ॥
प्रसङ्गात्कौतुकाल्लोभाद्भयादज्ञानतोऽपि वा।
हर इत्युच्चरन्मर्त्यः सर्वपापैः प्रमुच्यते ॥ ३१ ॥
अहो दक्ष तवाज्ञातं तव नाशस्य कारणम्।
केनापि हेतुना जातमिति मे भाति निश्चितम् ॥ ३२ ॥



---

१ (घ. ङ.) ०णाङ्गकरो ब्रह्म०। २ (क.ख.ग.) ०लं सर्वं सू०। ३ (क. ख. ग.) ०मास्तथा ॥ १९ ॥ ४ (क.ख.ग.) ०हकारि०। ५ (घ.) ०नामि शू०। ६ (क.ख.ग.च.) ०र्वदेवेषु।

एवं दधीचेर्वचनं श्रुत्वा दक्षो विचक्षणः ।
दधीचिमब्रवीद्विप्राः शक्रादीनां च संनिधौ ॥ ३३ ॥

दक्ष उवाच–नाहं नारायणाद्देवात्पश्याम्यन्यं द्विजोत्तम ।
कारणं सर्ववस्तूनां नास्तीत्येव सुनिश्चितम् ॥ ३४ ॥

दधीचिरुवाच–उमया सह यो देवः सोम इत्युच्यते बुधैः ।
स एव कारणं नान्यो विष्णोरपि हि वै श्रुतिः ॥ ३५ ॥
तस्माद्यः सर्वदेवानामधिकश्चन्द्रशेखरः ।
इज्यते सर्वयज्ञेषु कथं दक्ष न पूज्यते ॥ ३६ ॥
यज्ञस्य पालको विष्णुरिति यन्निश्चितं त्वया ।
भविष्यत्यन्यथैवाशु पश्यतः कमलापतेः ॥ ३७ ॥
एते च ब्राह्मणाः सर्वे ये द्विषन्ति महेश्वरम् ।
भवन्तु वेदबाह्यास्ते तमोपहतचेतसः ॥ ३८ ॥
पाषण्डाचारनिरताः सर्वे निरयगामिनः ।
कलौ युगे तु संप्राप्ते दरिद्राः शूद्रयाजकाः ॥ ३९ ॥
सर्वस्मादधिको रुद्रः पशुपाशविमोचकः ।
पराङ्मुखस्तु युष्माकं मा भूदिज्याकरी गतिः ॥ ४० ॥
इति शप्त्वा ययौ विप्रो दधीचिर्मुनिपुङ्गवः ।
स्वाश्रमं मुनिभिर्जुष्टमोंकारं नर्मदातटे ॥ ४१ ॥
एतस्मिन्नन्तरे गौरी परव्योमात्मिका शिवा ।
दक्षयज्ञस्य वृत्तान्तं श्रुत्वा देवऋषेर्मुखात् ॥ ४२ ॥
प्राह विश्वाधिकं रुद्रं प्रणतार्तिप्रभञ्जनम् ।
निरीक्ष्यमाणं देवेशी परानन्दैकविग्रहम् ॥ ४३ ॥

श्रीदेव्युवाच–योऽयं प्राचेतसो दक्षः पिता मे पूर्वजन्मनि ।
आवामवज्ञाय कथं यज्ञं कर्तुं प्रचक्रमे ४४ ॥
देवाः सर्वे समाहूता विष्णुना सह शंकर ।
आदित्या वसवो रुद्राः साध्याश्चैव मरुद्गणाः ॥ ४५ ॥
ऋषयो मुनयः सिद्धा दैतेया दानवाश्च ये ।
राजानश्च महाभागा गन्धर्वाः किंनरास्तथा ॥ ४६ ॥

---

१ ( घ. ङ. ) ०त्येवं सु०। २ ( क.ख. ग. ) सहितो दे०। ३ ( ङ. छ. ) ०पि ह वै। ४ ( क. ख. ग. ) ०स्मात्स स० ( घ. ङ. ) ०स्माच्च स०। ५( क. ख. ग. ) ०षन्तो म०। ६ ( क. ख. ग. ) ०भूत्पारत्रिकी ग०। ७ ( च. ) प्रपन्नार्ति०। ८ ( घ. ) ०वेशं प० ९ ( घ. ङ. च. छ. ) ०यं कर्तुं यज्ञं प्र० ।

अवज्ञाकारिणस्तस्य यज्ञं शीघ्रं विनाशय।
तेन मे जायते प्रीतिरतुला भक्तवत्सल ॥ ४७ ॥
एवं देव्या वचः श्रुत्वा देवदेवः पिनाकधृक्।
असृजत्तत्क्षणाच्छंभुर्वीरभद्रं महाबलम् ॥ ४८ ॥
सहस्रसिंहवदनं प्रलयाग्निसमप्रभम्।
सहस्रबाहुं जटिलं दुष्टानां च भयंकरम् ॥ ४९ ॥
भक्तानां वरदं देवं सूर्यसोमाग्निलोचनम्।
उमाकोपोद्भवा देवी भद्रकाली भयंकरी ॥ ५० ॥
अन्याश्च देव्यो रुद्राश्च शतशो रोमसंभवाः।
भद्रकाल्या सह तदा वीरभद्रो महाबलः ॥ ५१ ॥
प्रहितो देवदेवेन दक्षयज्ञजिघांसया।
गत्वा स यज्ञं दक्षस्य भस्मसादकरोद्द्विजाः ॥ ५२ ॥
दक्षस्तदद्भुतं कर्म दृष्ट्वाऽथ भयविह्वलः।
गतस्तच्छरणं शीघ्रं वीरभद्रस्य शूलिनः ॥ ५३ ॥
उवाच वीरभद्रस्तं दक्षं प्राचेतसं द्विजाः।
तस्य पापविमोक्षाय कारुण्यामृतवारिधिः ॥ ५४ ॥

**वीरभद्र उवाच**–गच्छ वाराणसीं दक्ष सर्वपापप्रणाशनीम्।
अनुग्रहार्थं लोकानां यत्र तिष्ठति शंकरः ॥ ५५ ॥
अनुग्रहाद्भगवतो देवदेवस्य शूलिनः।
अनेनैव शरीरेण तत्र मोक्षं गमिष्यसि ॥ ५६ ॥

**सूत उवाच**–वीरभद्रस्य वचनं श्रुत्वा दक्षो महामतिः।
गत्वा वाराणसीं शीघ्रं सर्वसङ्गविवर्जितः ॥ ५७ ॥
प्रतिष्ठाप्य महालिङ्गं गङ्गातीरे मनोरमे।
आराध्य परया भक्त्या तस्मिँल्लिङ्गे लयं गतः ॥ ५८ ॥
दक्षेश्वरस्य माहात्म्यं कथितं मुनिपुङ्गवाः।
त्रिलोचनस्य माहात्म्यं सांप्रतं वर्ण्यते मया ॥ ५९ ॥ ३०९ ॥

इति श्रीब्रह्मपुराणोपपुराणे श्रीसौरे सूतशौनकसंवादे दक्षेश्वर-
माहात्म्यादिकथनं नाम सप्तमोऽध्यायः ॥ ७ ॥

**सूत उवाच**–त्रिलोचनात्परं लिङ्गं वाराणस्यां न दृश्यते।
सदा संनिहितो नित्यं यस्मिँल्लिङ्गे शिवः स्थितः ॥ १ ॥

---

१ (घ. ङ. च छ.) ०वाः। रुद्र०। २ (क. ख. ग.) ०लः। ययौ तच्छ०। ३ (ङ.) ०हाय लो०। ४ (क. ख. ग.) ०त्यं तस्मि०। ५ (घ. ङ.) ०ङ्गे प्रतिष्ठितः।

यानि स्थितानि लिङ्गानि वाराणस्यां द्विजोत्तमाः ।
दृष्टान्येव भवन्त्येव दृष्टे लिङ्गे त्रिलोचने ॥ २ ॥
असंख्यातानि पापानि ज्ञानतोऽज्ञानतोऽपि वा ।
कृतानि नाशयत्येवं देवदेवस्त्रिलोचनः ॥ ३ ॥
मायापाशेन बद्धानां सर्वेषां प्राणिनामपि ।
मुक्तिं ददाति परमां देवदेवस्त्रिलोचनः ॥ ४ ॥
पश्चिमाभिमुखं लिङ्गं सर्पमेखलमण्डितम् ।
तस्य दर्शनमात्रेण कोटिलिङ्गार्चनं फलम् ॥ ५ ॥
त्रिलोचनं समभ्यर्च्य कृष्णद्वैपायनो मुनिः ।
ययौ कामेश्वरं द्रष्टुं सिद्धलिङ्गमनुत्तमम् ॥ ६ ॥
ददौ दुर्वाससे यत्र देवदेवो महेश्वरः ।
प्रसन्नो विविधाः सिद्धीः सर्वेषामपि दुर्लभाः ॥ ७ ॥
अन्यश्चापि वरो दत्तो देवदेवेन शूलिना ।
कृतानां क्रियमाणानां सर्वेषां तपसामपि ॥ ८ ॥
क्रोधो नाशकरः प्रोक्तो ह्यन्यथैव मुने स्तुते ।
तस्य दक्षिणदिग्भागे कामकुण्डमिति स्मृतम् ॥ ९ ॥
तत्र स्नात्वा नरो भक्त्या दृष्ट्वा कामेश्वरं शिवम् ।
ब्रह्महत्यादिभिः पापैर्मुक्तो याति परां गतिम् ॥ १० ॥
अन्यान्यपि च लिङ्गानि वाराणस्यां स्थितान्यपि ।
संख्यामपि न जानाति तेषां देवश्चतुर्मुखः ॥ ११ ॥
को वा वदति माहात्म्यमृते देवान्महेश्वरात् ।
नन्दीश्वरो वा जानाति प्रसादाद्गिरिजापतेः ॥ १२ ॥
अथ सत्यवतीसूनुर्द्रष्टुं देवीं शिवां पराम् ।
विशालाक्षीं द्विजश्रेष्ठा यत्र संनिहिता शिवा ॥ १३ ॥
तां दृष्ट्वा विधिवद्भक्त्या संपूज्य च महामुनिः ।
परानन्दात्मिकां गौरीं स्तुतिं मत्वा चकार सः ॥ १४ ॥

**व्यास उवाच**–विशालाक्षि नमस्तुभ्यं परब्रह्मात्मिके शिवे ।
त्वमेव माता सर्वेषां ब्रह्मादीनां दिवौकसाम् ॥ १५ ॥

---

१ (घ. ङ. च. छ.) ०व दृष्टे लिङ्गे त्रिलोचने ॥ ३ ॥ २ (क. ख. ग. च. छ.) परां न०। ३ (क. ख. ग.) ०तिं गत्वा ।

इच्छाशक्तिः क्रियाशक्तिर्ज्ञानशक्तिस्त्वमेव हि ।
ऋज्वी कुण्डलिनी सूक्ष्मा योगसिद्धिप्रदायिनी ॥ १६ ॥
स्वाहा स्वधा महाविद्या मेधा लक्ष्मीः सरस्वती ।
सती दाक्षायणी विद्या सर्वशक्तिमयी शिवा ॥ १७ ॥
अपर्णा चैकपर्णा च तथा चैकैकपाटला ।
उमा हैमवती चापि कल्याणी चैव मातृका ॥ १८ ॥
ख्यातिः प्रज्ञा महाभागा लोके गौरीति विश्रुता ।
गणाम्बिका महादेवी नन्दिनी जातवेदसी ॥ १९ ॥
सावित्री वरदा पुण्या पावनी लोकविश्रुता ।
आयेती नियती रौद्री दुर्गा भद्रा प्रमाथिनी ॥ २० ॥
कालरात्री महामाया रेवती भूतनायिका ।
गौतमी कौशिकी चाऽऽर्या चण्डी कात्यायनी सती ॥ २१ ॥
वृषध्वजा शूलधरा परमा ब्रह्मचारिणी ।
महेन्द्रोपेन्द्रमाता च पार्वती सिंहवाहना ॥ २२ ॥
एवं स्तुत्वा विशालाक्षीं दिव्यैरेतैः सुनामभिः ।
कृतकृत्योऽभवद्व्यासो वाराणस्यां द्विजोत्तमाः ॥ २३ ॥
वाराणस्यां विशालाक्षी गङ्गा विश्वेश्वरः शिवः ।
भक्तिः पशुपतौ तत्र दुर्लभं हि चतुष्टयम् ॥ २४ ॥
यः पश्यति विशालाक्षीं स्नात्वा गङ्गाम्भसि द्विजाः ।
अश्वमेधसहस्रस्य फलमाप्नोत्यनुत्तमम् ॥ २५ ॥
वाराणस्यास्तु माहात्म्यमिति किंचिन्मयोदितम् ।
यः पठेच्छृणुयाद्वाऽपि याति माहेश्वरं पदम् ॥ २६ ॥ ३३९ ॥

इति श्रीब्रह्मपुराणोपपुराणे श्रीसौरे सूतशौनकसंवादे त्रिलोचनमाहात्म्यादिकथनं नामाष्टमोऽध्यायः ॥ ८ ॥

**ऋषय ऊचुः**—किं लक्षणं पुराणानां तेषां दानेन किं फलम् ।
अन्येषामपि दानानां व्रतानां च विशेषतः ॥ १ ॥
वर्णानामाश्रमाणां च तेषां वै लक्षणं यथा ।
ततः श्राद्धविधानं च प्रायश्चित्तं कथं भवेत् ॥ २ ॥

---

१ ( ङ. ) ०णी शर्वा स० । २ ( घ. ) त्रिधा स० । ३ ( च. छ. ) ०र्णावा त० । ४ ( क. ख. ग. ) ०था विकटपाटली । उ० । ५ ( क. ख. ग. ) ०तां चैव क० । ६ ( ख. ग. ) ०यातीनि० । ७ ( ख. ग. ) ०रात्रिर्महा० । ८ ( ङ. ) ०हारात्री रे० । ९ ( घ. ङ. च. छ. ) ०णी । माहे० । १० ( क. ख. ग. ) ०तैस्तु ना० ।

सर्वमेतदशेषेण सूत नो वक्तुमर्हसि ।
सूत उवाच–यदुक्तं भानुना पूर्वं पुत्राय मनवे द्विजाः ।
तदहं संप्रवक्ष्यामि शृणुध्वं गदतो मम ॥ ३ ॥
सर्गश्च प्रतिसर्गश्च वंशा मन्वन्तराणि च ।
वंशानुचरितं चैव पुराणं पञ्चलक्षणम् ॥ ४ ॥
ब्राह्मादीनां पुराणानामुक्तमेतत्तु लक्षणम् ।
एतच्चोपपुराणानां खिलत्वाल्लक्षणं स्मृतम् ॥ ५ ॥
ब्राह्मं पुराणं तत्राऽऽद्यं संहितायां विभूषितम् ।
श्लोकानां दशसाहस्रं नानापुण्यकथायुतम् ॥ ६ ॥
पाद्मं द्वितीयं कथितं तृतीयं वैष्णवं स्मृतम् ।
चतुर्थं वायुना प्रोक्तं वायवीयमिति स्मृतम् ॥ ७ ॥
ततो भागवतं प्रोक्तं भागद्वयविभूषितम् ।
चतुर्भिः पर्वभिः प्रोक्तं भविष्यं तदनन्तरम् ॥ ८ ॥
नारदीयं तथाऽऽग्नेयं मार्कण्डेयमतः परम् ।
दशमं ब्रह्मवैवर्तं लिङ्गमेकादशं परम् ॥ ९ ॥
भागद्वयेन लैङ्गं च ततो वाराहमुत्तमम् ।
संयुक्तमष्टभिः खण्डैः स्कान्दं चैवातिविस्तरम् ॥ १० ॥
ततस्तु वामनं कौर्मं भागद्वयविराजितम् ।
मात्स्यं च गारुडं प्रोक्तं ब्रह्माण्डं च ततः परम् ॥ ११ ॥
भागद्वयेन कथितं ब्रह्माण्डमिति संज्ञितम् ।
खिलान्युपपुराणानि यानि चोक्तानि सूरिभिः ॥ १२ ॥
इदं ब्रह्मपुराणस्य खिलं सौरमनुत्तमम् ।
संहिताद्वयसंयुक्तं पुण्यं शिवकथाश्रयम् ॥ १३ ॥
आद्या सनत्कुमारोक्ता द्वितीया सूर्यभाषिता ।
इयं पुण्यतमा ख्याता संहिता पापनाशिनी ॥ १४ ॥
वैवस्वताय मनवे कथिता रविणा पुरा ।
दानमस्य पुराणस्य दानानामुत्तमं द्विजाः ॥ १५ ॥
यो दद्याच्छिवभक्ताय ब्राह्मणाय तपस्विने ।
यानि दानानि लोकेषु प्रसिद्धानि द्विजोत्तमाः ॥ १६ ॥

---

१ ( ग. घ. ङ. च. छ. ) °न लिङ्गं ।

सर्वेषां फलमाप्नोति चतुर्दश्यां न संशयः ।
ब्राह्मं पुराणं प्रथमं ददाति श्रद्धयाऽन्वितः ॥ १७ ॥
सर्वपापविनिर्मुक्तो ब्रह्मलोके महीयते ।
पाद्मं ब्रह्माणमुद्दिश्य यो ददाति गुरोर्दिने ॥ १८ ॥
द्विजाय वेदविदुषे ज्योतिष्टोमफलं लभेत् ।
वैष्णवं विष्णुमुद्दिश्य द्वादश्यां प्रयतः शुचिः ॥ १९ ॥
अनूचानाय यो दद्याद्वैष्णवं पदमाप्नुयात् ।
ददाति सूर्यभक्ताय यस्तु भागवतं द्विजाः ॥ २० ॥
सर्वपापविनिर्मुक्तः सर्वरोगविवर्जितः ।
जीवेद्वर्षशतं साग्रमन्ते वैवस्वतं पदम् ॥ २१ ॥
वैशाखे शुक्लपक्षस्य तृतीयाऽक्षयसंज्ञिता ।
तस्यां तिथौ संयतात्मा ब्राह्मणायाऽऽहिताग्नये ॥ २२ ॥
भविष्याख्यं पुराणं तु ददाति श्रद्धयान्वितः ।
अश्वमेधस्य यज्ञस्य फलमाप्नोत्यनुत्तमम् ॥ २३ ॥
मार्कण्डेयं तु यो दद्यात्सप्तम्यां प्रयतात्मवान् ।
सूर्यलोकमवाप्नोति सर्वपापविवर्जितः ॥ २४ ॥
आग्नेयं प्रतिपद्येव प्रदद्यादाहिताग्नये ।
राजसूयस्य यज्ञस्य फलं भवति शाश्वतम् ॥ २५ ॥
ददाति नारदीयं यश्चतुर्दश्यां समाहितः ।
द्विजाय शिवभक्ताय शिवलोके महीयते ॥ २६ ॥
यो दद्याद्ब्रह्मवैवर्तं वैष्णवाय समाहितः ।
ब्रह्मलोकमवाप्नोति पुनरावृत्तिदुर्लभम् ॥ २७ ॥
कार्तिकस्य चतुर्दश्यां शुक्लपक्षस्य सुव्रताः ।
लैङ्गं दद्याद्द्विजेन्द्राय शिवार्चनरताय वै ॥ २८ ॥
सर्वपापविनिर्मुक्तः सर्वैश्वर्यसमन्वितः ।
याति माहेश्वरं धाम सर्वलोकोपरि स्थितम् ॥ २९ ॥
द्वादश्यां संयतो भूत्वा ब्राह्मणाय तपस्विने ।
यो वै ददाति वाराहं विष्णुलोकं स गच्छति ॥ ३० ॥
*स्कान्दं शिवचतुर्दश्यां प्रदद्याच्छिवयोगिने ।
ज्ञानी भवति विप्रेन्द्रा महादेवप्रसादतः ॥ ३१ ॥

---

* घसंज्ञितपुस्तकेऽयं श्लोको नास्ति ।

---

१ (ङ.) °ग्नं पुराण°। २ (क. ख. ग.) ° तात्मने ॥ २२ ॥ ३ (घ.) °व्रतः । लै°।

द्वादश्यां वा चतुर्दश्यां दद्याद्वामनमुत्तमम् ।
तस्यै देवस्य तं लोकं प्राप्नोत्यक्षयमुत्तमम् ॥ ३२ ॥
दद्यात्कौर्मं चतुर्दश्यां योगिने प्रयतात्मने ।
सर्वदानस्य यत्पुण्यं सर्वयज्ञस्य यत्फलम् ॥ ३३ ॥
प्राप्नोति तत्फलं विप्रा[1]मन्ते शैवं परं पदम् ।
मात्स्यं दद्याद्द्विजेन्द्राय प्रयतश्चोत्तरायणे ॥ ३४ ॥
विमुक्तः सर्वपापेभ्यः शिवलोके महीयते ।
गारुडं शिवमुद्दिश्य दद्याच्छिवतिथौ द्विजाः ॥ ३५ ॥
वाजपेयसहस्रस्य फलमाप्नोत्यनुत्तमम् ।
प्रदद्याच्छिवभक्ताय ब्रह्माण्डमिति यत्स्मृतम् ॥ ३६ ॥
शिवस्य पुरतो भक्त्या संप्राप्ते दक्षिणायने ।
चन्द्रस्य ग्रहणे वाऽथ भानोरपि च सुव्रताः ॥ ३७ ॥
[2]गणाधिपत्यमाप्नोति देवदेवस्य शूलिनः ।
एवमुक्तः पुराणानां क्रमो दानेन यत्फलम् ॥ ३८ ॥
प्रोक्तं समासतो विप्राः सूर्यो यत्स्वयमब्रवीत् ।
यः पठेदिममध्यायं[3] महादेवस्य संनिधौ ॥ ३९ ॥
सर्वपापविनिर्मुक्तो वाजपेयफलं लभेत् ॥ ४० ॥ ३७९ ॥

इति श्रीब्रह्मपुराणोपपुराणे श्रीसौरे सूतशौनकसंवादे ब्राह्मादि-
पुराणक्रमदानफलकथनं नाम नवमोऽध्यायः ॥ ९ ॥

नित्यं नैमित्तिकं काम्यं विमलं च चतुर्विधम् ।
दानं पात्रे प्रदातव्यं[4] नापात्रेऽप्यणुमात्रकम् ॥ १ ॥
पात्रभूतान्प्रवक्ष्यामि शृणुध्वं मुनिपुङ्गवाः ।
भानुना देवदेवेन मनवे कथिताश्च ये ॥ २ ॥
न दानादधिकं किंचिद्विद्यते भुवनत्रये ।
दानेन प्राप्यते स्वर्गः श्रीर्दानेनैव लभ्यते ॥ ३ ॥
दानेन प्राप्नुयात्सौख्यं [5]रूपं कान्तिं यशो बलम् ।
दानेन जयमाप्नोति मुक्तिर्दानेन लभ्यते ॥ ४ ॥
दानेन शत्रूञ्जयति व्याधिर्दानेन नश्यति ।
दानेन लभते विद्यां दानेन युवतीं जनः ॥ ५ ॥

---

१ ( क. ख. ग. घ. ङ. ) ०स्य तस्य च तं । २ ( क. ख. ग. ) गाणपत्यमवाप्नो० । ३ ( घ. ) ०यं देवदे० । ४ (च. छ.) ०व्यं नोऽपा० । ५ ( च. ) रूपकान्तियशोब०।

धर्मार्थकाममोक्षाणां साधनं परमं स्मृतम्।
दानमेव न चैवान्यदिति देवोऽब्रवीद्रविः ॥ ६ ॥
तस्माद्दानाय सत्पात्रं विचार्यैव प्रयत्नतः।
दातव्यमन्यथा सर्वं भस्मनीव हुतं भवेत् ॥ ७ ॥
वेदवेदाङ्गतत्त्वज्ञाः शान्ताश्चैव जितेन्द्रियाः।
श्रौतस्मार्तक्रियानिष्ठाः सत्यनिष्ठाः कुटुम्बिनः ॥ ८ ॥
तपस्विनस्तीर्थरताः कृतज्ञा मितभाषिणः।
गुरुशुश्रूषणरता नित्यं स्वाध्यायशीलिनः ॥ ९ ॥
महादेवार्चनरता भूतिशासनभूषिताः।
वैष्णवाः सूर्यभक्ता वा पात्रभूता द्विजोत्तमाः ॥ १० ॥
एभ्य एव प्रदातव्यमीहेद्दानफलं यदि।
आपद्यपि न दातव्यमन्येभ्य इति निश्चितम् ॥ ११ ॥
यस्तु माहेश्वरो विप्रो जातिमात्रोऽपि यद्यपि।
उत्तमः सर्वपात्राणां तस्मै दत्तं तदक्षयम् ॥ १२ ॥
शिवभक्तमतिक्रम्य यद्यान्यस्मै प्रदीयते।
निष्फलं तद्भवेद्दानं नरकं च प्रपद्यते ॥ १३ ॥
तस्मात्पात्रतमं ज्ञात्वा शिवभक्तमकल्मषम्।
तस्मै सर्वं प्रदातव्यमक्षयं फलमिच्छता ॥ १४ ॥
दानं फलमनुद्दिश्य सर्वदा यत्प्रदीयते।
तद्दानं नित्यमित्युक्तं देवदेवेन भानुना ॥ १५ ॥
दानं पापविशुद्ध्यर्थं श्रद्धया यत्प्रदीयते।
प्रोक्तं नैमित्तिकं दानमृषिभिर्वेदवादिभिः ॥ १६ ॥
पुत्रार्थं वा धनार्थं वा स्वर्गार्थं वाऽन्यतोऽपि वा।
यद्दानं दीयते भक्त्या काम्यमित्यभिधीयते ॥ १७ ॥
हरस्य प्रीणनार्थं यच्छिवभक्ताय दीयते।
दानं तद्विमलं प्रोक्तं केवलं मोक्षसाधनम् ॥ १८ ॥
यत्किंचिद्दीयते दानं दरिद्राय विशेषतः।
दानं तदधिकं प्रोक्तं स्वकुटुम्बाविरोधतः ॥ १९ ॥

---

१ (घ.) ०ब्रवीद्रवः ॥ ६ ॥ २ (क. घ. ङ. च. छ.) ०ह्यमन्येव। ३ (क. ख. ग.) ०प्परा नि०। ४ (च.) ०भक्तिम०।

स्वल्पामपि महीं यस्तु ददाति श्रद्धयाऽन्वितः ।
स याति ब्रह्मसदनं यत्र देवः स्वयं विराट् ॥ २० ॥
इक्षुगोधूमतुवरीयवैश्च सहितां महीम् ।
यो ददाति दरिद्राय स याति सवितुः पदम् ॥ २१ ॥
अपि गोचर्ममात्रां यो ददाति श्रद्धयान्वितः ।
शिवभक्ताय शान्ताय सर्वपापैः प्रमुच्यते ॥ २२ ॥
न भूमिदानादधिकं दानमस्तीह भूतले ।
तद्दानं हि दरिद्राय दत्तं भवति चाक्षयम् ॥ २३ ॥
आढ्याय नैव दातव्यं भूमिदानं विशेषतः ।
यो ददाति भयात्स्नेहात्[1]सोऽक्षयं नरकं व्रजेत् ॥ २४ ॥
यैर्दत्ता[2] ब्राह्मणेभ्यश्च ग्रामाः[3] परमधार्मिकैः ।
गृह्णन्ति ये करं तेषु लोभान्धाः पापिनो नृपाः ॥ २५ ॥
नरकेषु विपच्यन्ते यावत्कल्पायुतत्रयम् ।
तदन्ते मक्षिका यूका मत्कुणा मशकास्तथा ॥ २६ ॥
कृमयो जालपादाश्च[4] शूकराः पक्षिणस्तथा ।
श्वानो गोधाः शशाः सेधा गर्दभाश्च पिपीलिकाः ॥ २७ ॥
मूषकाः कृकलासाश्च वृक्षगुल्मादयस्तथा ।　
भवन्ति युगसाहस्रं तदन्ते म्लेच्छजातयः ॥ २८ ॥
न तेषां निष्कृतिर्दृष्टा प्रायश्चित्तशतैरपि ।
ब्रह्महा शुद्धिमाप्नोति कालेन मुनिपुङ्गवाः ॥ २९ ॥
द्विजग्रामकरग्राही[5] नैव शुद्धिमवाप्नुयात् ।
तस्मात्परिहरेत्तत्र करं यत्नेन बुद्धिमान् ॥ ३० ॥
विप्रदानकरादानादधिकं नास्ति पातकम् ।
दानानामुत्तमं दानं विद्यादानं विदुर्बुधाः ॥ ३१ ॥
तच्च दानं विनीताय वर्णाश्रमरताय च ।
ब्राह्मणायैव शान्ताय शुश्रूषणरताय च ॥ ३२ ॥
दत्तं तद्ब्रह्मलोकाय विद्यादानं प्रचक्षते ।
अन्नदानं प्रशंसन्ति विदुषो वेदवादिनः ॥ ३३ ॥

---

१ ( घ. ङ. च. छ. ) ०हाद्दक्ष०। २ ( घ. ) ०र्दतो ब्र.०। ३ ( घ. ) ग्रामः प०। ४ ( ख. ग. ) ०श्च सूक०। ५ ( क. ख. ग. ) ०ग्रामक०।

अन्नमेव यतः प्राणाः प्राणदानसमं हि तत् ।
तस्मादहरहर्देयमन्नमेव विचक्षणैः ॥ ३४ ॥
अपरीक्ष्यैव सर्वेभ्य इति स्वायंभुशासनात् ।
प्रीतो विरञ्चिरन्नेन प्रीतश्च कमलापतिः ॥ ३५ ॥
प्रीतश्च भगवाञ्शंभुरन्नेनैव शचीपतिः ।
तस्माद्विशिष्टं तद्देयमाहुर्वेदविदो बुधाः ॥ ३६ ॥
आममन्नं गृहस्थाय नैव पक्वं कदाचन ।
नाध्वगाय निषिद्धं तदिति देवोऽब्रवीद्रविः ॥ ३७ ॥
जलदानमपि प्रोक्तमन्नदानेन वै समम् ।
जीवनं सर्वभूतानां जलमेव द्विजोत्तमाः ॥ ३८ ॥
तिलदः पुत्रमाप्नोति वासोदः कान्तिमुत्तमाम् ।
दीपदो निर्मलां दृष्टिं यानदः श्रियमुत्तमाम् ॥ ३९ ॥
शय्याप्रदश्चापि तथा धान्यदः सौख्यमुत्तमम् ।
अश्विनोर्लोकमाप्नोति सौन्दर्यं घोटकप्रदः ॥ ४० ॥
ब्रह्मदानं महद्दानमिति वेदविदो विदुः ।
तेन दानेन महता सायुज्यं ब्रह्मणः स्मृतम् ॥ ४१ ॥
गृहीत्वा वेतनं वेदं योऽध्यापयति मूढधीः ।
अधीते यो हि वा दत्वा तावुभौ पापिनौ स्मृतौ ॥ ४२ ॥
तयोर्मुखगता वेदा निन्दिताः सर्वकर्मसु ।
सुराभाण्डगतं तोयं यथा भवति निन्दितम् ॥ ४३ ॥
गवां ग्रासप्रदानेन मुच्यते सर्वपातकैः ।
यानि भोज्यानि मूलानि फलानि विविधानि च ॥ ४४ ॥
शाकानि ब्राह्मणेभ्यश्च दत्वाऽत्यन्तं सुखी भवेत् ।
इन्धनानां प्रदानेन जठराग्निप्रदीपनम् ॥ ४५ ॥
परलोकगतानां च च्छत्रदानं सुखप्रदम् ।
रोगिणे रोगशान्त्यर्थमौषधं यः प्रयच्छति ॥ ४६ ॥
रोगहीनः स दीर्घायुः सुखी भवति सर्वदा ।
गामलंकृत्य यो दद्यात्सवत्सां च सदक्षिणाम् ॥ ४७ ॥

---

१ (क. ख. ग.) तद्दानमा०। २ (घ.) ०वीद्वचः ॥ ३७ ॥ ३ (घ. ङ. च. छ.) ०गतो वेदो निन्दितः स०। ४ (घ. ङ. छ.) ०वां घास०।

स क्षीरिणीं द्विजेन्द्राय श्रद्धया द्विजपुङ्गवाः ।
प्राप्नोति शाश्वताँल्लोकाञ्ज्ञानाभोगसमन्वितान् ॥ ४८ ॥
संख्या नैवास्ति पुण्यानां कपिलायाः प्रदानतः ।
कृष्णाजिनं च महिषी मेषी च दश धेनवः ॥ ४९ ॥
ब्रह्मलोकप्रदायिन्यस्तुलापुरुष एव च ।
षोडश क्रतवो ये च दानं तीर्थेषु यत्स्मृतम् ॥ ५० ॥
तदक्षयं भवेद्दानं योगिने च विशेषतः ।
अयने विषुवे चैव ग्रहणे चन्द्रसूर्ययोः ॥ ५१ ॥
[1]संक्रान्त्यादिषु कालेषु दत्तं भवति चाक्षयम् ।
शिवमुद्दिश्य यद्दत्तं स्वल्पं वा यदि वा बहु ॥ ५२ ॥
शिवालये विशेषेण दत्तं भवति चाक्षयम् ।
विशाखर्क्षेण संयुक्ता वैशाखी पूर्णिमा भवेत् ॥ ५३ ॥
तस्यां तिथौ तु संपूज्य ब्राह्मणान्सप्त पञ्च वा ।
कृष्णैरेव तिलैर्विद्वान्मधुना वाऽप्युपोषितः ॥ ५४ ॥
धर्मराजो यमः साक्षात्प्रीयतामिति शङ्कितः ।
दद्याद्वेदार्थविदुषे यदि वा शिवयोगिने ॥ ५५ ॥
यावज्जीवं कृतैः पापैः कायिकैर्वाङ्मनोगतैः ।
मुच्यते तत्क्षणादेव धर्मराजप्रसादतः ॥ ५६ ॥
कृष्णाजिने तिलान्कृत्वा हिरण्यं मधुसर्पिषी ।
ददाति यस्तु विप्राय सर्वपापैः प्रमुच्यते ॥ ५७ ॥
*गामन्नमुदकुम्भं च वैशाख्यां संप्रयच्छति ।
प्रीतये धर्मराजस्य सर्वपापैः प्रमुच्यते ॥ ५८ ॥
प्रसिद्धा या शिवतिथिर्माघे कृष्णचतुर्दशी ।
तस्यां तिथौ नरो भक्त्या देवमुद्दिश्य शंकरम् ॥ ५९ ॥
ददाति हेम वासो वा फलं धान्यमथापि वा ।
यत्किंचिद्वेदविदुषे दत्तं भवति चाक्षयम् ॥ ६० ॥
अभयं सर्वभूतेभ्यो दद्याद्दानं परं स्मृतम् ।
न तस्मादधिकं दानं विद्यते च धनैर्विना ॥ ६१ ॥

* घङचछसंज्ञितपुस्तकेष्वयं श्लोको न विद्यते ।

१ (क. ख. ग.) ०थौ सुसं०। २ (क. ख. ग. ङ.) ०ना चाप्यु०। ३ (ख. ग. घ. ङ.) ०ज्जीवकृ०।

एवं दानफलं प्रोक्तं पुराणेऽस्मिन्पृथक्पृथक् ।
पठेद्यः शृणुयाद्वाऽपि गोदानस्य फलं लभेत् ॥ ६२ ॥ ४३७ ॥

इति श्रीब्रह्मपुराणोपपुराणे श्रीसौरे सूतशौनकसंवादे दानार्ह-
विप्रादिकथनं नाम दशमोऽध्यायः ॥ १० ॥

*सूत उवाच—अन्यद्व्रतमिदं वक्ष्ये शृणुध्वं मुनिपुङ्गवाः ।
शिवेन कथितं साक्षात्स्वयं स्कन्दाय पृच्छते ॥ १ ॥

स्कन्द उवाच—देवदेव महादेव शशाङ्ककृतशेखर ।
भर्गविश्वेश्वरेशान कारुण्यामृतवारिधे ॥ २ ॥
कस्य प्रसीदति क्षिप्रं केन वा ज्ञायते भवान् ।
योगस्त्वद्विषयः को वा ज्ञानं त्वद्विषयं च किम् ॥ ३ ॥
सर्वमेतन्महादेव पुत्रस्नेहाद्ब्रवीहि मे ॥ ४ ॥

ईश्वर उवाच—मद्भक्तः सर्वदा स्कन्द मत्प्रियो न गुणाधिकः ।
सर्वाशी सर्वभक्षी वा सर्वाचारविलोपकः ॥ ५ ॥
मत्परो वाङ्मनःकायैर्मुक्त एव न संशयः ।
नाहं प्रसन्नस्तपसा न दानेन न चेज्यया ॥ ६ ॥
तुष्टोऽहं भक्तिलेशेन क्षिप्रं यच्छे परं पदम् ।
त्रिपुण्ड्रधारी सततं शान्तो रुद्राक्षकङ्कणः ॥ ७ ॥
निर्दम्भः सत्यसंकल्पो भक्तः स्यादुत्तमो मम ।
सूर्यवह्नीन्दुभक्तानामुत्तमो वैष्णवः परः ॥ ८ ॥
वैष्णवानां सहस्रेभ्यः शिवभक्तो विशिष्यते ।
यदि पापरतः क्रूरः स्वाश्रमाचारवर्जितः ॥ ९ ॥
मम भक्तो यदि भवेत्पूज्यो मान्यः स[2] एव हि ।
येऽपि दम्भं समाश्रित्य भक्तानामुपजीविकाः ॥ १० ॥
संसारात्तेऽपि मुच्यन्ते किं पुनर्मत्परा जनाः ।
भद्भक्तानां च माहात्म्यं को वा जानाति तत्त्वतः ॥ ११ ॥
जानेऽहं त्वं च जानासि नन्दी जानाति वा गुह ।
मार्गस्थो वाऽप्यमार्गस्थो मुर्खो वा पण्डितोऽपि वा ॥ १२ ॥

* घङचछजसंज्ञितपुस्तकेषु य एकादशोऽध्यायः स एव कखगसंज्ञितपुस्तकेषु पञ्चदशो वर्तते । तेषु पुस्तकेष्वेकादशोऽध्यायो भिन्न एव । स चास्मिन्पुस्तके चतुर्दशाध्यायस्थाने संगृहीतः । कखग-संज्ञितपुस्तकेष्वन्यद्व्रतमिदमित्यादिः प्रथमः श्लोको न विद्यते ।

१ ( घ. च. छ. ) ०क्षरक्षणः । २ ( घ. ङ. च. छ. ) सदैव ।

मम भक्तो यदि भवेत्सर्वस्मादधिको हि सः ।
भक्तः प्रियो मे सततं यथा त्वं क्रौञ्चसूदन ॥ १३ ॥
तस्मात्तत्पूजनाद्वत्स पूजितोऽहं न संशयः ।
मद्भक्तं द्वेष्टि यो मोहात्स मां द्वेष्टि सनातनं ॥ १४ ॥
तं पूजयति यो भक्त्या स मां पूजितवान्गुह ।
भक्तिरष्टविधा स्कन्द सर्वशास्त्रेषु पठ्यते ॥ १५ ॥
तामहं कथयिष्यामि भक्तिं भवविनाशिनीम् ।
मद्भक्तजनवात्सल्यं पूजायाश्चानुमोदनम् ॥ १६ ॥
स्वयमभ्यर्चनं भक्त्या ममार्थे चाङ्गवेष्टितम्[1] ।
मत्कथाश्रवणे भक्तिः स्वरनेत्राङ्गविक्रिया ॥ १७ ॥
ममानुस्मरणं नित्यं यश्च मां नोपजीवति ।
भक्तिरष्टविधा ह्येषा यस्मिंल्लेशोऽपि[2] वर्तते ॥ १८ ॥
स विप्रेन्द्रो मुनिः श्रीमान्स यतिः स च पण्डितः ।
तस्मै दानं सदा देयं तस्माद्ग्राह्यं षडानन ॥ १९ ॥
सकृदभ्यर्चयेन्मां यो भक्तिलेशसमन्वितः ।
स महापातकैर्मुक्तो मम लोके महीयते ॥ २० ॥
स्वहस्ताहृतपुष्पाणि मामुद्दिश्य प्रयच्छति ।
तद्दानं सर्वदानानामुत्तमं परिपठ्यते ॥ २१ ॥
मयि भक्तिः सदा कार्या भवपाशविमोचनी ।
भक्तिगम्यस्त्वहं वत्स मम योगो हि दुर्लभः ॥ २२ ॥
योगात्संजायते ज्ञानं योगो मय्येकचित्तता ।
ज्ञानं स्वरूपमेव स्याच्चिद्रूपमजमव्ययम्[3] ॥ २३ ॥
आनन्दमजरं शुद्धमज्ञानेन तिरोहितम् ।
वेदान्तवाक्यबोधेन तच्चाज्ञानं निवर्तते ॥ २४ ॥
ज्ञानं नैवाऽऽत्मनो धर्मो न गुणो वा कथंचन ।
ज्ञानस्वरूपमेवाऽऽत्मा नित्यः सर्वगतः शिवः ॥ २५ ॥
अहमात्मा समस्तानां भूतानां परमेश्वरः ।
एक एव पदार्थश्च कल्पितो मयि षण्मुख ॥ २६ ॥
अद्वैतमेकं परमपात्मानं ज्ञानविग्रहम् ।
नानात्मानं प्रपश्यन्ति मायया मोहिता जनाः ॥ २७ ॥

---

१ ( ख. ग. ) ०वेष्टनम् । २ ( क. ख. ग. ) ०स्मिन्म्लेच्छेऽपि । ३ ( क. ख. ग. ) ०मच्युतम् ।

नासद्रूपा न सद्रूपा माया नैवोभयात्मिका ।
सदसद्भ्यामन्यरूपा मिथ्याभूता सनातना ॥ २८ ॥
विज्ञानमेवमखिलं विश्वाकारमबुद्धयः ।
पश्यन्ति ज्ञानिनस्त्वेकमात्मरूपमिदं जगत् ॥ २९ ॥
अहमात्मा विभुः शुद्धः स्फटिकोपलसंनिभः ।
उपाधिरहितः शान्तः स्वयंज्योतिः प्रकाशकः ॥ ३० ॥
आत्मन्येवाखिलं भाति शुक्तिकारजतं यथा ।
शुक्तितत्त्वपरिज्ञानात्तन्नाशस्तद्वदात्मनि ॥ ३१ ॥
कर्तृत्वं नैव भोक्तृत्वमात्मनोऽस्ति कदाचन ।
अहंकाराविवेकेन कर्तृत्वमिति निश्चितम् ॥ ३२ ॥
आत्मनो नित्यमुक्तस्य निर्विभागस्य षण्मुख ।
नैवास्ति किंचित्कर्तव्यमित्याहुर्वेदवादिनः ॥ ३३ ॥
कर्तृत्वं करणस्यैव नाऽऽत्मनोऽस्ति हि तत्त्वतः ।
न तेन लिप्यते ह्यात्मा पुण्यापुण्याख्यकर्मणा ॥ ३४ ॥
बुद्ध्यादयो गुणाः सर्वे ह्यभूद्बुद्धेरहंकृतिः ।
अहंकाराच्च सूक्ष्माणि तन्मात्राणीन्द्रियाणि च ॥ ३५ ॥
सूक्ष्मेभ्यः पञ्चभूतानि तेभ्यः स्थूलमिदं जगत् ।
चतुर्विंशकमव्यक्तं पुरुषः पञ्चविंशकः ॥ ३६ ॥
न तस्य कार्यं करणं क्रियारूपं च विद्यते ।
स्वाज्ञानात्कथितं सर्वमात्मन्येवेति च श्रुतिः ॥ ३७ ॥
इति मद्विषयं ज्ञानं कथितं तव पुत्रक ॥ ३८ ॥ ४७५ ॥

इति श्रीब्रह्मपुराणोपपुराणे श्रीसौरे सूतशौनकसंवादे शिवभक्तमहिमादिकथनं नामैकादशोऽध्यायः ॥ ११ ॥

**ईश्वर उवाच**—मय्येकचित्तता योग इति पूर्वं निरूपितम् ।
साधनान्यष्टधा तस्य प्रवक्ष्याम्यधुना शृणु ॥ १ ॥
यमाश्च नियमास्तावदासनान्यपि षण्मुख ।
प्राणायामस्ततः प्रोक्तः प्रत्याहारश्च धारणा ॥ २ ॥
ध्यानं तथा समाधिश्च योगाङ्गानि प्रचक्षते ।
अहिंसा सत्यमस्तेयं ब्रह्मचर्यापरिग्रहौ ॥ ३ ॥

---

१ (क. ख. ग.) °ता पुरातनी ॥ २८ ॥ २ (क. ख. ग.) °ख । किंचिन्नैवास्ति कर्त° ।
३ (घ.) °र्मभिः ॥ ३४ ॥

यमाः संक्षेपतः प्रोक्ता नियमाञ्शृणु पुत्रक ।
तपः स्वाध्यायसंतोषः शौचमीश्वरपूजनम्[5] ॥ ४ ॥
नियमाः कथिता वत्स योगसिद्धिप्रदायिनः ।
सर्वेषामेव भूतानामक्लेशजननं हि यत् ॥ ५ ॥
अहिंसा कथिता सद्भिर्योगसिद्धिप्रदायिनी ।
यथार्थकथनं सत्यमस्तेयमधुना शृणु ॥ ६ ॥
चौर्येण वा बलेनापि परस्वहरणं च यत् ।
स्तेयमित्युच्यते सद्भिरस्तेयं तस्य वर्जनम्[1] ॥ ७ ॥
सर्वत्र मैथुनत्यागो ब्रह्मचर्यमिहोच्यते ।
द्रव्याणामप्यनादानमापद्यपि यथेच्छया ॥ ८ ॥
अपरिग्रह इत्युक्तो योगसिद्धेस्तु साधनम् ।
चान्द्रायणादिना यत्तु शरीरस्य च शोषणम् ॥ ९ ॥
तत्तपः कथितं पुत्र स्वाध्यायमधुना शृणु ।
प्रणवः शतरुद्रीयं तथाऽथर्वशिरःशिखा ॥ १० ॥
एतेषां यो जपः पुत्र स्वाध्याय इति कीर्तितः ।
यदृच्छालाभसंतुष्टः संतोष इति पठ्यते ॥ ११ ॥
बाह्ये चाभ्यन्तरे चापि शुद्धिः शौचं विधीयते ।
स्तुतिस्मरणपूजाभिर्वाङ्मनःकायकर्मभिः ॥ १२ ॥
मयि भक्तिर्दृढा पुत्र एतदीश्वरपूजनम् ।
यमाश्च नियमाः प्रोक्ताः संक्षेपान्न तु विस्तरात् ॥ १३ ॥
यमैश्च नियमैर्युक्तो योगी मोक्षाय संस्तुतः ।
स्थिरबुद्धिरसंमूढः पूर्वमासनमभ्यसेत् ॥ १४ ॥
पद्मकं स्वस्तिकं पीठं[2] सैहं कौकुटकौञ्जरम्[3] ।
कौर्मं वज्रासनं चैवं वैयाघ्रं चार्धचन्द्रकम् ॥ १५ ॥
दण्डं ताक्ष्यासनं शूलं खड्गं मुद्गरमेव च ।
मकरं त्रिपथं काष्ठं स्थाणुर्वा हस्तिकर्णिकम् ॥ १६ ॥
भौमं वीरासनं चापि वाराहं मृगवैणिकम् ।
क्रौञ्चं चानालिकं[4] चापि सर्वतोभद्रमेव च ॥ १७ ॥
इत्येतान्यासनान्यत्र सप्तविंशतिसंख्यया ।
योगसंसिद्धिहेतोस्तु कथितानि तवानघ ॥ १८ ॥

---

१ (क. ख. ग.) वर्जितम् । २ (घ. ङ. च. छ.) ०ठं हैमं कौ० । ३ (घ. ङ. च. छ.) ०ञ्जनम् । ४ (क. ख. ग.) ०कं चैव स० । ५ (क. ख. ग.) ०तोष क० ।

एषामेकतरं बद्ध्वा गुरुभक्तिपरायणः ।
द्वन्द्वातीतो जयेत्प्राणानभ्यासक्रमयोगतः ॥ १९ ॥
अन्तश्चराणां वायूनां बाह्याभ्यन्तररोधनम् ।
प्राणायाम इति प्रोक्तो द्विविधः स च कथ्यते ॥ २० ॥
अगर्भश्च सगर्भश्च तयोराद्योऽजयः स्मृतः ।
द्वितीयः सजयः प्रोक्तो ध्रुवं व्याहृतिमातृभिः ॥ २१ ॥
रेचकः शून्यकश्चैव पूरकः कुम्भकस्तथा ।
एवं चतुर्विधो भेदः प्राणायामेऽत्र सूरिभिः ॥ २२ ॥
असूनां नाडयः प्रोक्ता गमागमलयाश्रयाः ।
रेचनाद्रेचकः प्रोक्तः शून्यकस्तु यथास्थितः ॥ २३ ॥
पूरकः पूरणाद्वायोस्तन्निरोधाच्च कुम्भकः ।
देहिनो दक्षिणे भागे पिङ्गला नाडिका स्मृता ॥ २४ ॥
पितृयोनिरिति ख्याता भानुस्तत्राधिदैवतम् ।
दक्षिणेतरगा या च इडा सा नाडिका स्मृता ॥ २५ ॥
देवयोनिरिति ख्याता चन्द्रस्तत्राधिदैवतम् ।
एतयोरुभयोर्मध्ये सुषुम्ना नाम विश्रुता ॥ २६ ॥
पद्मसूत्रनिभा नाडी कार्याख्या ब्रह्मदैवतम् ।
ततः शून्यं निरालम्बं मध्ये स्वात्मनि योजयेत् ॥ २७ ॥
बाह्यस्थाद्रोधनाद्वायोः शून्यकत्वं विनिर्दिशेत् ।
चन्द्रदैवतया भूयः पिबेदमृतमुत्तमम् ॥ २८ ॥
आप्यायनं भवेत्तेन प्लावनं कल्मषस्य तु ।
आपूर्योदरसंस्थं तु उच्चैर्वायुं निरोधयेत् ॥ २९ ॥
कुम्भकः कुम्भवत्स स्याद्रेचको वर्तितस्य च ।
उत्क्षिप्य प्रयतो वायुमजदेवत्यमानयेत् ॥ ३० ॥
अङ्गुष्ठाग्रात्समारभ्य ब्रह्मरन्ध्रेण मोचयेत् ।
संकोच्य कूचिकाचक्रमूर्ध्वं नीत्वा रसात्रयम् ॥ ३१ ॥
संक्षोभ्य शङ्खिनीं सम्यक्ततो ब्रह्मगुहां नयेत् ।
अनेन शोधयेन्मार्गमैश्वरं विमलं मुनिः ॥ ३२ ॥

---

१ (घ. ङ. च. छ.) °रशोध°। २ (घ. ङ. च. छ. ज.) °ता वायुस्त°। ३ (क. ख. ग.) कुपिका°। ४ (घ.) मने ॥ ३२ ॥

क्रमेणाभ्यासयोगेन योगसंसिद्धिभाग्भवेत् ।
मुमुक्षूणां सदावत्स योगाङ्गं योगसिद्धये ॥ ३३ ॥
विहाय वह्निमार्गं तु अङ्गुल्यास्तु शनैः शनैः ।
सौम्येनाऽऽकर्षयेद्वायुं नाभावाकृष्य धारयेत् ॥ ३४ ॥
धारयन्नियतप्राणो योगैश्वर्यसमन्वितः ।
जायते वत्सराद्योगी जरामरणवर्जितः ॥ ३५ ॥
वायुमाकर्षयेद्बाह्यं वामया चोदरं भरेत् ।
नाभिनासान्तरा ध्यायंस्त्रिः प्राणांश्च जयेद्ध्रुवम् ॥ ३६ ॥
मनःस्थैर्यं भवेद्वत्स त्रिषु स्थानेषु धारणात् ।
अङ्गुष्ठनाभिनासाग्रे वायुं योगी जितासनः ॥ ३७ ॥
अपानं कटिदेशे तु पृष्ठतो वै विनिर्दिशेत् ।
सदा तत्रैव संधेय एष वायुजयक्रमः ॥ ३८ ॥
रेचकः पूरकश्चैव कुम्भकश्च न विद्यते ।
निरालम्बे मनः कृत्वा क्षणात्प्राणजितो भवेत् ॥ ३९ ॥
इन्द्रियाणां विचरतां विषयेषु स्वभावतः ।
निग्रहः प्रोच्यते यस्तु प्रत्याहारः स उच्यते ॥ ४० ॥
यद्यत्पश्यति तत्सर्वं पश्येदात्मवदात्मनि ।
प्रत्याहारः स वै प्रोक्तो योगसाधनमुत्तमम् ॥ ४१ ॥
कर्मेन्द्रियाणां पञ्चानां पञ्चमाद्येतरेजने ।
यदि तत्र स्थिरो लोको मनो याति तदालयम् ॥ ४२ ॥
उद्घातान्दश पञ्चैव कारयेद्धारणां बुधः ।
प्राणवायुं निवार्यैव मनः सूर्येऽन्तरे क्षिपेत् ॥ ४३ ॥
देवांश्च सिद्धान्गन्धर्वांश्चारणान्खेचरान्गणान् ।
षण्मासाभ्यासयोगेन सूक्ष्मज्योतिः प्रपश्यति ॥ ४४ ॥
दृष्टे न स्याज्जरा मृत्युः सर्वज्ञश्च प्रजायते ।
स्फोटाख्या नाडिका प्रोक्ता कूर्मलोकस्तदान्तरे ॥ ४५ ॥
उच्चार्य बिन्दुतत्त्वं तु तस्यान्ते गुणवत्स्मरेत् ।
भूतं भव्यं भविष्यं च वर्तमानं च दूरतः ॥ ४६ ॥
ज्ञानं यत्तद्भवेन्नूनं स्फोटाख्ये ज्ञानमभ्यसेत् ।
ललाटे मूर्ध्नि हृदये सदाशिवमनुस्मरेत् ॥ ४७ ॥

१ (क. ख. ग.) ०ङ्गुल्यां तु श०। २ (क. ग ङ. च. छ.) वायुयो०। ३ (ख.) ०विष्यच्च व०

शुद्धस्फटिकसंकाशं जटाजूटेन्दुशेखरम् ।
पञ्चवक्त्रं दशभुजं सर्पयज्ञोपवीतिनम् ॥ ४८ ॥
ध्यात्वैवमात्मनि विभुं ध्यानं तत्सूरयो विदुः ।
ततोन्मनस्त्वं भवति न शृणोति न पश्यति ॥ ४९ ॥
न जिघ्रति न स्पृशति न किंचिद्वा समीक्षते ।
गुह्योदरादिस्थानेषु वायुं नासां विचिन्तयेत् ॥ ५० ॥
ईशोऽहमिति योगीन्द्रः परानन्दैकविग्रहः ।
जरामरणनिर्मुक्तः शिव एव भवेन्मुनिः ॥ ५१ ॥
गमनागमनाभ्यां यो हीनो वै विषयोज्झितः ।
एकान्तरोन्मनीभावः समाधिरभिधीयते ॥ ५२ ॥
न बृहद्वस्तुनश्चिन्ता न सूक्ष्मस्यापि चिन्तनम् ।
न बहिर्नान्तरं पुत्र ब्रह्मग्रन्थिविभेदनम् ॥ ५३ ॥
न स्थूलं न कृशं वाऽपि न ह्रस्वं नापि लोपितम् ।
न शुक्लं नापि वा पीतं न कृष्णं नापि कर्बुरम् ॥ ५४ ॥
कृत्वा हृत्पद्मनिलये विश्वाख्यं विश्वसंभवम् ।
आत्मानं सर्वभूतानां परस्तात्तमसंस्थितम् ॥ ५५ ॥
सर्वस्याधारमव्यक्तमानन्दं ज्योतिरव्ययम् ।
प्रधानपुरुषातीतमाकाशं दहरं शिवम् ॥ ५६ ॥
तदन्तः सर्वभूतानामीश्वरं ब्रह्मरूपिणम् ।
ध्यायेदनादिमध्यान्तमानन्दादिगुणालयम् ॥ ५७ ॥
महान्तं पुरुषं ब्रह्म ब्रह्माणं ब्रह्म चाव्ययम् ।
ओंकारान्ते तथाऽऽत्मानं संस्थाप्य परमात्मनि ॥ ५८ ॥
आकाशे देवमीशानं ध्यायीताऽऽकाशमध्यगम् ।
कारणं सर्वभावानामानन्दैकरसाश्रयम् ॥ ५९ ॥
पुराणं पुरुषं शंभुं ध्यायेन्मुच्येत बन्धनात् ।
शिवभक्तिं विना यस्तु संसारं तर्तुमिच्छति ॥ ६० ॥
मूढो यथा श्वलाङ्गूलैः समुद्रं तर्तुमिच्छति ।
तथा विना शंभुसेवां संसारतरणं न हि ॥ ६१ ॥

---

१ ( क. ख. ग. ) ०रस्थमात्मनि सं०। २ ( क. ख. ग. ) ०र्वभावाना०। ३ (घ. ङ. च. च.) ०मद्वैतमा०। ४ ( क. ख. ग. ) ०राणपु०।

सर्वसौख्यप्रदः शंभुर्नान्या काचन देवता ।
तस्मात्सर्वप्रयत्नेन महादेवं प्रपूजयेत् ॥ ६२ ॥
यद्वा गुहायां प्रकृतं जगत्संमोहनालये ।
विचिन्त्य परमं व्योम सर्वभूतैककारणम् ॥ ६३ ॥
जीवनं सर्वभूतानां यत्र लोकः प्रलीयते ।
आनन्दं ब्रह्मणः सूक्ष्मं यत्पश्यन्ति मुमुक्षवः ॥ ६४ ॥
तन्मध्ये निहितं ब्रह्म केवलं ज्ञानलक्षणम् ।
पातुं तिष्ठेन्महेशेन सोऽश्नुते योगमैश्वरम् ॥ ६५ ॥
नैकलक्षं द्विलक्षं वा त्रिलक्षं न नवात्मकम् ।
सर्वोपाधिविनिर्मुक्तं समाधिरभिधीयते ॥ ६६ ॥
बाह्ये चाभ्यन्तरे पुत्र यत्र यत्र मनः क्षिपेत् ।
तत्र तत्राऽऽत्मनो रूपमानन्दमनुभूयते ॥ ६७ ॥
संस्थाप्य मयि चाऽऽत्मानं परं ज्योतिषि निर्गुणे ।
मुहूर्तं तिष्ठतः साक्षात्तस्य चानुभवो भवेत् ॥ ६८ ॥
सर्वज्ञः परिपूर्णश्च जरामरणवर्जितः ।
मत्प्रसादाद्भवेद्योगी नान्यथा क्रौञ्चसूदन ॥ ६९ ॥
तस्मात्सर्वं परित्यज्य कर्मजातं सुदुष्करम् ।
मामेकं शरणं गच्छेदज्ञानं नाशयाम्यहम् ॥ ७० ॥
ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चान्ये च संकराः ।
मद्भक्तिभावनापूता यान्ति मत्परमं पदम् ॥ ७१ ॥
जगतः प्रलये प्राप्ते नष्टे च कमलोद्भवे ।
मद्भक्ता नैव नश्यन्ति स्वेच्छाविग्रहधारिणः ॥ ७२ ॥
योगिनां कर्मिणां चैव तापसानां यतात्मनाम् ।
अहमेव गतिस्तेषां नान्यदस्तीति निश्चयः ॥ ७३ ॥ ५४८ ॥

इति श्रीब्रह्मपुराणोपपुराणे श्रीसौरे शिवस्कन्दसंवादे यमनियमप्राणायामादिकथनं नाम द्वादशोऽध्यायः ॥ १२ ॥

**स्कन्द उवाच**–भूतकार्यमिदं देहमापद्रोगाकुलं परम् ।
विषयैः पीड्यते देव सुखदुःखात्मकैः सदा ॥ १ ॥
अभिभूतो यदा योगी दुःखैरध्यात्मसंभवैः ।
किमुपायं तदा तस्य यदा वै भौतिकस्य च ॥ २ ॥

---

१ (क. ख. ग.) ०ष्ठतस्तस्य साक्षादनु०। २ (क. ख.) ०वैतः प०। ३ (क. ख. ग. च.

भूतादिदैविकस्यापि योगसंसिद्धये प्रभो ।
यातना योपसर्गाणां प्रसादाद्योगिनां वद ॥ ३ ॥
**ईश्वर उवाच**—सात्त्विका राजसा विघ्नास्तामसास्त्विह योगिनाम् ।
योगत्रासकराः सर्वे भवन्ति भवतामपि ॥ ४ ॥
प्रातिभाश्रवणावार्तादर्शनास्वादवेदनाः ।
उपसर्गा भवन्त्येते सात्त्विकास्तु षडेव हि ॥ ५ ॥
दरिद्रोऽहमहं चाऽऽढ्यः शूरोऽहं दुर्बलस्तथा ।
मूर्खोऽहं च सुविद्वांश्च सुरूपोऽहमरूपवान् ॥ ६ ॥
दाताऽहं कृपणश्चाहं सुखी भोग्यहमेव च ।
अकुलीनः कुलीनश्च कण्टकः कण्टकोज्झितः ॥ ७ ॥
मदीयं सर्वमेतद्धि वस्त्वित्यादिप्रजल्पनम् ।
अहंकारमयं किंचिद्यत्तत्कृत्स्नं हि राजसम् ॥ ८ ॥
अन्धत्वं चैव बाधिर्यं पङ्गुत्वं दुष्टरोगता ।
शिरोरोगो ज्वरः शूलैयक्ष्ममूर्छाभ्रमादयः ॥ ९ ॥
राजसास्तामसाः सर्वे तमोहंकारसंयुताः ।
व्याधयो मिश्रभावेन पीडयन्तीह देहिनम् ॥ १० ॥
केवलं जाड्यभावेन मूढत्वं मोहनं[3] तथा ।
अज्ञानत्वं च मूकत्वमित्याद्यास्तामसाः स्मृताः ॥ ११ ॥
गुह्यका यातुधानाश्च किंनरोरगराक्षसाः ।
देवदानवरौद्राश्च दैत्या मातरजा गणाः ॥ १२ ॥
तामसास्तु ग्रहा भूता वायुभूता नरं सदा ।
पीडयन्तीह विघ्ना हि योगाभ्यासरतं ग्रहैः ॥ १३ ॥
एवमाद्युपसर्गाणां वारणाय च धारणाम् ।
वक्ष्यामि विविधां वत्स योगिनां सिद्धिहेतवे ॥ १४ ॥
त्वगादिसप्तधातूनामेकीभूतं विचिन्तयेत् ।
प्रणवं कण्ठनासाग्रे सबीजं वह्निदीपितम् ॥ १५ ॥
वारुणेषु च सर्वेषु उपसर्गेषु योगवित् ।
एतदेव चरेन्नित्यमुपसर्गोदयो यदि ॥ १६ ॥
पित्तरोगाभिभूतो वा योगी योगपरायणः ।
ध्यानमेतत्प्रकुर्वीत तथाऽन्यच्छृणु पुत्रक ॥ १७ ॥

---

१ क.ख. ग. ) °द्वान्हि सु°। २ ( क. ख. ग. ) °लक्ष्मयमू°। ३ ( च. छ. )°नं यथा ।

८

सुवृत्तं चोडुनाथस्य चाक्षरं तत्र चिन्तयेत् ।
सुधाभिलषितं ध्यायेत्स्वस्य मूर्ध्नि शिवात्मकम् ॥ १८ ॥
प्रविश्य ब्रह्मरन्ध्रेण देहं निर्वाणजं स्मरेत् ।
शीतलेन सुगन्धेन हृत्तत्त्वं चापि तेन वै ॥ १९ ॥
पैत्तिकाश्चोपसर्गाश्च भानुना तिमिरं यथा ।
विषज्वरजराद्याश्च नश्यन्त्यभ्यासतो ध्रुवम् ॥ २० ॥
*नाशयेदन्धतां योगी दिव्यदृष्टिः प्रजायते ।
उत्क्षिप्यापानमन्यं च चन्द्रदैवत्यया पिबेत् ॥ २१ ॥
पीत्वा पार्थिवतत्त्वेन स्तम्भं वायोर्विनाशयेत् ।
पुष्टिरेवातुला तस्य स्थिरत्वं रुजहीनता ॥ २२ ॥
हृत्तत्त्वं च सुपीताभममरत्वं तथा स्मरन् ।
श्रोत्रमाकाशवाय्वोश्च अत्रैकत्वं विचिन्तयेत् ॥ २३ ॥
मोचयेत्तं पुनर्वायुं बधिरत्वविनाशनम् ।
शृणोति दूरतः सर्वं श्रुतधारी भवेत्सदा ॥ २४ ॥
वियन्मयोऽथ संचारी सतताभ्यासयोगतः ।
सरोजं रसनायां च तद्वष्टारं सकर्णिकम् ॥ २५ ॥
स्मृत्वा मध्ये पुनर्ध्यायेच्छुक्लवर्णां स्वरस्वतीम् ।
जडत्वं च शिरोरोगं मुखरोगान्विनाशयेत् ॥ २६ ॥
प्रज्ञा चैवं स्मृतिर्मेधा कवित्वं बुद्धिरुत्तमा ।
स्तम्भनं दुष्टसत्त्वानां सर्ववायूञ्जयेत्सदा ॥ २७ ॥
हृत्सरोजगतं देवमष्टादशभुजैर्युतम् ।
नीलारुणं महाकायं त्रिदृक्चन्द्रजटाधरम् ॥ २८ ॥
सिंहचर्माम्बरं भीमं सर्वाभरणभूषितम् ।
भुजङ्गहाराभरणं सर्पकङ्कणनूपुरम् ॥ २९ ॥
ज्वालामालाकुलं दीप्तं भाभासितदिगाननम् ।
अभेद्यं विजयं रौद्रमक्षोभ्यं त्रिदशेश्वरम् ॥ ३० ॥

* नाशयेदन्धतामित्यादेः श्लोकात्पूर्वं कखगसंज्ञितेष्वेव पुस्तकेषु श्लोकार्धमिदं दृश्यते । तद्यथाः—
दृष्टमात्रे तु तस्मिन्वै मनेनोत्थापयेत्क्षणात् ।

१ ( क. ख. ग. ) अन्धत्वं नाशयेद्योगी । २ ( क. ख. ग. ) उत्कृष्यापा०। ३ ( क. ख ग. ) ०श्चोर्निवारये०। ४ ( घ. )०येण पु०। ५ ( क. ख. ग. ) ०तः शब्दं श्रु०। ६ ( घ. ) ०व धृति०। ७ ( घ. ङ. च. छ. ज. ) ०रं भीरं स०। ८ ( ङ. ) ०णभूषणम्०।

कपालमालिनं घोरं भीमं दंष्ट्राकरालिनम् ।
अनेकर्षप्रकरं देवममोघैर्वह्निकारणैः ॥ ३१ ॥
स्मरणात्कजनाचैव तेजसैर्विघ्ननाशनम् ।
शूलमुद्गरवज्रेषुदण्डकार्मुकशक्त्यसि ॥ ३२ ॥
पश्चान्ते दक्षिणे भागेऽविनाशं परमेश्वरम् ।
परिघध्वजखट्वाङ्गैरङ्कुशं च धनुर्गदाम् ॥ ३३ ॥
ज्वालाननेन पाशेन वामभागेऽभयप्रदम् ।
अनेन ध्यानयोगेन सर्वविघ्नान्निवारयेत् ॥ ३४ ॥
वशं नयेज्जगत्सर्वमापद्यपि महेश्वरः ।
सम्यग्दर्शनसंपन्नो नाभिभूयेत कर्मभिः ॥ ३५ ॥
योगवियोगयुक्तात्मा परं निर्वाणमृच्छति ।
आदित्यमण्डलं पद्मे सौम्यं वै पावकं ततः ॥ ३६ ॥
आत्मनो हृद्गुहावासं संचिन्त्यैवं महामुनिः ।
तत्र देवं परं शान्तं ध्यायेदीशं मुनिर्मलम् ॥ ३७ ॥
जगद्व्याप्य स्थितं कृत्स्नं कालाकालविवर्जितम् ।
विपद्देशे हृत्कुञ्जे वा योगी योगविदां वरः ॥ ३८ ॥
ईश्वरं चिन्तयेत्स्थाणुं ज्ञानमानन्दविग्रहम् ।
उभावपि स्थिरीकृत्य योगी मोक्षाय कल्पते ॥ ३९ ॥
बाह्ये चित्तं समारोप्य वायोः परमकारयत् ।
ततो द्वाराणि संयम्य ब्रह्मरन्ध्रे लयं गतः ॥ ४० ॥
लक्षमाधाय तत्रैव योजयेन्मयि षण्मुख ।
घृतं घृतेष्वेव यथा नियुक्तं प्रयाति चैक्यादविशेषभावम् ।
तथैव लीनो न भवेत्स भूयः परे चतुर्थे त्वनया च युक्त्या ॥ ४१ ॥ ५८९ ॥

इति श्रीब्रह्मपुराणोपपुराणे श्रीसौरे शिवस्कन्दसंवादे सात्त्विकराजसविघ्नादिकथनं नाम त्रयोदशोऽध्यायः ॥ १३ ॥

*सूत उवाच—व्रतानि संप्रवक्ष्यामि शृणुध्वं मुनिपुङ्गवाः ।
तत्र कृष्णाष्टमी पुण्या सर्वपापप्रणाशनी ॥ १ ॥

---

* कखगसंज्ञितपुस्तकेषु य एकादशोऽध्यायः स एवात्र संगृहीतः ।

---

१ (क. ख. ग. ङ.) °प्रणाम् । २ (क. ख. ग.) °प्रान्विताशये° । ३ (घ. ङ. च. छ. ज.) पद्मं सो° । ४ (क. ख. ग. घ. ङ.) °द्मे सोमं वै । ५ (क. ख. ग.) °हाममध्ये सं° । ६ (क. ख. ग.) °तं सर्वं का° । ७ (क. ख. ग.) °त्कुण्डे वा । ८ (क. ख. ग.) °यैरपि प° । ९ (क. ख. ग.) °था प्रयु° ।

कृष्णाष्टमीव्रतान्नान्यद्व्रतमस्ति विभूतिदम् ।
कृष्णाष्टमीव्रतं कृत्वा ब्रह्मा ब्रह्मत्वमाप्नुयात् ॥ २ ॥
विष्णुत्वं प्राप्तवान्विष्णुः सुरेशत्वं शचीपतिः ।
कुबेरो यक्षराजत्वं नियन्तृत्वं यमः स्वयम् ॥ ३ ॥
चन्द्रश्चन्द्रत्वमापन्नो गणेशत्वं गणाधिपः ।
स्कन्दः सेनापतित्वं च तथा चान्ये गणेश्वराः ॥ ४ ॥
कृत्वा चैश्वर्यमापन्नाः सौभाग्यं देववल्लभाः ।
व्रतस्यास्य प्रभावेन लक्ष्म्याः पतिरभूद्धरिः ॥ ५ ॥
ययातिः सार्वभौमत्वं तथा चान्ये नृपोत्तमाः ।
ऋषयो मुनयः सिद्धा गन्धर्वाणां च कन्यकाः ॥ ६ ॥
कृत्वा चैव परां सिद्धिं प्राप्ताश्च मुनिपुङ्गवाः ।
नन्दीश्वरेण यत्प्रोक्तं नारदाय महात्मने ॥ ७ ॥
कृष्णाष्टमीव्रतं श्रेष्ठं सर्वकामफलप्रदम् ।
मेरोर्दक्षिणं शृङ्गं सुरासुरनमस्कृतम् ॥ ८ ॥
तत्र नन्दीश्वरं दृष्ट्वा सर्वज्ञं शंभुवल्लभम् ।
उपास्यमानं मुनिभिः स्तूयमानं मरुद्गणैः ॥ ९ ॥
सर्वानुग्रहकर्तारं स्तुत्वा तु विविधैः स्तवैः ।
अब्रवीत्प्रणिपत्याथ दण्डवन्नारदो मुनिः ॥ १० ॥

**नारद उवाच**—भगवन्सर्वतत्त्वज्ञ सर्वेषामभयप्रद ।
केन व्रतेन चीर्णेन तपोवृत्तिः प्रजायते ॥ ११ ॥
सौभाग्यं कान्तिमैश्वर्यमपत्यं च यशस्तथा ।
शाश्वतीं मुक्तिमन्ते च पशुपाशविमोचनीम् ॥ १२ ॥
भगवंस्तद्व्रतं ब्रूहि कारुण्याच्छंकरप्रियम् ।

**नन्दिकेश्वर उवाच**—कृष्णाष्टमीव्रतं श्रेष्ठमस्ति देवऋषे शृणु ।
गणेशत्वं मया लब्धं येन चीर्णेन नारद ॥ १३ ॥
मासे मार्गशिरे प्राप्ते कृष्णाष्टम्यां जितेन्द्रियः ।
अश्वत्थदन्तकाष्ठेन कृत्वा वै दन्तधावनम् ॥ १४ ॥
स्नानं कृत्वा च विधिवत्तर्पणं चैव नारद ।
आगत्य भवनं पश्चात्पूजयेच्छंकरं प्रभुम् ॥ १५ ॥
गोमूत्रं प्राश्य विधिवदुपवासी भवेन्निशि ।
अतिरात्रस्य यज्ञस्य फलमष्टगुणं भवेत् ॥ १६ ॥

सर्पिषः प्राशनं पौषे दन्तकाष्ठं च तत्स्मृतम् ।
पूजयेच्छंभुनामानं भगवन्तं महेश्वरम् ॥ १७ ॥
वाजपेयाष्टकफलं प्राप्नोति श्रद्धयाऽन्वितः ।
माघे वटस्य कथितं गोक्षीरं प्राशनं स्मृतम् ॥ १८ ॥
माहेश्वरं सुसंपूज्य गोमेधस्याष्टकं फलम् ।
फाल्गुने च तदेवोक्तं कार्यं वै प्राशनं च तत् ॥ १९ ॥
संपूजयेन्महादेवं राजसूयाष्टकं फलम् ।
काष्ठमौदुम्बरं चैत्रे प्राशने वर्जिता जनाः ॥ २० ॥
पूजयेत्स्थाणुनामानमश्वमेधफलं लभेत् ।
शिवं संपूज्य वैशाखे पीत्वा चैव कुशोदकम् ॥ २१ ॥
नरमेधाष्टकफलं प्राप्नोत्येव हि नारद ।
ज्येष्ठे प्लाक्षं भवेत्काष्ठं पूज्यः पशुपतिर्विभुः ॥ २२ ॥
गवां शृङ्गोदकं प्राश्य स्वपेद्देवस्य संनिधौ ।
गवां कोटिप्रदानस्य यत्पुण्यं तदवाप्नुयात् ॥ २३ ॥
आषाढे चोग्रनामानमिष्ट्वा प्राश्य च गोमयम् ।
सौत्रामण्यास्तु यज्ञस्य फलमष्टगुणं भवेत् ॥ २४ ॥
पालाशं श्रावणे प्रोक्तं शर्वं संपूज्य नारद ।
प्राशयित्वाऽर्कपत्राणि कल्पं शिवपुरे वसेत् ॥ २५ ॥
मासे भाद्रपदेऽष्टम्यां त्र्यम्बकं संप्रपूजयेत् ।
प्राशनं बिल्वपत्रस्य सर्वदीक्षाफलं भवेत् ॥ २६ ॥
आश्विने जम्बुवृक्षस्य दन्तकाष्ठमुदीरितम् ।
ईश्वरं पूजयेद्भक्त्या प्राशयेत्तण्डुलोदकम् ॥ २७ ॥
पौण्डरीकस्य यज्ञस्य फलमष्टगुणं लभेत् ।
मासे तु कार्तिकेऽष्टम्यामीशानाख्यं प्रपूजयेत् ॥ २८ ॥
पञ्चगव्यं सकृत्पीत्वा अग्निष्टोमफलं लभेत् ।
वर्षान्ते भोजयेद्विप्राञ्शिवभक्तिपरायणान् ॥ २९ ॥
पायसं मधुसंयुक्तं घृतेन सुपरिप्लुतम् ।
शक्त्या हिरण्यं वासांसि भक्त्या तेभ्यो निवेदयेत् ॥ ३० ॥
देवाय दद्याद्दध्यन्नं वितानध्वजचामरम् ।
कृष्णां पयस्विनीं गां च घण्टां कञ्चुकवाससी ॥ ३१ ॥

---

१ (घ.) °ष्वि ग्रक्या ।

सरत्नां ताम्रकलशीं तामलंकृत्य नारद ।
अलंकारं च वस्त्रं च दक्षिणां च स्वशक्तितः ॥ ३२ ॥
कल्पकोटिशतं साग्रं शिवलोके महीयते ।
कृष्णाष्टमीव्रतं सम्यक्समाप्तं देवऋषे मया ॥ ३३ ॥
यदुक्तं देवदेवेन देव्यै विश्वसृजा पुरा ॥ ३४ ॥
**सूत उवाच**-एवं नन्दीश्वराच्छ्रुत्वा नारदो मुनिपुङ्गवाः ।
कृष्णाष्टमीव्रतं पुण्यं ययौ बदरिकाश्रमम् ॥ ३५ ॥
व्रतस्यास्य प्रभावं यः पठेद्वा शृणुयादपि ।
अतिसत्रस्य यज्ञस्य फलं प्राप्नोत्यनुत्तमम् ॥ ३६ ॥ ६२५ ॥

इति श्रीब्रह्मपुराणोपपुराणे श्रीसौरे सूतशौनकसंवादे कृष्णाष्टमीव्रतं नाम चतुर्दशोऽध्यायः ॥ १४ ॥

**सूत उवाच**-अन्यद्व्रतं पापहरं देवदेवस्य चक्रिणः ।
यदुक्तं भानुना पूर्वं याज्ञवल्क्याय योगिने ॥ १ ॥
**याज्ञवल्क्य उवाच**-जया च विजया चैव किंफला किंपरायणा ।
तस्यां विशिष्टं यत्पुण्यं वद कश्यपनन्दन ॥ २ ॥
**सूर्य उवाच**-द्वादशी विष्णुदयिता द्वादशी वैष्णवी तिथिः ।
श्रवणेन समायुक्ता कदाचिद्यदि लभ्यते ॥ ३ ॥
शुक्लपक्षे द्विजश्रेष्ठ विजया सा प्रकीर्तिता ।
उपोष्या सा प्रयत्नेन सर्वपापप्रणाशनी ॥ ४ ॥
या तु पुष्येण संयुक्ता फाल्गुनस्य सिता तु वै ।
सा जया द्वादशी नाम सर्वपापक्षयंकरी ॥ ५ ॥
कृतार्थो जायते मर्त्यस्तामुपोष्य द्विजोत्तम ।
तस्यां स्नातः सदा स्नातो भवेद्वै नात्र संशयः ॥ ६ ॥
संपूज्य वस्त्रपुष्पाद्यैः फलं साग्रं समश्नुते ।
एकं जप्त्वा सहस्रस्य जप्तस्याऽऽप्नोति वै फलम् ॥ ७ ॥
दानं सहस्रगुणितं तथा वै विप्रभोजनम् ।
होमश्चैवोपवासश्च सहस्रस्य फलप्रदः ॥ ८ ॥
ऋचमेकामधीते यो विप्रः श्रद्धासमन्वितः ।
ऋग्वेदस्य समग्रस्य सदैव फलमश्नुते ॥ ९ ॥

---

१ (घ. ङ. च. छ. ज.) एवं ज०। २ (च.) जपस्य०। ३ (क. ख. ग.) ०ति तत्फल०।

सप्तजन्मकृतं पापं स्वल्पं वा यदि वा बहु ।
तन्नाशयति गोविन्दस्तस्यामभ्यर्च्य यत्नतः ॥ १० ॥
यश्चोपवासं कुरुते तस्यां स्नातो द्विजोत्तम ।
सर्वपापविनिर्मुक्तो विष्णुलोके महीयते ॥ ११ ॥
यः कृत्वा द्वादशीमिमां क्षपयेद्भक्तिमान्नरः ।
ब्रह्मणो दिवसं यावत्तावत्स्वर्गे महीयते ॥ १२ ॥
तस्मिन्दिने तु संप्राप्ते यत्कर्तव्यं ब्रवीम्यहम् ।
एकादश्यां निराहारो द्वादश्यां विष्णुमर्चयेत् ॥ १३ ॥
गन्धपुष्पोपहारैश्च विविधैर्विधिवन्नरः ।
मत्स्याय पादौ प्रथमं कूर्माय च तथा कटिम् ॥ १४ ॥
वराहायेति जठरं[1] नरसिंहाय वा उरः ।
वामनायेति वैकुण्ठं भुजं रामद्वयेति च ॥ १५ ॥
यजेद्रामेति च मुखं मधुघ्नायेति नासिकाम् ।
कृष्णनाम्ना च नेत्रे द्वे बुद्धनाम्ना तथा शिरः ॥ १६ ॥
कल्किनाम्ना तथा केशान्वामनेति च सर्वतः ।
भक्त्या चाऽऽराध्य गोविन्दं गोपालं च तथा निशि ॥ १७ ॥
ततस्तस्याग्रतः शुद्धं न्यसेत्कृष्णाजिनं बुधः ।
तस्योपरि तिलानां तु कृष्णानामाढकं न्यसेत् ॥ १८ ॥
मध्यतः प्रस्थमेकं तु दरिद्रः कुडवं तथा ।
तिलालाभे यवाः कार्या गोधूमास्तदलाभतः ॥ १९ ॥
सुखं तत्र फलं ब्रह्मंस्तिलैः प्राप्नोति मानवः ।
सौवर्णं रौप्यताम्रं वा पात्रं कुर्यात्स्वशक्तितः ॥ २० ॥
प्रच्छाद्य पात्रं वासोभिरहतैः सुपरीक्षितैः ।
सौवर्णं वामनं कृत्वा साक्षसूत्रकमण्डलुम् ॥ २१ ॥
यथाशक्त्या कृतं ह्रस्वं कृतयज्ञोपवीतिनम् ।
एवंरूपं तु तं कृत्वा वामनं भक्तिमान्नरः ॥ २२ ॥
स्थापयेत्तन्तुपात्रस्थं भक्त्या सम्यगुपोषितः ।
पुष्पैर्गन्धैः फलैर्धूपैः कालोत्थैरर्चयेद्धरिम् ॥ २३ ॥

---

१ ( घ. ) ०ई नार०। २ ( क. ख. ग. ) ०न्दं देवं नारायणं नि०। ३ ( क. ख. ग. ) ०ति पूरुषः। सौ०।

पूर्वोक्तमन्त्रविधिना भक्ष्यैर्भोज्यैश्च भक्तितः ।
मत्स्यः कूर्मो वराहश्च नारसिंहोऽथ वामनः ॥ २४ ॥
रामो रामश्च कृष्णश्च बुद्धः कल्की च ते दश ।
एतैर्मन्त्रपदैर्देवं नैवेद्यैश्च प्रपूजयेत् ॥ २५ ॥
भक्तस्यात्र विशेषेण फलं कोटिगुणोत्तरम् ।
ततस्तस्य समीपे तु दधिभक्तं घटे न्यसेत् ॥ २६ ॥
करकं वारिपूर्णं च सुगन्धद्रव्यसंयुतम् ।
छत्रं चैवाक्षसूत्रं च पादुके गुडिकां तथा ॥ २७ ॥
एवं संपूज्य विधिवद्देवदेवं जनार्दनम् ।
जागरं तत्र कुर्वीत गीतवादित्रनादितैः ॥ २८ ॥
एवं सर्वरजन्यन्ते प्रभाते विमले सति ।
प्रदेयं शास्त्रविदुषे ब्राह्मणाय कुटुम्बिने ॥ २९ ॥
विष्णुभक्ताय शान्ताय विशेषेण प्रदीयते ।
गुरौ च सति नान्यस्मै दातव्यमिति निश्चितम् ॥ ३० ॥
वेदाध्येत्रे समं दानं द्विगुणं तद्विदे तथा ।
आचार्ये दानमेकं च सहस्रगुणितं तथा ॥ ३१ ॥
गुरौ सति ततोऽन्यस्य व्रतं यश्च निवेदयेत् ।
स दुर्गतिमवाप्नोति दत्तं भवति निष्फलम् ॥ ३२ ॥
अविद्यो वा सविद्यो वा गुरुरेव जनार्दनः ।
मार्गस्थो वा विमार्गस्थो गुरुरेव सदा गतिः ॥ ३३ ॥
प्रतिपन्नं गुरुं यश्च मोहाद्विप्रतिपद्यते ।
स जन्मकोटिं नरके पच्यते पुरुषाधमः ॥ ३४ ॥
एवं दत्वा विधानेन ब्राह्मणाय च भक्तितः ।
मन्त्रेणानेन दातव्यं पुराणपठितेन च ॥ ३५ ॥
मन्त्रेण प्रतिगृह्णीयाद्ब्राह्मणश्च द्विजोत्तम ।
वामनो बुद्धिदो दाता द्रव्यस्थो वामनः स्वयम् ॥ ३६ ॥
वामनोऽस्य प्रदाता वै वामनाय नमो नमः ॥ इति दानमन्त्रः ।
वामनः प्रतिगृह्णाति वामनो मे ददाति च ।
वामनस्तारको द्वाभ्यां वामनाय नमो नमः॥३७॥इतिप्रतिग्रहमन्त्रः।

१ (क.ख. ग.) ०श्च शक्ति०। २ (क. ख. ग.) भक्तिश्चात्र । ३ (घ. ङ. च. छ. ज.) संपूज्यविधिना देवं देव०। ४ (क. ख. ग.) प्रदापयेत् । ५ (क. ख. ग.) यस्तु मो०। ६ (घ. ङ. च. छ. ज.) ०मोऽस्तु ते ।

अन्नं प्रजापतिर्विष्णुरुद्रेन्द्रशशिभास्कराः ।
अग्निर्वायुर्यमश्चैव पापं हरतु मे सदा ॥ ३८ ॥ इत्यन्नदानमन्त्रः ।
पर्जन्यो वरुणः सूर्यः सलिलं केशवः शिवः ।
त्वष्टा यमो वैश्रवणः पापं हरतु मे सदा ॥३९॥ इतिसलिलदानमन्त्रः।
विप्राणां भोजनं दत्वा यथाशक्त्यथ दक्षिणाम् ।
पृषदाज्यं च संप्राश्य पश्चाद्भुञ्जीत वाग्यतः ॥ ४० ॥
भूयो यथेच्छया रात्रौ सर्वत्रैष विधिः स्मृतः ।
समापिते व्रते तस्मिन्ब्रह्मञ्शृणु च यत्फलम् ॥ ४१ ॥
ब्रह्मणः प्रलयं यावत्तावत्स्वर्गे महीयते ।
ब्रह्मलोकादिलोकेषु भुक्त्वा भोगाननेकशः[1] ॥ ४२ ॥
पुनः स्वर्गाद्भुवं प्राप्य जायते महतां कुले ।
सप्तद्वीपाधिपत्यं च प्राप्नुयान्नात्र संशयः ॥ ४३ ॥
सर्वान्कामानवाप्नोति ततो मुक्तिं च गच्छति ।
इन्द्रस्यावरजो देवो[2] रमाहृदयनन्दनः ॥ ४४ ॥
बलिर्बद्धस्त्वया देव गृहाणार्घ्यं तु वामन ॥ इत्यर्घ्यमन्त्रः ।
इतीदं शृणुयान्नित्यं पठेद्व्रतमनुत्तमम् ।
विमुक्तः सर्वपापेभ्यः श्रवणद्वादशीफलात् ॥ ४५ ॥ ६७० ॥

इति श्रीब्रह्मपुराणोपपुराणे श्रीसौरे सूतयाज्ञवल्क्यसंवादे श्रवणद्वादशीव्रतकथनं नाम पञ्चदशोऽध्यायः ॥ १५ ॥

**सूत उवाच**–अन्यद्व्रतमिदं वक्ष्ये शृणुध्वं मुनिपुङ्गवाः ।
सौभाग्यवर्धनं पुण्यं महापातकनाशनम् ॥ १ ॥
सर्वदुष्टोपशमनं सर्वैश्वर्यप्रदं शिवम् ।
यं यं कामयते कामं तं तं प्राप्नोति मानवः ॥ २ ॥
पुरा देवेन रुद्रेण दग्धः कामो दुरासदः ।
उपोषिता तिथिस्तेन तेनानङ्गत्रयोदशी ॥ ३ ॥
शुक्लपक्षे त्रयोदश्यां मासि मार्गशिरे द्विजाः ।
स्नानं कृत्वाऽथ विधिना सोपवासो जितेन्द्रियः ॥ ४ ॥
भक्त्या त्वनन्यया देवं पूजयेच्छशिशेखरम् ।
पुष्पैर्नानाविधैर्धूपैर्नैवेद्यैश्च फलैस्तथा ॥ ५ ॥

---

१ (क. ख. ग.) ०र्वान्भोगान०। २ (क. ख. ग.) ०वोऽदितेर्हृद०।

शंभुनाम्ना तिलैर्होमं कुर्यादष्टोत्तरं शतम् ।
अनङ्गनाम्ना संपूज्य मधु प्राश्य स्वपेन्निशि ॥ ६ ॥
दशानामश्वमेधानां फलं प्राप्नोति मानवः ।
योगेश्वरं सुसंपूज्य पौषे प्राश्नीत चन्दनम् ॥ ७ ॥
राजसूयस्य यज्ञस्य फलमाप्नोति मानवः ।
नाटेश्वरं सुसंपूज्य माघमासे जितेन्द्रियः ॥ ८ ॥
मौक्तिकं प्राश्य विप्रेन्द्राः फलं तस्य वदाम्यहम् ।
बहुस्वर्णस्य यज्ञस्य फलं शतगुणं भवेत् ॥ ९ ॥
संपूज्य फाल्गुने वीरं कक्कोलं प्राशयेन्निशि ।
गोमेधस्य फलं प्राप्य मोदते देवराडिव ॥ १० ॥
सुरूपं नाम वै चैत्रे चित्ररत्नविनिर्मितम् ।
कर्पूरं प्राशयेद्रात्रौ नरमेधफलं लभेत् ॥ ११ ॥
वैशाखे च महारूपं देवेशं च प्रपूजयेत् ।
जातीफलं च संप्राश्य गोसहस्रफलं लभेत् ॥ १२ ॥
ज्येष्ठे प्रद्युम्ननामानं लवङ्गं प्राशयेन्निशि ।
वाजपेयस्य यज्ञस्य फलमष्टगुणोत्तरम् ॥ १३ ॥
उमाभर्त्रेतिनामानमाषाढे संप्रपूजयेत् ।
तिलोदकं तु संप्राश्य पुण्डरीकफलं लभेत् ॥ १४ ॥
पूजयेच्छ्रावणे शूलपाणिनं परमेश्वरम् ।
प्राशयेद्गन्धतोयं तु अग्निष्टोमफलं लभेत् ॥ १५ ॥
मासे भाद्रपदे विप्राः सद्योजातं प्रपूजयेत् ।
अगरुं प्राशयित्वा तु सर्वयज्ञफलं लभेत् ॥ १६ ॥
मासे त्वाऽऽश्वयुजे प्राप्ते त्रिदशाधिपतिं यजेत् ।
स्वर्णोदकं तु संप्राश्य स्वर्णकोटिफलं लभेत् ॥ १७ ॥
विश्वेश्वरं च कार्तिक्यां पूजयेद्भक्तिसंयुतः ।
मदनस्य फलं प्राश्य कामवद्द्युतिमान्भवेत् ॥ १८ ॥
प्रतिमासं प्रवक्ष्यामि दन्तकाष्ठानि वै द्विजाः ।
मल्लिका खादिरं चैव प्लक्षापामार्गजं तथा ॥ १९ ॥
जम्बूदुम्बरजाश्वत्थं मालती वटजं तथा ।
कादम्बं च तथा प्लाक्षं दूर्वा चैव शिरीषजम् ॥ २० ॥

---

१ (घ. ङ. च. छ.) फलं प्राप्नो०। २(क. ख. ग.)०म देवेशं चैत्रे र०३(क.ख.ग.) विश्वेश्व०।

[1]विप्राः शृणुत पुष्पाणि नैवेद्यानि तथैव च ।
मालत्याः प्रथमं तावत्ततो मरुबकं तथा ॥ २१ ॥
करवीरं तथा कुन्दमर्कपत्राणि सुव्रताः ।
ततो मन्दारपुष्पाणि मल्लिकाकुसुमानि च ॥ २२ ॥
कादम्बं यूथिकापुष्पं धत्तूरं शतपत्रकम् ।
दूर्वाङ्कुराणि देयानि नैवेद्यानि यथाक्रमम् ॥ २३ ॥
ओदनं कृशरं चैव शर्करामोदकास्तथा ।
कंसारं यावकास्तत्र ततः [2]सोहालिका भवेत् ॥ २४ ॥
पञ्चखाद्यं परं प्रोक्तं घृतपूरमनन्तरम् ।
शालिभक्तेन नैवेद्यं गुणकास्तदनन्तरम् ॥ २५ ॥
नानाविधान्नं नैवेद्यं कार्तिक्यां परिकल्पयेत् ।
पूजानामानि वक्ष्यामि शृणुध्वं मुनिपुङ्गवाः ॥ २६ ॥
शंकराय नमः पादौ गौर्यै गुल्फे शिवाय च ।
शिवायै जानुनी पूज्य शंभवायोद्भवाय च ॥ २७ ॥
[3]कटिं मन्मथनाशाय मदनायै [4]सुरेश्वरे । ?
नाभिं भवाय संपूज्य भवान्यै नम इत्युमाम् ॥ २८ ॥
वक्षो देवाधिदेवाय अपर्णायै नमः शिवाम् ।
स्तनौ विश्वेश्वरायेति सुरकान्त्यै नमो नमः ॥ २९ ॥
कण्ठं भीमोग्ररूपाय गिरिजायै नमः शिवाम् ।
स्कन्धं त्रिदशवन्द्याय त्रिशूलिन्यै नमः शिवाम् ॥ ३० ॥
बाहू धूर्जटयेत्युक्त्वा धूसरायै नमः शिवाम् ।
हस्तौ शूलधरायेति शूलिन्यै नम इत्युमाम् ॥ ३१ ॥
मुखं देवस्य संपूज्य वामदेवेति वामतः ।
वामायै नम इत्युक्त्वा नासां चैव कपालिने ॥ ३२ ॥
मृडान्यै नम इत्युक्त्वा ललाटं चेन्दुधारिणे ।
अलकायै नमः पश्चात्त्रिनेत्राय नमस्तथा ॥ ३३ ॥
त्र्यक्ष्यै संपूजयेद्देवीं शिरोगङ्गाधराय च ।
कात्यायनीं ततः पूज्य व्योमकेशाय वै नमः ॥ ३४ ॥
केशान्संपूज्य विधिवत्केशिन्यै च नमो नमः ।
एवं संवत्सरे पूर्णे सौवर्णं कारयेच्छिवम् ॥ ३५ ॥

---

१ (क. ख. ग.) पुष्पाणि विप्राः शृणुत नै०। २ (क. ख.) सोभालि०। ३ (क. ख. ग.) कटिमनङ्गनाशाय । ४ (क. ङ.) ०श्वरैः । ना०।

ताम्रपात्रे तु संस्थाप्य कलशोपरि विन्यसेत् ।
शुक्लवस्त्रेण संछाद्य संपूज्य विधिवद्द्विजाः ॥ ३६ ॥
आचार्यायाथ तं दद्याद्वित्तशाठ्यविवर्जितः ।
कलशाः सोदका देया ब्राह्मणेभ्यः सदक्षिणाः ॥ ३७ ॥
ब्राह्मणान्भोजयेद्भक्त्या शिवभक्तिपरायणान् ।
एवं करोति यो विप्रा भक्त्याऽनङ्गत्रयोदशीम् ॥ ३८ ॥
प्राप्नोति राज्यं सौभाग्यं पुत्रांश्च चिरजीविनः ।
शिवलोकं च संप्राप्य शंभोः प्रियतमो भवेत् ॥ ३९ ॥ ७०९ ॥

इति श्रीब्रह्मपुराणोपपुराणे श्रीसौरे सूतशौनकसंवादेऽनङ्गत्रयोदशीव्रतकथनं नाम षोडशोऽध्यायः ॥ १६ ॥

***ऋषय ऊचुः**—यदुक्तं भवता सूत नैष्कैलं ज्ञानमुत्तमम् ।
श्रुतं चाखिलमस्माभिर्मनांसि हृषितानि नः ॥ १ ॥
भक्तिश्च शाश्वते शंभौ जाताऽस्माकं हि शाश्वती ।
वर्णाश्रमाचारविधिमिदानीं ब्रूहि तत्त्वतः ॥ २ ॥

**सूत उवाच**—चतुर्णामपि वर्णानां विधिं वक्ष्यामि सुव्रताः ।
यदुक्तं भानुना पूर्वं मनवे परमेष्ठिने ॥ ३ ॥
येन विश्वेश्वरः शंभुः कर्मयोगरतैः सदा ।
आराध्यते न चान्येन इत्येषा वैदिकी श्रुतिः ॥ ४ ॥
ब्राह्मणः क्षत्रियो वैश्यश्चतुर्थः शूद्र उच्यते ।
वर्णाश्चत्वार एवैते त्रय आद्या द्विजाः स्मृताः ॥ ५ ॥
गृहस्थो ब्रह्मचारी च वानप्रस्थो यतिस्तथा ।
चत्वारश्चाऽऽश्रमास्तेषां पञ्चमो नोपपद्यते ॥ ६ ॥
सर्वेषामाश्रमाणां च विहितं दण्डधारणम् ।
न दण्डेन विना कश्चिदाश्रमीति निगद्यते ॥ ७ ॥
ब्रह्मचारी भवेद्दण्डी कृष्णाजिनधरस्तथा ।
मेखली च तथा मुण्डी शिखी वा यदि वा जटी ॥ ८ ॥
भिक्षाहारेण सततं वर्तनं तस्य सुव्रताः ।
अग्निकार्यं तथा कुर्यात्सायं प्रातर्यथाविधि ॥ ९ ॥

* अयमेव पञ्चदशाध्यायः कखगसंज्ञितपुस्तकेष्वष्टादशः ।

१ (क. ख. ग.) राज्यसौ०। २ (क. ख. ग.) ०ष्कार्यं ज्ञा०। ३ (क. ख. ग.) ०रः सदा। प्रे०।

अग्निकार्यपरित्यागी पतितः सर्वकर्मसु ।
स्नात्वा संतर्प्य देवादीन्देवताभ्यर्चनं ततः ॥ १० ॥
अभिवादनशीलः स्याद्वृद्धेषु च यथाक्रमम् ।
कृतेऽभिवादने कुर्यान्नैव प्रत्यभिवादनम् ॥ ११ ॥
करोति नाभिवाद्योऽसौ यथा शूद्रस्तथैव सः ।
आध्यात्मिकं वैदिकं वा तथा लौकिकमेव वा ॥ १२ ॥
आददीत गुरोर्यस्मात्तं पूर्वमभिवादयेत् ।
असावहमिति ब्रूयात्प्रत्युत्थाय यवीयसः ॥ १३ ॥
नाभिवाद्यास्तु विप्रेण क्षत्रियाद्याः कथंचन ।
शिष्टानां च गृहान्नित्यं *भिक्षामाहृत्य सुव्रतः ॥ १४ ॥
निवेद्य गुरवेऽश्नीयाद्वाग्यतस्तदनुज्ञया ।
भैक्षेण वर्तनं नित्यं नैकान्नादी व्रती भवेत् ॥ १५ ॥
उपवाससमा भिक्षा प्रोक्ता वै ब्रह्मचारिणाम् ।
अनारोग्यमनायुष्यमस्वर्ग्यं चातिभोजनम् ॥ १६ ॥
अपुण्यं लोकविद्विष्टं तस्मात्तत्परिवर्जयेत् ।
प्राङ्मुखोऽन्नादि भुञ्जीत सूर्याभिमुख एव वा ॥ १७ ॥
नाद्यादुदङ्मुखो नित्यं विधिरेष सनातनः ।
पादौ प्रक्षाल्य विधिवदाचम्य प्रयतो द्विजः ॥ १८ ॥
भुञ्जीत मौनी सततं स्मरेद्देवं सदाशिवम् ।
सोपानत्को जलस्थो वा नोष्णीषी चाऽऽचमेद्बुधः ॥ १९ ॥
न चैव वर्षधाराभिर्न तिष्ठन्प्रलपन्न च ।
प्राश्नीयात्रिरपः पूर्वं ब्राह्मेण प्रयतो द्विजः ॥ २० ॥
संवृताङ्गुष्ठमूलेन मुखं चैवमुपस्पृशेत् ।
अङ्गुष्ठानामिकाभ्यां च संस्पृशेन्नयनद्वयम् ॥ २१ ॥
अङ्गुष्ठतर्जनीभ्यां च संस्पृशेन्नासिकापुटे ।
कनिष्ठाङ्गुष्ठयोगेन स्पृशेच्छ्रोत्रयुगं द्विजः ॥ २२ ॥
सर्वाभिरङ्गुलीभिश्च हृदयं च तलेन वा ।
संस्पृशेद्वै शिरस्तद्वदङ्गुष्ठेनाथवा द्वयम् ॥ २३ ॥

* भिक्षामाहृत्येत्यादि वर्तनं नित्यमित्यन्तं कखसंज्ञितयोः पुस्तकयोर्नास्ति ।

१ (अ.) भैक्ष्येण। २ (च.) ०न्नादि व्रतं भ०। ३ (ग.) वा सोष्णीषी नाच०।

विन्यस्य दक्षिणे कर्णे ब्रह्मसूत्रमुदङ्मुखः ।
दिवा मूत्रपुरीषे[1] चै शर्वर्यां दक्षिणामुखः ॥ २४ ॥
आच्छाद्य पर्णैर्वसुधां तृणैर्वा मौनसंयुतः ।
शिरः प्रावृत्य विप्रेन्द्रा नान्यथा च कदाचन ॥ २५ ॥
पथि गोष्ठे नदीतीरे छायायां कूपसंनिधौ ।
तुषाङ्गारकपालेषु न क्षेत्रे न चतुष्पथे ॥ २६ ॥
नोद्याने न श्मशाने च न पश्यंस्तारकादिकान् ।
न चैवाभिमुखः स्त्रीणां गुरुब्राह्मणयोर्गवाम् ॥ २७ ॥
शौचं पश्चात्प्रकुर्वीत गन्धलेपक्षयावधि ।
आन्तरं मनसः शुद्धिर्यथा भवति तद्द्विजाः ॥ २८ ॥
*जितेन्द्रियः स्यात्सततं वश्यात्माऽक्रोधनः शुचिः ।
प्रयुञ्जीत सदा वाचं मधुरां हितभाषिणीम् ॥ २९ ॥
परोपघातं पैशुन्यं कामं लोभं तथैव च ।
द्यूतं जनपरीवादं स्त्रीक्ष्वेल्यालम्भनं[8] तथा ॥ ३० ॥
गन्धमाल्यं रसं छत्रं वर्जयेद्दन्तधावनम् ।
सर्वं पर्युषितं वर्ज्यं कृतं च लवणं तथा ॥ ३१ ॥
मलापकर्षणं स्नानं शूद्राद्यैरभिभाषणम् ।
गुरोरवज्ञां सततं ब्रह्मचारी विवर्जयेत् ॥ ३२ ॥
उदकुम्भं सुमनसो गोशकृन्मृत्तिकां कुशान् ।
गुर्वर्थमाहरेन्नित्यं[9] भैक्षं चाहरहश्चरेत् ॥ ३३ ॥
आचम्य संयतो नित्यमधीयीत ह्युदङ्मुखः ।
उपसंगृह्य तत्पादौ वीक्षमाणो गुरोर्मुखम् ॥ ३४ ॥
सर्वेषामेव भूतानां वेदश्चक्षुः सनातनम् ।
वेदः श्रेयस्करः पुंसां नान्य इत्यब्रवीद्रविः ॥ ३५ ॥
अनधीत्य द्विजो यस्तु शास्त्राणि सुबहून्यपि ।
शृणोति ब्राह्मणो नासौ नरकाणि प्रपद्यते ॥ ३६ ॥

---

* छसंज्ञितपुस्तकेऽयं श्लोको न विद्यते

---

१ ( घ. ) ०षे तु श०। २ ( ग. ) च रात्रौ च द०। ३ ( ग. ) ०क्षयं वहिः । आ०। ४ (ङ.) ०युञ्जानः स०। ५ (घ. ङ. च. छ. ज.) काम्यं लो०। ६ (क. ख. ग. ज.) स्त्रीप्रेक्षाल०। ७ (ग.) ०र्न द्विजाः ॥ ३० ॥ ८ ( घ. ङ. च. छ. ज. ) ०कां तथा । गु०। ९ ( क. ग. घ. ङ. च. छ. ) भैक्ष्यं चा०। १० ( क. ख. ग.) ०तनः। वे०।

नाधीतविद्यो यो विप्र आचारेषु प्रवर्तते ।
नाऽऽचारफलमाप्नोति यथा शूद्रस्तथैव सः ॥ ३७ ॥
नित्यं नैमित्तिकं काम्यं यच्चान्यत्कर्म वैदिकम् ।
अनधीतस्य विप्रस्य सर्वं भवति निष्फलम् ॥ ३८ ॥
अनधीतस्य विप्रस्य पुत्रो वाऽध्ययनान्वितः ।
शूद्रपुत्रः स विज्ञेयो न वेदफलमश्नुते ॥ ३९ ॥
वेदं वेदौ तथा वेदान्वेदांश्च चतुरो द्विजाः ।
अधीत्य गुरुवे दत्वा दक्षिणां च भवेद्गृही ॥ ४० ॥
रूपलक्षणसंयुक्तां कन्यामुद्वाहयेत्ततः ।
अमातृगोत्रप्रभवामसमानार्षगोत्रजाम् ॥ ४१ ॥
मातृतः पञ्चमादूर्ध्वं पितृतः सप्तमात्तथा ।
अगोत्रकुलसंपन्नां रोगहीनां सुरूपिणीम् ॥ ४२ ॥
मातृतः पञ्चमादर्वाक्पितृतः सप्तमात्तथा ।
कन्यां विवाहयेद्यस्तु गुरुतल्पी भवेद्धि सः ॥ ४३ ॥
ब्राह्मेणैव विवाहेन दैवेनापि तथैव च ।
आर्षं वै केचिदिच्छन्ति धर्मकार्येषु गर्हितम् ॥ ४४ ॥
धारयेद्वैणवीं यष्टिमन्तर्वासस्तथोत्तरम् ।
यज्ञोपवीतद्वितयं सोदकं च कमण्डलुम् ॥ ४५ ॥
छत्रं चोष्णीषममलं पादुके वाप्युपानहौ ।
रौक्मे च कुण्डले नित्यं कृत्तकेशनखः शुचिः ॥ ४६ ॥
शुक्लाम्बरधरो नित्यं सुगन्धः प्रियदर्शनः ।
न जीर्णमलवद्वासा भवेद्वै विभवे सति ॥ ४७ ॥
ऋतुगामी भवेद्विप्रो निषिद्धतिथिवर्जितः ।
षष्ठ्यष्टम्यौ पञ्चदशीममावास्यां चतुर्दशीम् ॥ ४८ ॥
ब्रह्मचारी भवेन्नित्यं जन्मर्क्षे च विशेषतः ।
आददीताऽऽवसथ्याग्निं जुहुयाज्जातवेदसम् ॥ ४९ ॥
वेदोदितं स्वकं कर्म नित्यं कुर्यादतन्द्रितः ।
अकुर्वाणः पतत्याशु निरयानतिभीषणान् ॥ ५० ॥
कुर्याद्गृह्याणि कर्माणि संध्योपासनमेव च ।
सख्यं सामाधिकैः कुर्यादुपेयादीश्वरं सदा ॥ ५१ ॥

१ (ग.) ०म्यं तथाऽन्य०। २ (क.ग.) ०संमतां रो०। ३ (ङ. च. छ.) ०न्द्रितम्। अ०।

पापं न गूहयेद्विद्वान्न धर्मं ख्यापयेत्कचित् ।
वयसः कर्मणोऽर्थस्य श्रुतस्याभिजनस्य च ॥ ५२ ॥
वेषवान्बुद्धिसादृश्यमाचरन्विचरेत्सदा ।
श्रुतिस्मृत्युदितः सम्यक्साधुभिर्यश्च सेवितः ॥ ५३ ॥
तमाचारं निषेवेत साधून्वक्ष्यामि सांप्रतम् ।
गङ्गायमुनयोर्मध्ये मध्यदेशः प्रकीर्तितः ॥ ५४ ॥
तत्रोत्पन्ना द्विजा ये वै साधवस्ते प्रकीर्तिताः ।
यस्तैरनुष्ठितो धर्मः श्रुतिस्मृत्योश्च संगतः ॥ ५५ ॥
सदाचारः स वै प्रोक्तो देवदेवेन शंभुना ।
कुरुक्षेत्राश्च मत्स्याश्च पाञ्चालाः शूरसेनजाः ॥ ५६ ॥
एते देशाः पुण्यदेशाः सर्वे चान्ये च निन्दिताः ।
देशेष्वेतेषु निवसेद्ब्राह्मणैर्धर्मकाङ्क्षिभिः ॥ ५७ ॥
अत्रैव दृश्यते धर्मो नान्यत्रेत्यब्रवीद्रविः ।
अङ्गवङ्गकलिङ्गांश्च सौराष्ट्रं गुर्जरं तथा ॥ ५८ ॥
आभीरं कौङ्कणं चैव द्राविडं दक्षिणापथम् ।
अन्ध्रं च मागधं चैव देशानेतांश्च वर्जयेत् ॥ ५९ ॥
नित्यं स्वाध्यायशीलः स्यात्पञ्चयज्ञपरायणः ।
*शान्तो दान्तो जितक्रोधो लोभमोहविवर्जितः ॥ ६० ॥
सावित्रीजाप्यनिरतः शिवभक्तिपरायणः ।
श्राद्धकृद्दाननिरतः क्षमायुक्तो दयालुकः ॥ ६१ ॥
गृहस्थस्तु समाख्यातो न गृहेण गृही भवेत् ।
न शरीरं विना देवः पूज्यते गिरिजापतिः ॥ ६२ ॥
ब्रह्मचारी गृहस्थो वा वानप्रस्थोऽथवा यतिः ।
शिवभक्तियुतं कर्म कुर्वन्मुच्येत बन्धनात् ॥ ६३ ॥ ७७२ ॥

इति श्रीब्रह्मपुराणोपपुराणे श्रीसौरे सूतशौनकसंवादे वर्णाश्रमाचारविधिकथनं नाम सप्तदशोऽध्यायः ॥ १७ ॥

सूत उवाच—वदेन्नैवाप्रियं वाक्यं नानृतं न च मर्मभित् ।
न हिंस्यात्सर्वभूतानि न वेदानां च कुत्सनम् ॥ १ ॥

* कखघङचछसंज्ञितपुस्तकेष्वयं श्लोको नास्ति ।

१ (ग.) वेगवा०। २ (घ.) ०माचारं विच०। ३ (ग.) ०आभ्यां वै। ४ (ग. घ. ङ. च. छ. ज.) ०न भानुना। ५ (क. ख. च. छ.) ०श्चपञ्चा०। ६ (ग.) ०न्ये विनि०।

ईश्वरः सर्वभूतानां साक्षी यः सर्वकर्मणाम् ।
स्मरणान्मोक्षदः शंभुस्तस्य निन्दां विवर्जयेत् ॥ २ ॥
शास्त्रेषु दृश्यते शुद्धिर्महापातकिनामपि ।
निन्दकानां महेशस्य शुद्धिर्न खलु दृश्यते ॥ ३ ॥
जलं तृणं वा शाकं वा मृदं वा काष्ठमेव वा ।
परस्यापहरञ्जन्तुर्नरकं प्रतिपद्यते ॥ ४ ॥
नित्ययाचनको न स्याद्याचितं नैव याचयेत् ।
प्राणानपहरत्येष याचकस्तस्य दुर्मतिः ॥ ५ ॥
ग्रहीतव्यानि पुष्पाणि देवार्चनविधौ द्विजैः ।
नैकस्मादेव नियतमननुज्ञाय केवलम् ॥ ६ ॥
तृणं काष्ठं फलं पुष्पं प्रकाशं वै हरेद्बुधः ।
धर्मार्थं केवलं विप्रो ह्यन्यथा पतितो भवेत् ॥ ७ ॥
तिलमुद्गयवादीनां मुष्टिर्ग्राह्या यदि स्थितैः ।
क्षुधार्तैर्नान्यदा विप्रैर्धर्मविद्भिरिति स्थितिः ॥ ८ ॥
अनृतात्पारदार्याच्च तथाऽभक्ष्यस्य भक्षणात् ।
अश्रौतधर्मचरणात्क्षिप्रं नश्यति वै कुलम् ॥ ९ ॥
ज्ञानवृद्धस्तपोवृद्धो वयोवृद्ध इति त्रयः ।
पूर्वः पूर्वोऽभिवाद्यः स्यात्पूर्वाभावे परः परः ॥ १० ॥
त्रिपुण्ड्रधारी सततं ब्राह्मणः सर्वकर्मसु ।
भस्मनैवाग्निहोत्रस्य शिवाग्निजनितेन वा ॥ ११ ॥
न मूर्खैः सह संवासः पतितैर्न कदाचन ।
वेदनिन्दारतैर्नैव न चापीश्वरनिन्दकैः ॥ १२ ॥
पैशुन्यं शुष्कवैराणि विवादं वर्जयेत्सदा ।
धयन्तीं गां परक्षेत्रे न चाऽऽचक्षीत कस्यचित् ॥ १३ ॥
बहुभिर्न विरोधं च कुर्यान्न कृतिभिस्तथा ।
तिथिं पक्षस्य न ब्रूयान्नक्षत्राणि न निर्दिशेत् ॥ १४ ॥
न पापं पापिनां ब्रूयात्तथाऽपापमपापिनाम् ।
सत्येन तुल्यदोषी स्यादसत्येन द्विदोषभाक् ॥ १५ ॥

---

१ (क. ख. ग.) ०तुर्मरणं प्र०। २ (क. ख. ग.) ०याजन०। ३ (क. ख. ग.) ०प्राप्यो प्र०। ४ (क. ख. ग.) ०शुनं शु०। ५ (क. ख. ग.) ०न्न नक्षत्राणि नि०।

यानि मिथ्याऽभिशस्तानां पतन्त्यश्रूणि रोदनात् ।
तानि पुत्रान्पशून्घ्नन्ति तेषां मिथ्याऽभिशंसिनाम् ॥ १६ ॥
ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः ।
दृष्टं विरोधनं वृद्धैर्नास्ति मिथ्याभिशंसिनि ॥ १७ ॥
मानं मदं तथा शोकं द्वेषं च परिवर्जयेत् ।
*रविवारे न कुर्वीत भ्रष्टभैरवभक्षणम् ॥ १८ ॥
धनकामो जनः सत्यं नात्र कार्या विचारणा ।
रविवारे तु लवणं वर्ज्यं भोजनपात्रके ॥ १९ ॥
तथा तैलोपमर्दं च धनकामेन भूतले ।
न कुर्यात्कस्यचित्पीडां सुतं शिष्यं च ताडयेत् ॥ २० ॥
न नदीषु नदीं ब्रूयात्पर्वतेषु च पर्वतम् ।
प्रवासे भोजने चापि न त्यजेत्सहयायिनम् ॥ २१ ॥
शिरोभ्यङ्गावशिष्टेन तैलेनाङ्गं न लेपयेत् ।
न सर्पशस्त्रैः क्रीडेत स्वानि खानि न संस्पृशेत् ॥ २२ ॥
न संहताभ्यां पाणिभ्यां कण्डूयेदात्मनः शिरः ।
न लौकिकैः स्तवैर्देवांस्तोषयेद्बाह्यजैरपि ॥ २३ ॥
न दन्तैर्नखरोमाणि च्छिन्द्यात्सुप्तं न बोधयेत् ।
न बालातपमासेवेत्प्रेतधूमं विवर्जयेत् ॥ २४ ॥
नाशुद्धोऽग्निं परिचरेन्न देवान्कीर्तयेदृषीन् ।
न वामहस्तेनोद्धृत्य पिबेद्वक्त्रेण वा जलम् ॥ २५ ॥
करेणैकेन यद्वारि पीतं तन्मदिरासमम् ।
विश्वेश्वरमुमाकान्तं विश्वान्तर्यामिणं विभुम् ॥ २६ ॥
न ब्रह्माद्यैः समं ब्रूयाच्छक्तिभिर्न च पार्वतीम् ।
ब्रूयाद्यदि समं शंभुं ब्रह्मविष्ण्वादिभिः सुरैः ॥ २७ ॥
यः कश्चित्तमसाऽऽविष्टः कदाचिन्नैव तं स्पृशेत् ।
सर्वस्मादधिकं ब्रूयाद्भगवन्तमुमापतिम् ॥ २८ ॥
तथा देवीं च गिरिजां द्विजैः श्रेयोर्थिभिः सदा ।
परस्त्रियं न भाषेत नायाज्यं याजयेद्द्विजाः ॥ २९ ॥

* रविवार इत्यादि भूतल इत्यन्तं श्लोकद्वयं कखगघजसंज्ञितपुस्तकेषु नास्ति ।

१ (घ. ङ. च. छ. ज.) न शस्त्रसर्पैः क्री०। २ (घ.) बाल्यात०। ३ (च.) ०णं प्रभु०।

न देवायतनं गच्छेत्कदाचिच्चाप्रदक्षिणम् ।
न निन्देद्योगिनः सिद्धान्व्रतिनो नो यतींस्तथा ॥ ३० ॥
न चाऽऽक्रामेद्गुरोश्छायां न तथाऽऽज्ञां गुरोः सदा ।
वक्ष्यमाणेन विधिना स्नानं कुर्यात्समाहितः ॥ ३१ ॥
भूमिं व्याहृतिभिः स्पृष्ट्वा* खनमानं तु चाशया । ?
उद्धृताऽसीति संगृह्य गन्धद्वारेति गोमयम् ॥ ३२ ॥
अपाघमित्यपामार्गं दूर्वां 'संगृह्य दूर्वया ।
जलतीरं समासाद्य शुचौ देशे समाहितः ॥ ३३ ॥
आदित्या इति संप्रोक्ष्य कूलं तीर्थस्य सुव्रतः ।
शुचौ देशे प्रतिष्ठाप्य गायत्र्या प्रोक्षयेत्ततः ॥ ३४ ॥
भागद्वयं स तां पश्चादेकं दिक्षु विवर्जयेत् ।
यत इन्द्रादिमन्त्रैश्च चतुर्भिस्तु यथाक्रमम् ॥ ३५ ॥
अवगाह्य जले पश्चात्तीरे चैवोपविश्य च ।
अवशिष्टेन भागेन मन्त्रैश्चालेपयेत्क्रमात् ॥ ३६ ॥
अक्षीभ्यामितिमन्त्रेण मुखमालेपयेद्बुधः ।
ग्रीवाभ्यामिति च ग्रीवां तल्लिङ्गेन तथा भुजौ ॥ ३७ ॥
शरीरं यज्ञमुक्त्वाऽथ† हृदयं परिलेपयेत् ।
नाभिमानन्दनन्देति शिष्टं मूर्ध्नि विनिक्षिपेत् ॥ ३८ ॥
मूर्धानमितिमन्त्रेण तिलदूर्वाक्षतादिकम् ।
हिरण्यशृङ्गमित्युक्त्वा तीर्थं संप्रार्थ्य बुद्धिमान् ॥
जपेच्छुद्धमतिः पश्चात्सूक्तं चैवाघमर्षणम् ॥ ३९ ॥
द्रुपदां च जपेद्देवीं सर्वपापप्रणाशनीम् ।
इदं तु वारुणं स्नानं मन्त्रस्नानमथोच्यते ॥ ४० ॥
आग्नेयं भस्मना स्नानं वायव्यं रजसा गवाम् ।
दिव्यमातपवर्षेण तत्तु कार्यमनन्तरम् ॥ ४१ ॥
आर्द्रेण वाससा चान्यन्मानसं शिवचिन्तनम् ।
स्नानानां चैव सर्वेषां मानसं स्नानमुत्तमम् ॥ ४२ ॥

* अत्र खनित्वा च शलाकयेत्यपेक्षितमिति प्रतिभाति ।

† उक्त्वाऽथ हृदयमित्यादि हिरण्यशृङ्गमित्यन्तं घङचछजसंज्ञितेषु पुस्तकेषु नास्ति ।

१ (क. ख. ग. घ.) ०नो वा य०। २ (घ. ङ. च. छ.) ०याऽऽज्ञां गु०। ३ (घ. च. छ. ज.) संहृत्य दू०। ४ (क. ख. ग.) ०यं च तां । ५ (क. ख. ग.) ०न्त्रैस्तु च०।

स्नात्वाऽथाऽऽचम्य विधिवत्तर्पयेच्च सुरान्पितॄन् ।
पुनराचम्य विधिना मार्जनं च समाचरेत् ॥ ४३ ॥
दद्याज्जलाञ्जलिं पश्चात्सवित्रे[1] रुद्ररूपिणे ।
ततो दर्भासने स्थित्वा गायत्रीं प्रजपेद्द्विजः ॥ ४४ ॥
त्रैवर्णिकानां सर्वेषां गायत्री परमा गतिः ।
यद्गायत्र्याः परं तत्त्वं देवदेवो महेश्वरः ॥ ४५ ॥
इति ज्ञात्वा जपेद्विद्वान्गायत्र्याः फलमश्नुते ।
यो ह्यन्यथा तु मनुते गायत्रीं शिवरूपिणीम् ॥ ४६ ॥
पच्यते स महाघोरे नरके कल्पसंख्यया ।
पादाश्चत्वारो गायत्र्या वेदाश्चत्वार एव ते ॥ ४७ ॥
विरञ्चिविष्णुरुद्रेशाः पादानां देवताः क्रमात् ।
एवं ज्ञात्वा विधानेन गायत्रीं वेदमातरम् ॥ ४८ ॥
जपेन्माहेश्वरं ज्योतिर्नित्यमेव प्रकाशते ।
उपतिष्ठेदथाऽऽदित्यं रुद्ररूपिणमव्ययम् ॥ ४९ ॥
भक्तैः स्तोत्रैश्च मन्त्रैश्च वेदेतिहाससंभवैः ।
पावमानानि सूक्तानि ब्रह्मयज्ञप्रसिद्धये ॥ ५० ॥
जपेत्समाहितो भूत्वा रुद्रांश्चैव विशेषतः ।
मौनेनाऽऽगत्य भवनं पूजयेच्छिवमव्ययम् ॥ ५१ ॥
षडक्षरेण मन्त्रेण मानस्तोक्या तथैव च ।
षडक्षरात्परो मन्त्रो वेदेषु च चतुर्ष्वपि ॥ ५२ ॥
नास्तीत्युवाच भगवान्देवदेवः स्वयं रविः ।
पत्रैः पुष्पैः फलैर्वाऽपि दूर्वाभिरुदकैरपि ॥ ५३ ॥
नासंपूज्य महादेवं भुञ्जीत ब्राह्मणः सदा ।
ब्राह्मणक्षत्रियविशां कर्मिणां योगिनामपि ॥ ५४ ॥
गतिर्विश्वेश्वरो देवो भवो नान्य इतिश्रुतिः ।
कुर्यात्पञ्च महायज्ञान्गृहस्थः श्रद्धयाऽन्वितः ॥ ५५ ॥
पञ्चयज्ञपरित्यागादाश्रमादवहीयते ।
देवयज्ञो भूतयज्ञः पितृयज्ञस्तथाऽपरः ॥ ५६ ॥
मानुषो ब्रह्मयज्ञश्च पञ्च यज्ञाः प्रकीर्तिताः ।
कर्तव्यो वैश्वदेवस्तु देवयज्ञ उदीरितः ॥ ५७ ॥

१ (क.) ०त्रे ब्रह्मरू०। २ (क. ख. ग.) ०जपन्द्विजाः ॥ ४४ ॥ ३ (क. ख. ग. छ.) ०माद्देव०।

हुतशेषेण भूतेभ्यो बलिं भूतमखं विदुः ।
विप्रं तु भोजयेदेकं पितॄनुद्दिश्य यत्नतः ॥ ५८ ॥
नित्यश्राद्धं तदुद्दिष्टं पितृयज्ञं प्रचक्षते ।
यथाशक्त्यन्नमुद्धृत्य प्रदद्याद्ब्राह्मणाय वै ॥ ५९ ॥
अतिथिं पूजयेद्भक्त्या शिवभावसमन्वितः ।
सोऽतिथिः स्वर्गसोपानमिति देवोऽब्रवीद्रविः ॥ ६० ॥
प्रदद्याद्धृतकारं वा भिक्षां च भवभावतः ।
अक्षयं तत्फलं प्राहुर्भवभावो हि दुर्लभः ॥ ६१ ॥
वेदाभ्यासरतो नित्यं तद्विचाररतो भवेत् ।
ब्रह्मयज्ञः समुद्दिष्टो ब्रह्मलोकफलप्रदः ॥ ६२ ॥
एतान्कृत्वैव सततं भुञ्जीताऽऽश्रमधर्मभिः ।
अन्यथा यो हि भुङ्क्तेऽन्नं प्रेत्य शूकरतां व्रजेत् ॥ ६३ ॥
यदि विश्वेश्वरे स्थाणौ भक्तिरेकैव निश्चला ।
किं तैः पञ्चमहायज्ञैरन्यैर्वा विविधैर्मखैः ॥ ६४ ॥ ८३६ ॥

इति श्रीब्रह्मपुराणोपपुराणे श्रीसौरे सूतशौनकसंवादे द्विजधर्मकथनं नामाष्टादशोऽध्यायः ॥ १८ ॥

**सूत उवाच**–श्राद्धं दर्शेऽथ कर्तव्यमष्टकास्वयनद्वये ।
विषुवे च व्यतीपाते तीर्थेषु च विशेषतः ॥ १ ॥
परीक्ष्य ब्राह्मणान्सम्यग्वेदवेदाङ्गपारगान् ।
विशेषाच्छिवभक्तांश्च रुद्रजाप्यपरायणान् ॥ २ ॥
अभावे शिवभक्तानां सदाचाररतान्द्विजान् ।
भोजयेच्छ्रद्धया श्राद्धे शिवबुद्ध्या समाहितः ॥ ३ ॥
व्रतोपवासनिरताः सोमपाः संयतेन्द्रियाः ।
अग्निहोत्रपराः शान्ता बह्वृचा गुरुपूजकाः ॥ ४ ॥
त्रिणाचिकेताः शिष्याश्च त्रिमधुत्रिसुपर्णिकाः ।
मन्त्रब्राह्मणवेत्तारः पुराणस्मृतिपाठकाः ॥ ५ ॥
अध्यात्मशास्त्रनिरता ब्राह्मणाः पङ्क्तिपावनाः ।
एकं वा भोजयेद्विप्रं शिवभक्तिपरायणम् ॥ ६ ॥
तेन पूता भवन्त्येव ये केचित्पङ्क्तिदूषकाः ।
वधबन्धोपजीवी च वृषलः शूद्रयाजकाः ॥ ७ ॥

१ (क. ख. ग.) °येच्छ्रद्धया । २ (घ. ङ. च. छ. ज.) °मकर्म° । ३ (क. ख. ग.) °त्य सूक° । ४ (क. ख. ग.) एकं च भो° । ५ (घ. ङ. च. छ. ज.) °याचकाः ।

वेदविक्रयिणश्चैव श्रुतिविक्रयिणस्तथा ।
वेदविक्रयिणश्चान्ये कोपिनः कुण्डगोलकौ ॥ ८ ॥
कायस्था लम्बकर्णाश्च नित्यं राजोपसेवकाः ।
नक्षत्रतिथिवक्तारो भिषक्शास्त्रोपजीविनः ॥ ९ ॥
व्याधिनः काव्यकर्तारो गायकाश्चैव गोत्रिणः ।
वेदनिन्दारताश्चैव कृतघ्नाः पिशुनास्तथा ॥ १० ॥
हीनातिरिक्तदेहाश्च श्राद्धे वर्ज्याः प्रयत्नतः ।
ब्रह्महत्यामवाप्नोति यदि स्त्रीगमनं भवेत् ॥ ११ ॥
अध्वानं कलहं क्रोधं पुत्रभार्यादिताडनम् ।
श्राद्धभोजी भवेद्यो हि तद्दिने परिवर्जयेत् ॥ १२ ॥
प्रक्षालयेत्ततः पादावर्चिते मण्डले शुभे ।
चतुरस्रं ब्राह्मणस्य क्षत्रियस्य त्रिकोणकम् ॥ १३ ॥
वर्तुलं चैव वैश्यस्य शूद्रस्याभ्युक्षणं स्मृतम् ।
उपवेश्य ततो विप्रान्दत्वा चैव कुशासनम् ॥ १४ ॥
पश्चाच्छ्राद्धस्य रक्षार्थं तिलांश्च विकिरेत्ततः ।
विश्वेदेवानथाऽऽहूय विश्वेदेवास इत्यृचा ॥ १५ ॥
शंनोदेव्या जलं क्षिप्त्वा सपवित्रे तु भाजने ।
यवान्यवोऽसीति तथा गन्धपुष्पं च निक्षिपेत् ॥ १६ ॥
या दिव्या इति मन्त्रेण हस्तेऽर्घ्यं विनिक्षिपेत् ।
प्रदद्याद्गन्धमाल्यादि धूपं वासांसि शक्तितः ॥ १७ ॥
अपसव्यं ततः कृत्वा पितॄनावाहयेत्ततः ।
उशन्तस्त्वेति च ऋचा आवाह्य तदनुज्ञया ॥ १८ ॥
जपेदायन्तु न ऋचं तिलोऽसीति तिलांस्तथा ।
क्षिपेदर्घ्यं यथापूर्वं विप्रहस्ते समाहितः ॥ १९ ॥
संस्रवान्प्रक्षिपेत्पात्रे न्युब्जं चैव यथा भवेत् ।
पितृभ्यः स्थानमसीति ततोऽग्नौकरणं मतम् ॥ २० ॥
अग्नौ करिष्य इत्युक्त्वा कुरुष्वेत्यभ्यनुज्ञया ।
अन्नं घृतप्लुतं वह्नौ जुहुयात्पितृयज्ञवत् ॥ २१ ॥

---

१ (क. ग. घ.) शुचौ । च०। २ (घ.) ०वोऽसिमन्त्रेण ग०। ३ (क. ख. ग. घ. ङ. छ. ज.) ०र्घ्यर्घं वि०। ४ (क. ख. ग. घ. ङ. ज.) ०दर्घं य०।

अग्नेरभावाद्विप्रस्य पाणौ होमो विधीयते।
महादेवस्य पुरतो गोष्ठे वा श्रद्धयाऽन्वितः॥ २२॥
पिण्डनिर्वपणं कृत्वा ब्राह्मणांश्चैव भोजयेत्।
केचिदप्येवमिच्छन्ति नैव भानोर्मतं द्विजाः॥ २३॥
विविधं पायसं दद्याद्भक्ष्याणि सुबहून्यपि।
लेह्यं चोष्यं तथा कामैपुष्पमेव फलं विना॥ २४॥
विविधान्यपि मांसानि पितॄणां प्रीतिपूर्वकम्।
दत्तान्यपि निषिद्धानि श्राद्धं नैवाक्षयं भवेत्॥ २५॥
नाश्नाति यो द्विजो मांसं नियुक्तः पितृकर्मणि।
स प्रेत्य नरकं याति पशुत्वं च प्रपद्यते॥ २६॥
धर्मशास्त्रं पुराणं च तथाऽथर्वशिरस्तथा।
रुद्रांश्च पौरुषं सूक्तं ब्राह्मणाञ्श्रावयेत्ततः॥ २७॥
भुञ्जीरन्ब्राह्मणाः सर्वे वाग्यता घृतभोजनाः।
विकिरं निक्षिपेत्पश्चाच्छेषमन्नमथाब्रवीत्॥ २८॥
हस्तप्रक्षालनं दत्वा कुर्याद्वै स्वस्तिवाचनम्।
दद्याद्वै दक्षिणां शक्त्या स्वधाकारमुदीरयेत्॥ २९॥
दातारो नोऽभिवर्धन्तां वाजेवाजेति वै ऋचम्।
जप्त्वा च ब्राह्मणान्स्तुत्वा नमस्कृत्य विसर्जयेत्॥ ३०॥
भोक्ता च श्राद्धदस्तस्यां रजन्यां मैथुनं त्यजेत्।
स्वाध्यायं च तथाऽध्वानं प्रयत्नेन विवर्जयेत्॥ ३१॥
अध्वगो व्यसनी चैव विशेषेण ह्यनग्निकः।
आमश्राद्धं द्विजः कुर्याद्दुर्बलैस्तु सदैव हि॥ ३२॥
फलैरपि च मूलैर्वा कुर्याच्छ्राद्धं च निर्धनः।
स्नात्वा तिलोदकैर्वाऽपि तर्पयेच्छ्रद्धया पितॄन्॥ ३३॥
श्रद्धया तु कृते श्राद्धे भगवान्नीललोहितः।
प्रीतो भवति विश्वात्मा विश्वेशो हव्यकव्यभुक्॥ ३४॥ ८७०॥

इति श्रीब्रह्मपुराणोपपुराणे श्रीसौरे सूतशौनकसंवादे श्राद्धविधिकथनं नामैकोनविंशोऽध्यायः॥ १९॥

सूत उवाच-अथ धर्मो वनस्थानामुच्यते शृणुत द्विजाः।
प्रीतो भवतु येनासौ भगवान्भगनेत्रहा॥ १॥

१ (क. ख. ग.) °हूनि च। ले°। २ (क. ख. ग. ज.) °ममुष्णमे°। ३ (क. ख. ग. ज.) °तभाज°। ४ (क. ख. ग.) °लश्च स°। ५ (क. ख. ग.) °ञ्च तु नि°।

शरीरमात्मनो दृष्ट्वा पलिताद्यैश्च दूषितम् ।
पुत्रेषु भार्यां निक्षिप्य वनं गच्छेद्विजोत्तमः ॥ २ ॥
फलमूलाशनो नित्यं पञ्चयज्ञपरायणः ।
अतिथिं पूजयेद्भक्त्या मत्वा शर्व इति श्रुतिः ॥ ३ ॥
अष्टौ ग्रासांश्च भुञ्जीत चीरवासा भवेज्जटी ।
भवेत्त्रिषवणस्नायी नित्यं स्वाध्यायतत्परः ॥ ४ ॥
दयां च सर्वभूतेषु न कुर्यान्निशि भोजनम् ।
वर्जयेद्ग्रामजातानि पुष्पाणि च फलानि च ॥ ५ ॥
यदि गच्छेत्सपत्नीको ब्रह्मचार्येव सर्वदा ।
यदि गच्छेदृतौ भार्यां प्रायश्चित्ती भवेद्द्विजः ॥ ६ ॥
आदिगर्भो भवेत्तस्याः स चाण्डालसमो भवेत् ।
सर्वभूतानुकम्पी स्यात्संविभागरतः सदा ॥ ७ ॥
परिवादं मृषावादं निद्रालस्यं विवर्जयेत् ।
शीर्णपर्णाशनो वा स्यात्कृच्छ्रैर्वा वर्तयेत्सदा ॥ ८ ॥
शिवपूजारतो नित्यं शिवध्यानपरायणः ।
एवं यो वर्तते नित्यं वानप्रस्थाश्रमे द्विजः ॥ ९ ॥
परां गतिमवाप्नोति देहान्ते शाश्वतं पदम् ।
यदा मनसि वैराग्यं जायते सर्ववस्तुषु ॥ १० ॥
तदा च संन्यसेद्विद्वानन्यथा पतितो भवेत् ।
वेदान्ताभ्यासनिरतो दान्तः शान्तो जितेन्द्रियः ॥ ११ ॥
निर्ममो निर्भयो नित्यं निर्द्वन्द्वो निष्परिग्रहः ।
जीर्णकौपीनवासाः स्यान्मुण्डो नग्नोऽथवा भवेत् ॥ १२ ॥
त्रिदण्डी वा भवेद्विद्वानित्येषा वैदिकी श्रुतिः ।
समः शत्रौ च मित्रे च तथा मानापमानयोः ॥ १३ ॥
भैक्ष्येण वर्तयेन्नित्यं नैकान्नादी भवेत्क्वचित् ।
एकान्नादी भवेद्यस्तु कदाचिल्लम्पटो यतिः ॥ १४ ॥
निष्कृतिर्नैव तस्यास्ति धर्मशास्त्रेषु सर्वथा ।
भवेत्त्रिषवणस्नायी भस्मोद्धूलितविग्रहः ॥ १५ ॥
प्रणवं प्रजपेन्नित्यं मोक्षशास्त्रस्य चिन्तकः ।
वेदान्तांश्च पठेन्नित्यं तेषामर्थांश्च चिन्तयेत् ॥ १६ ॥

१ (घ.) °त्तमाः ॥ २ ॥ २ (घ. ङ. च. छ. ज.) °ति स्मृतिः । ३ (च. छ.) °त् । जीर्ण° । ४ (घ. ङ. च. छ. ज.) द्विजाः ॥ ९ ॥ ५ (क. ख. ग.) °यो योगी निर्द्व°।

आत्मानं चिन्तयेदेवमीशानं विभुमव्ययम् ।
अनन्तं निर्गुणं शान्तं पुरुषं प्रकृतेः परम् ॥ १७ ॥
कारणं सर्वजगतामाधारं सर्वतो मुखम् ।
चिद्रूपं शंकरं स्थाणुमानन्दमजरं[2] विभुम् ॥ १८ ॥
प्रेरकं सर्वभूतानामेकं ब्रह्म महेश्वरम् ।
अप्रमेयमनाद्यन्तं स्वयंज्योतिः सनातनम् ॥ १९ ॥
तन्निष्ठस्तन्मयो भूत्वा योगयुक्तो महामुनिः ।
अचिरेणैव कालेन परं[3] ब्रह्माधिगच्छति ॥ २० ॥
द्विजः संन्यसनादेव पापेभ्यः संप्रमुच्यते ।
ज्ञानी मोक्षमवाप्नोति विराट्पदमखे रतः ॥ २१ ॥
इति सर्वमशेषेण चातुराश्रम्यमीरितम् ।
योऽनुतिष्ठेत्प्रयत्नेन तस्य शंभुः प्रसीदति ॥ २२ ॥ ८९२ ॥

इति श्रीब्रह्मपुराणोपपुराणे श्रीसौरे सूतशौनकसंवादे वानप्रस्थादिधर्मकथनं नाम विंशोऽध्यायः ॥ २० ॥

**ऋषय ऊचुः**—कथं भगवता सूत सर्ग उक्तो विवस्वता ।
मन्वन्तराणि वंशाश्च तेषां च चरितं तथा ॥ १ ॥
प्रतिसर्गः पुनश्चैव[4] यथा भवति कृत्स्नशः ।
ब्रूहि नः सूत सकलं यथा व्यासाच्छ्रुतं त्वया ॥ २ ॥

**सूत उवाच**—शृणुध्वमृषयः सर्वे स्वेच्छालीलां महेशितुः ।
महादेवात्मकं सर्वं दृष्टमेतच्चराचरम् ॥ ३ ॥
क्षोभ्यं विश्वमिदं तेन क्षोभको भगवाञ्शिवः ।
स संकोचविकोशाभ्यां[5] प्रधानत्वे व्यवस्थितः ॥ ४ ॥
क्षोभ्यमानात्प्रधानाच्च पुंसः प्रादुरभूद्द्विजाः ।
यदेतद्द्विस्मृतं बीजं प्रधानपुरुषात्मकम् ॥ ५ ॥
महत्तत्त्वमिति प्रोक्तं बुद्धितत्त्वं तदुच्यते ।
बुद्ध्यादयो विशेषान्ता अव्यक्तादीश्वरेच्छया ॥ ६ ॥
पुरुषाधिष्ठितादेव जज्ञिरे मुनिपुङ्गवाः ।
अहंकारस्ततो जज्ञे तन्मात्राणि ततो द्विजाः ॥ ७ ॥

---

१ (क. ख. ग. ज.) ०र्द शुभ्रमा०। २ (क. ख. ग. ज.) ०र्द शिवम्। ३ (घ. ङ. च. छ. ज.) ०र्द ब्रह्म प्रकाशते ॥ २० ॥ ४ (क. ख. ग.) ०नश्चान्ते य०। ५ (घ. ङ. च. छ. ज.) ०काराभ्यां।

ततो भूतानि जातानि प्रेरितानि शिवेच्छया ।
मनस्त्वव्यक्तजं प्राहुः प्रोक्तं तच्चोभयात्मकम् ॥ ८ ॥
वैकारिकादहंकारात्सर्गो वैकारिको भवेत् ।
तैजसानीन्द्रियाण्याहुर्देवा वैकारिका दश ॥ ९ ॥
वैकारिकात्तैजसश्च भूतादिश्चैव तामसः ।
त्रिविधोऽयमहंकारः कथ्यते तत्त्वचिन्तकैः ॥ १० ॥
भूतादेरभवत्सर्गो भूततन्मात्रसंज्ञितः ।
विकुर्वाणस्तु भूतादिः शब्दमात्रं ससर्ज ह ॥ ११ ॥
आकाशो जायते तस्मात्तस्य शब्दो गुणो मतः ।
व्योम चैव विकुर्वाणं स्पर्शमात्रं ससर्ज ह ॥ १२ ॥
*तस्मादुत्पद्यते वायुः स्पर्शस्तस्य गुणो भवेत् ।
पवनश्च विकुर्वाणो रूपमात्रं ससर्ज ह ॥ १३ ॥
तेजश्चोत्पद्यते तस्माद्रूपं तस्य गुणं विदुः ।
तेजस्त्वेव विकुर्वाणं रसमात्रमभूत्ततः ॥ १४ ॥
उत्पद्यन्ते ततश्चाऽऽपो रसस्तासां गुणो मतः ।
विकुर्वन्त्यस्ततश्चाऽऽपो गन्धमात्रं ससर्जिरे ॥ १५ ॥
गन्धाच्च पृथिवी जाता गन्धस्तस्यास्तु वै गुणः ।
शब्दमात्रं यदाकाशं स्पर्शमात्रं समावृणोत् ॥ १६ ॥
द्विगुणः प्रोच्यते वायुः शब्दस्पर्शात्मकः स्मृतः ।
तथैव वियतो रूपं शब्दस्पर्शौ गुणावुभौ ॥ १७ ॥
तेजस्ततः स्यात्त्रिगुणं सशब्दस्पर्शरूपवत् ।
रसमात्रं गुणाः सर्वे त्रय आद्याः समाविशन् ॥ १८ ॥
आपश्चतुर्गुणास्तेन गन्धमात्रं समाविशन् ।
तस्मात्पञ्चगुणा भूमिर्बला भूतेषु कथ्यते ॥ १९ ॥
पुरुषाधिष्ठितत्वाच्च अव्यक्तानुग्रहेण च ।
महदादिविशेषान्ता ह्यण्डमुत्पादयन्ति ते ॥ २० ॥
तस्मिन्कार्यं च करणं संसिद्धं परमेष्ठिनः ।
प्राकृतेऽण्डे विरञ्चिस्तु [7]क्षेत्रज्ञो ब्रह्मसंज्ञितः ॥ २१ ॥

* तस्मादुत्पद्यत इत्यादि रसमात्रमभूत्तत इत्यन्तं घङचछसंज्ञितपुस्तकेषु न विद्यते ।

१ ( ङ. च. छ. ) ०जसाश्च । २ ( ङ. ) ०तोदिव तु ता० । ३ ( क. ख. ग. ञ. ) ०संज्ञकः । वि० । ४ ( ङ. ) ०तादि श० । ५ ( घ. ङ. च. छ. ज. ) ०संसिद्धं प० । ६ ( घ. ङ. च. छ. ज. ) ०नः । आकृ० । ७ ( ङ. ) क्षेत्रेशो ब्र० ।

सर्वैः शरीरैः प्रथमः स वै पुरुष उच्यते ।
आदिकर्ता स भूतानां ब्रह्माग्रे समवर्तत ॥ २२ ॥
मेरुरुल्वं भवेत्तस्य जरायुश्चापि पर्वताः ।
गर्भोदकं समुद्राश्च तस्याऽऽसन्परमेष्ठिनः ॥ २३ ॥
विश्वं तत्राभवद्विप्राः सदेवासुरमानुषम् ।
अद्भिर्दशगुणाभिस्तु बाह्यतोऽण्डं समावृतम् ॥ २४ ॥
आपो दशगुणेनैव तेजसा बहिरावृताः ।
तेजो दशगुणेनैव बाह्यतो वायुनाऽऽवृतम् ॥ २५ ॥
आकाशेनाऽऽवृतो वायुः खं तु भूतादिनाऽऽवृतम् ।
महता चैव भूतादिरव्यक्तेनाऽऽवृतो महान् ॥ २६ ॥
एतैरावरणैरण्डं सप्तभिः प्राकृतैर्वृतम् ।
अव्यक्तप्रभवं सर्वमानुलोम्येन लीयते ॥ २७ ॥
गुणाः कालवशादेव भवन्ति विषमाः समाः ।
गुणसाम्ये लयो ज्ञेयो वैषम्ये सृष्टिरुच्यते ॥ २८ ॥
ब्रह्माण्डमेव विप्रेन्द्रा ब्रह्मणः क्षेत्रमुच्यते ।
क्षेत्रज्ञश्च स एवोक्तो विरञ्चिश्च प्रजापतिः ॥ २९ ॥
सहस्रकोटयः सन्ति ब्रह्माण्डास्तिर्यगूर्ध्वजाः ।
ब्रह्माणो हरयो रुद्रास्तत्र तत्र व्यवस्थिताः ॥ ३० ॥
आज्ञया देवदेवस्य महादेवस्य शूलिनः ।
ब्रह्माण्डानामसंख्यानां ब्रह्मविष्णुहरात्मनाम् ॥ ३१ ॥
उद्भवे प्रलये हेतुर्महादेव इति श्रुतिः ।
अनन्तशक्तिर्भगवाननन्तमहिमास्पदः ॥ ३२ ॥
अनन्तैश्वर्यसंपन्नो महादेवोऽम्बिकापतिः ।
न तस्यं करणं कार्यं क्रिया वा विद्यते द्विजाः ॥ ३३ ॥
स्वेच्छया भगवानीशः क्रीडत्यद्रिजया सह ।
कथितः प्राकृतः सर्गः संक्षेपान्मुनिपुङ्गवाः ॥ ३४ ॥
अबुद्धिपूर्वकस्त्वेष ब्राह्मी सृष्टिरथोच्यते ॥ ३५ ॥ ९२७ ॥

इति श्रीब्रह्मपुराणोपपुराणे श्रीसौरे सूतशौनकसंवादे प्राकृतसर्गकथनं नामैकविंशोऽध्यायः ॥ २१ ॥

---

१ (ङ.) ०देवोऽम्बिकापातिः । २ (घ.) ०स्य कार० । ३ (क. ख. ग.) ०निसत्तमाः ॥३४॥

सूत उवाच-असंख्यातानि कल्पानि गतानि ब्रह्मणो द्विजाः ।
सांप्रतं[1] वर्तते यश्च वाराहमिति संज्ञितम् ॥ १ ॥
विस्तरं तस्य वक्ष्यामि शृणुध्वं मुनिपुङ्गवाः ।
शृण्वतां पापहानिः स्याच्छ्रद्धया सर्वदेहिनाम् ॥ २ ॥
एकं कल्पमहः प्रोक्तं ब्रह्मणः परमेष्ठिनः ।
रात्रिश्च तावती प्रोक्ता कल्पमानमथोच्यते ॥ ३ ॥
चतुर्युगानां साहस्रं कल्पमानं निगद्यते ।
शतत्रयं षष्ट्यधिकं कल्पानां वर्षमुच्यते ॥ ४ ॥
चतुर्मुखस्य विप्रेन्द्राः पराख्यं तच्छतं भवेत् ।
तदन्ते सर्वभूतानां प्रकृतौ विलयः स्मृतः ॥ ५ ॥
प्राकृतः प्रलयस्तेन कथ्यते कालचिन्तकैः ।
त्रयाणामपि[5] देवानां प्रकृतौ विलयो भवेत् ॥ ६ ॥
पुनः कालवशात्तेषामुत्पत्तिः कथ्यते बुधैः ।
कालो हि भगवाञ्शंभुर्महादेव इति श्रुतिः ॥ ७ ॥
सृज्यन्ते बहवो रुद्राश्चानन्ताश्च चतुर्मुखाः ।
नारायणा ह्यसंख्याता देवदेवेन शंभुना ॥ ८ ॥
संहर्ता च पुनस्तेषां कालरूपी महेश्वरः ।
परार्धं ब्रह्मणो विप्रा अतीतमिति नः श्रुतम् ॥ ९ ॥
पाद्मकल्पमतीतं यत्तत्परार्धं द्विजोत्तमाः ।
वाराहो वर्तते कल्पो वाराहो यत्र पद्मभूः ॥ १० ॥
आसीदेकार्णवं घोरं निर्विभागं तमोमयम् ।
एकार्णवे तदा तस्मिन्नष्टे स्थावरजङ्गमे ॥ ११ ॥
ब्रह्मा नारायणो भूत्वा योगनिद्रां समाश्रितः ।
सुष्वाप सलिले तस्मिन्नीश्वरेच्छाप्रणोदितः ॥ १२ ॥
मुनयः सत्यलोकस्था देवं नारायणं प्रति[8] ।
इमं चोदाहरन्त्यत्र श्लोकं मुनिवरोत्तमाः ॥ १३ ॥
आपो नारा इति प्रोक्ता आपो वै नरसूनवः ।
अयनं तस्य ताः प्रोक्तास्तेन नारायणः स्मृतः ॥ १४ ॥

---

१ ( घ. ) ०तं विद्यते । २ ( क. ख. ग. ) यत्तद्वारा० । ३ ( घ. ङ. च. छ. ) एवं क० । ४ ( क. ग ) ०ल्पमत्र नि० ( क. घ. ) ०ल्पमात्रं नि० । ५ ( क. ख. ग. ) ०पि देवानां । ६ ( क. ख. ग. ) ०द्रा ह्यन० । ७ ( क. ख. ग. ) पद्म० । ८ ( घ. ) ०ह्यसंस्थाना दे० । ९ ( ङ. ) ०ति । एवं श्लोकं ।

एवं युगसहस्रान्ते योगनिद्रामपास्य वै ।
ब्रह्मत्वमग्रहीद्देवः सृष्ट्यर्थं मुनिपुङ्गवाः ॥ १५ ॥
मग्नां जलान्तः पृथिवीं ज्ञात्वा देवश्चतुर्मुखः ।
तस्यास्तूद्धरणार्थाय वाराहं रूपमास्थितः ॥ १६ ॥
अप्रतर्क्यमनौपम्यं रूपं भगवतः परम् ।
क्षणाद्रसातलं गत्वा यज्ञेशः पुरुषोत्तमः ॥ १७ ॥
अभ्युज्जहार धरणीं दंष्ट्रया परमेश्वरः ।
सनकाद्यैः स्तूयमानो भगवान्हव्यकव्यभुक् ॥ १८ ॥
आसीद्यथाऽवनिः पूर्वं संस्थाप्य च तथा पुनः ।
कल्पान्तदग्धानखिलान्पर्वतांश्च महीधरः ॥ १९ ॥
ततश्चिन्तयतः सृष्टिं कल्पादौ पद्मजन्मनः ।
अबुद्धिपूर्वकः सर्गः प्रादुर्भूतस्तमोमयः ॥ २० ॥
तमो मोहो महामोहस्तमिस्रं चान्धसंज्ञितः ।
अविद्या पञ्चपर्वैषा प्रादुर्भूता महात्मनः ॥ २१ ॥
पञ्चधाऽवस्थितः सर्गो ध्यायतः सोऽभिमानिनः ।
संवृतस्तमसाऽतीव बीजं त्वगिव सर्वतः ॥ २२ ॥
अन्तर्बहिश्चाप्रकाशः स्तब्धो निःसंज्ञ एव च ।
मुख्या नगा इति प्रोक्ता मुख्यसर्गस्तु स स्मृतः ॥ २३ ॥
तं दृष्ट्वाऽसाधकं सर्गममन्यत्कमलासनः ।
पुनश्चिन्तयतः सर्गं तिर्यक्स्रोतोऽभ्यवर्तत ॥ २४ ॥
यस्य तिर्यक्प्रवृत्तः स तिर्यक्स्रोतस्ततः स्मृतः ।
पश्वादयः समाख्याता उत्पथग्राहिणश्च ये ॥ २५ ॥
तमप्यसाधकं दृष्ट्वा देवदेवः पितामहः ।
ससर्जान्यं पुनः सर्गमूर्ध्वस्रोतं तु सात्त्विकम् ॥ २६ ॥
देवसर्ग इति प्रोक्तः प्रकाशात्मा सुखाधिकः ।
पुनश्चिन्तयतोऽव्यक्तादर्वाक्स्रोतस्त्वसाधकः ॥ २७ ॥
प्रकाशबहुलाः सर्वे तमोयुक्ता रजोधिकाः ।
दुःखोत्कटाः सत्त्वयुक्ता मनुष्याः परिकीर्तिताः ॥ २८ ॥

---

१ (क. ख. ग.) ०स्य च । प्र०। २ (क. ख. ग.) ०संज्ञकः । अ०। ३ (घ. ङ. छ.) ०स्तु संस्मृ०। ४ (क. ख. ग.) ०तस्तु सा०। ५ (ख. ग.) ०युता म०।

पुनश्चिन्तयतस्तस्य भूतसर्गोऽभ्यजायत ।
संविभागरताः क्रूरास्ते परिग्राहिणः स्मृताः ॥ २९ ॥
एते पञ्च समाख्याताः सर्गा देवेन भानुना ।
महतः प्रथमः सर्गो ज्ञातव्यो ब्रह्मणो द्विजाः ॥ ३० ॥
तन्मात्राणां द्वितीयस्तु भूतसर्गः स उच्यते ।
वैकारिकस्तृतीयस्तु प्रोक्त ऐन्द्रियको द्विजाः ॥ ३१ ॥
इत्येष प्राकृतः सर्गः संभूतो बुद्धिपूर्वकः ।
चतुर्थो मुख्यसर्गस्तु मुख्या वै स्थावराः स्मृताः ॥ ३२ ॥
तिर्यग्योन्यस्तु यः प्रोक्तस्तिर्यग्योन्यस्तु पञ्चमः ।
तथोर्ध्वश्रोतसां षष्ठो देवसर्गस्तु स स्मृतः ॥ ३३ ॥
ततोऽर्वाक्श्रोतसां सर्गः सप्तमः स तु मानुषः ।
अष्टमो भौतिकः सर्गो भूतादीनां द्विजोत्तमाः ॥
नवमश्चैव कौमारः प्राकृता वैकृतास्त्विमे ॥ ३४ ॥ ९६१ ॥

इति श्रीब्रह्मपुराणोपपुराणे श्रीसौरे सूतशौनकसंवादे वाराहकल्प-
प्राकृतादिसर्गकथनं नाम द्वाविंशोऽध्यायः ॥ २२ ॥

**सूत उवाच**—ततः ससर्ज भगवान्देवोऽसावात्मनः सुतान् ।
सनातनं च सनकं सनन्दनमथापि च ॥ १ ॥
शंभुं सनत्कुमारं च पञ्चैतान्पद्मसंभवः ।
न सृष्टौ दधिरे बुद्धिं शिवैकध्यानतत्पराः ॥ २ ॥
*सृष्टौ तेष्वनपेक्षेषु मोहाविष्टः प्रजापतिः ।
तपस्तताप परमं न किंचित्प्रैत्यपद्यत ॥ ३ ॥
गते बहुतिथे काले समभूत्क्रोधमूर्छितः ।
प्राणात्मकः समुद्भूतो ललाटाद्ब्रह्मणो हरः ॥ ४ ॥
केनापि हेतुना विप्राः सूर्यकोटिसमप्रभः ।
निश्चक्राम ततो भित्त्वा भालं भगवतो विधेः ॥ ५ ॥
रोदयित्वाऽब्जजन्मानं तस्माद्रुद्र इति स्मृतः ।
अन्यानि सप्त नामानि शृणुध्वं मुनिपुङ्गवाः ॥ ६ ॥
भवः शर्वस्तथेशानः पशूनां पतिरेव च ।
भीमश्चोग्रो महादेव इति नामानि सत्तमाः ॥ ७ ॥

---

* घङचछजसंज्ञितपुस्तकेष्विदं श्लोकार्धं न दृश्यते ।

१ (घ.) °ग्योनयो ये प्रोक्तास्ति°। २ (ङ. च. छ.) °त्प्रतिपद्यते ॥ ३ ॥ ३ (घ. ङ. च. छ.) °ल्लोदितः ॥ ४ ॥

भूमिरापोऽनलो वायुर्व्योम सूर्यश्च चन्द्रमाः ।
अष्टमी दीक्षितस्तत्र मूर्तिरीशस्य शूलिनः ॥ ८ ॥
याभिर्व्याप्तमिदं[1] विश्वं विश्वस्यास्य जगन्मयः ।
तेन विश्वेश्वरो देव इति नाम्ना शिवः स्मृतः ॥ ९ ॥
प्रजाः सृजेति निर्दिष्टश्चन्द्रमौलिर्विरञ्चिना ।
ससर्ज मनसा रुद्रानात्मतुल्यान्महेश्वरः ॥ १० ॥
नीलकण्ठांस्त्रिनेत्रांश्च जटामुकुटमण्डितान् ।
*वृषध्वजान्वीतरागाञ्जरामरणवर्जितान् ॥ ११ ॥
सर्वज्ञाञ्शतकोटींस्तान्सर्वानुग्राहिणः परान् ।
दृष्ट्वा तान्विविधान्रुद्रान्विरञ्चिः प्राह शंकरम् ॥ १२ ॥
जरामरणनिर्मुक्तामीदृशीं मा सृजः प्रजाम् ।
सृजस्वान्यां सुरेशान प्रजां[2] मृत्युसमन्विताम् ॥ १३ ॥
ब्रह्माणमब्रवीच्छंभुर्नास्ति मे तादृशी प्रजा ।
ततः प्रभृति विश्वात्मा न प्रासूत शुभाः प्रजाः ॥ १४ ॥
रुद्रैरात्मसमुद्भूतैः क्रीडायुक्तस्तदाऽभवत् ।
स्थाणुवन्निश्चलो यस्मात्स्थितः स्थाणुरिति स्मृतः ॥ १५ ॥
ज्ञानं वैराग्यमैश्वर्यं तपः सत्यं क्षमा धृतिः ।
द्रष्टृत्वमात्मसंबोधो ह्यधिष्ठातृत्वमेव च ॥ १६ ॥
अव्ययानि दशैतानि नित्यं तिष्ठन्ति शंकरे ।
स एव भगवानीशो विश्वेशो नीललोहितः ॥ १७ ॥
ततस्तमाह भगवान्ब्रह्मा संवीक्ष्य शंकरम् ।
अनुगृह्य यथा मां[3] त्वं पुत्रत्वे दत्तवान्वरम् ॥ १८ ॥
अद्य[4] तत्सफलं जातं चिन्तितं यन्मयेप्सितम्[5] ।
एवं विश्वेश्वरं शंभुं समाभाष्य चतुर्मुखः ॥ १९ ॥
स्तोत्रेणानेन तुष्टाव शिरस्याधाय चाञ्जलिम् ।
**ब्रह्मोवाच**—नमस्तेऽस्तु महादेव नमस्ते परमेश्वर ।
नमः शिवाय देवाय नमस्ते ब्रह्मरूपिणे ॥ २० ॥

---

* वृषध्वजानित्यादि परानित्यन्तं कसंज्ञितपुस्तके नास्ति ।

---

१ (ध.) ०दं सर्वं वि०। २ (घ. ङ. च. छ.) प्रजां सृ०। ३ (क. ख. ग. घ. ङ.) मां च पु०। ४ (क. ख. ग.) ०द्य मस्तत्फलं। ५ (घ.) ०न्ममेप्सि०।

नमोऽस्तु ते महेशान नमः शान्ताय हेतवे ।
प्रधानपुरुषेशाय योगाधिपतये नमः ॥ २१ ॥
*नमः कालाय रुद्राय महाग्रासाय शूलिने ।
नमः पिनाकहस्ताय त्रिनेत्राय नमो नमः ॥ २२ ॥
नमस्त्रिमूर्तये[1] तुभ्यं ब्रह्मणो जनकाय च ।
ब्रह्मविद्याधिपतये ब्रह्मविद्याप्रदायिने ॥ २३ ॥
नमो वेदरहस्याय कालकालाय ते नमः ।
वेदान्तसारसाराय नमो वेदात्ममूर्तये ॥ २४ ॥
नमः शुद्धाय बुद्धाय योगिनां गुरवे नमः ।
प्रहीणशोकैर्विविधैर्भूतैः परिवृताय ते ॥ २५ ॥
नमो ब्रह्मण्यदेवाय ब्रह्माधिपतये नमः ।
त्र्यम्बकाय च देवाय नमस्ते परमेष्ठिने ॥ २६ ॥
नमो दिग्वाससे तुभ्यं नमो मुण्डाय दण्डिने ।
अनादिमलहीनाय ज्ञानगम्याय ते नमः ॥ २७ ॥
नमस्ताराय तीर्थाय नमो[7] योगर्द्धिहेतवे ।
नमो धर्माधिगम्याय योगगम्याय ते नमः ॥ २८ ॥
नमस्ते निष्प्रपञ्चाय निराभासाय ते नमः ।
ब्रह्मणे विश्वरूपाय नमस्ते परमात्मने ॥ २९ ॥
‡त्वयैव सृष्टमखिलं त्वय्येव सकलं स्थितम् ।
त्वया संह्रियते विश्वं प्रधानाख्यं जगन्मय ॥ ३० ॥
त्वमीश्वरो महादेवः परं ब्रह्म महेश्वरः ।
परमेष्ठी शिवः शान्तः पुरुषो निष्कलो हरः ॥ ३१ ॥
त्वमक्षरं परं ज्योतिरोंकारः परमेश्वरः ।
त्वमेव पुरुषोऽनन्तः प्रधानं प्रकृतिस्तथा ॥ ३२ ॥
भूमिरापोऽनलो वायुर्व्योमाहंकार एव च ।
यस्य रूपं नमस्यामि भवन्तं ब्रह्मसंज्ञितम् ॥ ३३ ॥

---

* कसंज्ञितपुस्तकेऽयं श्लोको न विद्यते ।

‡ घङचछअसंज्ञितपुस्तकेष्वयं श्लोको न विद्यते ।

---

१ (च. छ.) ०ये नित्यं ब्र०। २ (क. ख. घ.) ०ह्मणे ज०। ३ (क. ख. ग.) ०य ते। ब्र०।४ (घ. ङ. च. छ.) ०य कलिकाला०। ५ (क. ख. ग.) नमो बुद्धाय शुद्धाय यो०।६(ङ.) ०य च ॥ २५ ॥ ७ (घ. ङ. च. छ.) ०मो गम्याधिहे०। ८ (ख. ग.) ०देव प०।९ (क.ख.ग.) परब्र०। १० (क. ख. ग.) ०श्वर । पु०।

यस्य द्यौरभवन्मूर्धा पादौ पृथ्वी दिशो भुजाः ।
आकाशमुदरं तस्मै विराजे प्रणमाम्यहम् ॥ ३४ ॥
संतापयति यो नित्यं स्वभाभिर्भासयन्दिशः ।
ब्रह्मतेजोमयं विश्वं तस्मै सूर्यात्मने नमः ॥ ३५ ॥
हव्यं वहति यो नित्यं रौद्री तेजोमयी तनुः ।
कव्यं पितृगणानां च तस्मै वह्न्यात्मने नमः ॥ ३६ ॥
आप्याययति यो नित्यं स्वधाम्ना सकलं जगत् ।
पीयते देवतासंघैस्तस्मै चन्द्रात्मने नमः ॥ ३७ ॥
बिभर्त्यशेषभूतानि योऽन्तश्चरति सर्वदा ।
शक्तिर्माहेश्वरी तुभ्यं तस्मै वाय्वात्मने नमः ॥ ३८ ॥
सृजत्यशेषमेवेदं यः स्वकर्मानुरूपतः ।
स्वात्मन्यवस्थितस्तस्मै चतुर्वक्त्रात्मने नमः ॥ ३९ ॥
यः शेते शेषशयने विश्वमावृत्य मायया ।
आत्मानुभूतियोगेन तस्मै विश्वात्मने नमः ॥ ४० ॥
बिभर्ति शिरसा नित्यं द्विसप्तभुवनात्मकम् ।
ब्रह्माण्डं योऽखिलाधारं तस्मै शेषात्मने नमः ॥ ४१ ॥
यः परान्ते परानन्दं पीत्वा दिव्यैकसाक्षिणम् ।
नृत्यत्यनन्तमहिमा तस्मै रुद्रात्मने नमः ॥ ४२ ॥
योऽन्तरा सर्वभूतानां नियन्ता तिष्ठतीश्वरः ।
तं सर्वसाक्षिणं देवं नमस्ते परमात्मने ॥ ४३ ॥
यस्य केशेषु जीमूता नद्यः सर्वाङ्गसन्धिषु ।
कुक्षौ समुद्राश्चत्वारस्तस्मै व्योमात्मने नमः ॥ ४४ ॥
यं विनिद्रा यतश्वासाः संतुष्टाः समदर्शिनः ।
ज्योतिः पश्यन्ति युञ्जानास्तस्मै योगात्मने नमः ॥ ४५ ॥
यस्य भासा विभातीदं तदहं तमसः परम् ।
तत्त्वं सदा निराकारं चिद्रूपं पारमेश्वरम् ॥ ४६ ॥
*यया संतरते मायां योगी संक्षीणकल्मषः ।
अपरान्तामपर्यन्तां तस्मै विद्यात्मने नमः ॥ ४७ ॥

* गजसंज्ञितपुस्तकयोरयं श्लोको नास्ति ।

१ (घ. ङ. च. छ.) ०भूतयो०। २ (च. छ. ज.) ०मस्ये भवतस्तनुम् ॥ ४३ ॥ ३ (क. ख. ग.) ०द्रा जित०। ४ (क. ख. ग.) मृ०। नमामि सर्वगं नित्यं चि०।

नित्यानन्दं निराधारं निष्कलं परमं शिवम् ।
प्रपद्ये परमात्मानं भवन्तं परमेश्वरम् ॥ ४८ ॥
एवं स्तुत्वा महादेवं ब्रह्मा तद्भावभावितः ।
प्राञ्जलिः प्रणतस्तस्थौ गृणन्ब्रह्म सनातनम् ॥ ४९ ॥
ततस्तस्य महादेवो नित्ययोगमनुत्तमम् ।
ऐश्वर्यं ब्रह्मसद्भावं वैराग्यं च ददौ हरः । ५० ॥
कराभ्यां सुशुभाभ्यां च उपस्पृश्य महेश्वरः ।
व्याजहार महादेवः सोऽनुगृह्य पितामहम् ॥ ५१ ॥
यत्त्वयाऽभ्यर्थितो ब्रह्मन्पुत्रत्वेऽहं मया कृतम् ।
त्वमिदानीं ममाऽऽदेशात्सृजस्व विविधाः प्रजाः ॥ ५२ ॥
त्रिधा भिन्नोऽस्म्यहं ब्रह्मन्ब्रह्मविष्णुहराख्यया ।
सर्गरक्षालयगुणैर्निर्गुणोऽहं न संशयः ॥ ५३ ॥
स त्वं ममाग्रतः पुत्रः सृष्टिहेतोर्विनिर्मितः ।
ममैव दक्षिणादङ्गाद्वामाङ्गात्पुरुषोत्तमः ॥ ५४ ॥
ममैव हृदयाद्रुद्रः संजातः कामरूपधृक् ।
ब्रह्मविष्णुहराख्यानां यः परः परमेश्वरः ॥ ५५ ॥
तं महान्तं महादेवं ब्रह्मञ्जानन्ति सूरयः ।
एवं ब्रह्माणमाभाष्य दत्वा च विविधान्वरान् ॥ ५६ ॥
अन्तर्हितो महादेवः पश्यतः पद्मजन्मनः ।
अनुग्रहात्ततस्तस्य तस्माज्ज्ञानोदयो भवेत् ॥ ५७ ॥
ततश्च पाशविच्छित्तिः शिव एव भवेत्ततः ।
नश्यन्ति व्याधयस्तस्य गलगण्डग्रहादयः ॥ ५८ ॥
ऐहिकीं लभते सिद्धिं चिरंजीवित्वमेव च ।
सर्वपापविनिर्मुक्तः शिवलोके महीयते ॥ ५९ ॥ १०२० ॥

इति श्रीब्रह्मपुराणोपपुराणे श्रीसौरे सूतशौनकसंवादे हरोत्पत्त्यादि-
कथनं नाम त्रयोविंशोऽध्यायः ॥ २३ ॥

**ऋषय ऊचुः**—कथं स भगवाञ्शंभुः सर्वस्याऽऽद्योऽपि सन्विभुः ।
चतुर्मुखस्य पुत्रत्वमगमत्केन हेतुना ॥ १ ॥

---

१ (क. ख. ग.) नित्यं यो०। २ (घ. ङ.) ०भ्यां तु सु०। ३ (क. ख. ग.) ०याद्रुद्रः। ४ (क. ख. ग.) कालरू०। ५ (क. ख. ग.) तं मां महादेव इति ब्र०। ६ (क. ख. ग.) ०जीवत्व०।

दक्षिणाङ्गभवो ब्रह्मा महादेवस्य शूलिनः ।
कथं तत्पद्मयोनित्वं विरञ्चेरिति नो वद ॥ २ ॥
सूत उवाच–आसीदेकार्णवे घोरे नष्टे[1] वै सचराचरे ।
देवाश्च दानवाश्चैव मुनयो मनवस्तथा ॥ ३ ॥
[2]निर्विद्यन्ते तदा तस्मिन्संजाते प्रतिसंचरे ।
नारायणो महायोगी शेते तस्मिंस्तमोमये ॥ ४ ॥
योगनिद्रां समासाद्य शेषाहिशयने द्विजाः ।
उद्भूतं पङ्कजं तस्य नाभौ भगवतो हरेः ॥ ५ ॥
दिव्यगन्धसमोपेतं शतयोजनविस्तृतम् ।
तस्यैव शयनस्थस्य दिव्यं वर्षशतं गतम् ॥ ६ ॥
ब्रह्मा जगाम तं देशं यत्राऽऽस्ते पुरुषोत्तमः ।
समुत्थाप्य च तं ब्रह्मा करेण मधुसूदनम् ॥
मायया मोहितो ब्रह्मा तमुवाच सुरेश्वरम् ॥ ७ ॥
अस्मिन्नेकार्णवे घोरे शेते कोऽत्र भवानहो ।
ब्रूहीत्युक्तेऽब्रवीद्विष्णुर्ब्रह्माणं तेजसां निधिः[3] ॥ ८ ॥
न जानासि कथं मूढ मामन्तर्यामिणं विभुम् ।
सर्वस्याऽऽद्यं सुरश्रेष्ठं जानीहीत्यब्रवीद्विभुः ॥ ९ ॥
एवमुक्त्वा पुनश्चक्री जानन्नपि पितामहम् ।
को भवानिति तं प्राह ब्रह्मा हरिमथाब्रवीत् ॥ १० ॥
अहं वै सर्वभूतानामाद्यः सर्वजगत्पतिः ।
ब्रह्माणं मां परं देवं जानीहि पुरुषर्षभ ॥ ११ ॥
चराचरात्मकं विश्वं मयि तिष्ठति सर्वदा ।
मय्येव विलयश्चान्ते पुनरेव न संशयः ॥ १२ ॥
एवं पितामहेनोक्तो भगवान्कमलापतिः ।
प्रविष्टो ब्रह्मणो देहं तत्र लोकान्ददर्श सः ॥ १३ ॥
विस्मितः कमलाकान्तो निर्गतश्च विधेर्मुखात् ।
सहस्रशीर्षा पुरुषः पुनर्ब्रह्माणमब्रवीत् ॥ १४ ॥
विधे त्वमपि मद्देहं प्रविश्याशु विलोकय ।
चराचरात्मकाँल्लोकान्सदेवासुरमानुषान् ॥ १५ ॥

---

१ (घ.) ०ष्टे स्थावरजङ्गमे । दे०। २ (क. ख. ग.) न विद्य०। ३ (ग.) निधिम् ॥ ८ ॥

ततो विरिञ्चिर्भगवानुदरं कमलापतेः ।
प्रविश्य भुवनान्सर्वान्दृष्ट्वाऽभूद्विस्मितो विधिः ॥ १६ ॥
नापश्यन्निर्गमद्वारं पिहितानि च चक्रिणा ।
ततोऽसौ नाभिपद्मस्य नालमार्गमविन्दत ॥ १७ ॥
तेन मार्गेण निर्गत्य ब्रह्मा ब्रह्मविदां वरः ।
रेजे पङ्कजमध्यस्थो देवदेवः पितामहः ॥ १८ ॥
तमब्रवीद्गदापाणिर्ब्रह्माणममितद्युतिः ।
लीलार्थमेतत्सकलं पितामह कृतं मया ॥ १९ ॥
न मात्सर्यात्सुरश्रेष्ठ द्वाररोधो मया कृतः ।
त्वमेव जगतो मान्यः सर्वस्याऽऽद्यः पितामहः ॥ २० ॥
पुत्रत्वे त्वामहं याचे देहि मे कमलासन ।
पद्मयोनिरिति ख्यातिं मत्प्रियार्थं गमिष्यसि ॥ २१ ॥
ततः स्वयंभूर्विश्वादिश्चक्रिणे वरमुत्तमम् ।
दत्वा प्रहर्षमगमत्सर्वभूतात्मको विभुः ॥ २२ ॥
ततस्तमब्रवीद्विष्णुं नाऽऽवाभ्यां विद्यते परम् ।
त्वन्मयं मन्मयं सर्वमेका मूर्तिर्द्विधा स्थिता ॥ २३ ॥
एवं निगदितो विष्णुर्ब्रह्मणा परमेष्ठिना ।
विरञ्चेयं प्रतिज्ञा ते निष्फलैव भविष्यति ॥ २४ ॥
किं न पश्यसि विश्वेशं स्वयंज्योतिः सनातनम् ।
सर्वात्मकमुमाकान्तमनादिनिधनं परम् ॥ २५ ॥
गच्छाऽऽवाभ्यां परं देवमधिकं शरणं विधे ।
एवं हरेर्निगदितं श्रुत्वा ब्रह्मा तमब्रवीत् ॥ २६ ॥
आवाभ्यामधिकः कश्चिद्विद्यतेति मुधा हरे ।
भाषसे निद्रयाऽऽविष्टस्त्यज मोहं महामते ॥ २७ ॥
*विष्णुरुवाच—मैवं विधे यदज्ञात्वा परं भावं महेश्वरे ।
अस्तीति नान्यथाऽहं ते ब्रवीमि कमलासन ॥ २८ ॥
मोहितात्मा न संदेहो मायया परमेष्ठिनः ।
मायी विश्वात्मको रुद्रो मायाशक्तिस्तु शांकरी ॥ २९ ॥

* कखगघङचसंज्ञितपुस्तकेषु विष्णुरुवाचेति नास्ति ।

१ (घ.) ०मस्थानं पि०। २ (ख. ग. घ. च. छ. ज.) द्युतिम् । ली०। ३ (घ. ङ. च. छ. ज.) ०मेकमू०। ४ (क. ख. ग.) ०श्यति त्रि०। ५ (क. ख. ग. घ.) ०क्षरम् । नास्ती०। ६ (घ.) ०रे । नास्तीतिरत्वन्य०।

यस्मात्सर्वमिदं ब्रह्मविष्णुरुद्रेन्द्रपूर्वकम् ।
महाभूतेन्द्रियैः सर्वैः प्रथमं संप्रसूयते ॥ ३० ॥
सर्वैश्वर्येण संपन्नो नाम्ना सर्वेश्वरः स्वयम् ।
सर्वैर्मुमुक्षुभिर्ध्येयः शंभुराकाशमध्यगः ॥ ३१ ॥
योऽग्रे त्वां विदधे पुत्रं तव वेदांश्च दत्तवान् ।
यत्प्रसादात्त्वया लब्धं प्राजापत्यमिदं पदम् ॥ ३२ ॥
एको बहूनां जन्तूनां निष्क्रियाणां च सत्क्रियाः ।
य एकं बहुधा बीजं करोति स महेश्वरः ॥ ३३ ॥
जीवैरेभिरिमाँल्लोकान्सर्वानेको य ईशते ।
य एको भगवान्रुद्रो न द्वितीयोऽस्ति कश्चन ॥ ३४ ॥
सदा जनानां हृदये संनिविष्टोऽपि यः परैः ।
अलक्ष्यो लक्षयन्विश्वमधितिष्ठति सर्वदा ॥ ३५ ॥
यस्तु कालात्मयुक्तानि कारणान्यपि लीलया ।
अनन्तशक्तिरेकात्मा भगवानधितिष्ठति ॥ ३६ ॥
यस्य शंभोः परा शक्तिर्भावगम्या मनोहरा ।
निर्गुणा स्वगुणैरेव निगूढा निष्कला शिवा ॥ ३७ ॥
एष देवो महादेवो विज्ञेयः सर्वदा जनैः ।
न तस्य परमं किंचित्पदं समधिगम्यते ॥ ३८ ॥
अयमादिरनाद्यन्तः स्वभावादेव निर्मलः ।
अनन्तः परिपूर्णश्च स्वेच्छाधीनश्चराचरः ॥ ३९ ॥
उत्तरोत्तरभूतानामुत्तरश्च निरुत्तरः ।
अनन्तमहिमां भूमिरपरिच्छिन्नवैभवः ॥ ४० ॥
अनेन चित्रकृत्येन प्रथमं सृज्यते जगत् ।
अन्तकाले पुनश्चेदमस्मिन्प्रलयमेष्यति ॥ ४१ ॥
दृश्यश्च पतितैर्मूढैर्दुर्जनैरपि कुत्सितैः ।
भक्तैरन्तर्बहिश्चापि पूज्यः संभाव्य एव च ॥ ४२ ॥
तदीयं त्रिविधं रूपं स्थूलं सूक्ष्मं ततः परम् ।
अस्मदाद्यैः सुरैर्दृश्यं स्थूलं सूक्ष्मं तु योगिभिः ॥ ४३ ॥

१ (घ. ङ. च. छ.) ०ह्मन्ब्रह्मरु०। २ (क. ख. ग.) संपूर्णो ना०। ३ (घ.) ०मे मां वि०। ४ (क. ख. ग. ज.) परम्। ५ (घ. ङ. च. छ.) ०णां स स०। ६ (छ.) ०त्क्रियः। च। ७ (घ. ङ. च. छ.) ०क्ताभिः का०। ८ (घ. ङ. च. छ. ज.) ०रेवाऽऽत्मा। ९ (क. ख. ग. ङ.) ०भोरमा। नि०। १० (क. ख. ग.) ०मा शक्तिर०। ११ (क. ख. ग.)० र्दुर्जनै०। १२ (क. ख. ग. ङ.) ०भाव्य ए०।

ततः परं तु यन्नित्यं ज्ञानमानन्दमव्ययम् ।
तन्निष्ठैस्तत्परैर्भक्तैर्दृश्यते व्रतमास्थितैः ॥ ४४ ॥
बहुनाऽत्र किमुक्तेन ब्रह्मन्सर्वेश्वरे शिवे ।
भक्तिरेव सदा कार्या यया युक्तो विमुच्यते ॥ ४५ ॥
प्रसादादेव सा भक्तिः प्रसादो भक्तिसंभवः ।
यथेहाङ्कुरतो बीजं बीजतो वा यथाऽङ्कुरः ॥ ४६ ॥
तस्य प्रसादलेशेन पशोः पाशपरिक्षयः ।
तस्मात्पशुपतिः शंभुः पशवस्त्वस्मदादयः ॥ ४७ ॥
सर्वेषां मुक्तिदः शंभुस्तेषां भावानुरूपतः ।
गर्भस्थो मुच्यते कश्चिज्जायमानस्तथा परः ॥ ४८ ॥
बालो वा तरुणो वाऽथ वृद्धो वा मुच्यते परः ।
तिर्यग्योनिगतः कश्चिन्मुच्यते नारकी परः ॥ ४९ ॥
अपरस्तूदरप्राप्तो मुच्यते स्वपदक्षयात् ।
कश्चित्क्षीणपदो भूत्वा पुनरावर्त्य मुच्यते ॥ ५० ॥
कश्चिदूर्ध्वगतस्तस्मिन्स्थित्वा स्थित्वा विमुच्यते ।
तस्मान्नैकप्रकारेण नराणां मुक्तिरिष्यते ॥ ५१ ॥
ज्ञानभावानुरूपेण प्रसादेनैव निर्वृतिः ।
त्वमेका भगवन्मूर्तिरन्या नारायणी परा ॥ ५२ ॥
रौद्री तृतीया कथिता जगत्संहारकारिणी ।
एतासां प्रेरकः शंभुः स्वे स्वे कार्ये चतुर्मुख ॥ ५३ ॥
निर्गुणोऽपि गुणाध्यक्षः स्वतन्त्रैश्वर्यविग्रहः ।
तमीश्वरं महादेवं न पश्यसि कथं विधे ॥ ५४ ॥
दिव्यं ददामि ते चक्षुर्येन पश्यसि तं शिवम् ।
विष्णोर्भगवतो ब्रह्मा दिव्यं चक्षुरवाप्य तु ॥ ५५ ॥
अपश्यत्स महादेवं प्रत्यक्षं पुरतः स्थितम् ।
ब्रह्मा लब्ध्वा परं ज्ञानमैश्वरं निर्गुणं परम् ॥ ५६ ॥
तमेव शरणं गत्वा संस्तूय विविधैः स्तवैः ।
प्रीतो भूत्वा महादेवश्चतुर्मुखमथाब्रवीत् ॥ ५७ ॥

१ ( घ. ङ. छ. ज. ) ०मद्वय० । २ ( क. ख. ग. ) ०त्रे हृदयाश्रितैः । ३ ( घ. ङ. च. छ. ) ०मेको भगवान्मू० । ४ ( घ. ङ. च. छ. ) ०णं मत्वा ।

ईश्वर उवाच–स्तोत्रैर्बहुविधैर्भक्त्या तोषितोऽहं विधे त्वया ।
मुक्तो भविष्यसि क्षिप्रं मत्समश्च न संशयः ॥ ५८ ॥
मयैव सृष्टः सृष्ट्यर्थं त्वमेव च जनार्दनः ।
वरं ददामि ते ब्रह्मन्वरयस्व यथेप्सितम् ॥ ५९ ॥
एवं शंभोर्निगदितं श्रुत्वा चैव पितामहः ।
विष्णुं निरीक्ष्य पुरतः स्थितमाह महेश्वरम् ॥ ६० ॥
*ब्रह्मोवाच–भगवन्देवदेवेश सर्वज्ञ गिरिजापते ।
त्वामेव पुत्रमिच्छामि त्वया वा सदृशं सुतम् ॥ ६१ ॥
त्वन्मायामोहितः शंभो न वेद्मि त्वां परं शिवम् ।
नमामि तव पादाब्जं योगिनां भवभेषजम् ॥ ६२ ॥
श्रुत्वा विरञ्चेर्वचनं देवदेवः पिनाकधृक् ।
ब्रह्माणमब्रवीत्पुत्रं समालोक्याथ चक्रिणम् ॥ ६३ ॥
प्रार्थितं यत्त्वया ब्रह्मंस्तत्करिष्यामि पुत्रक ।
अहमंशेन भविता पुत्रस्तव पितामह ॥ ६४ ॥
ज्ञानं मद्विषयं क्षिप्रं भविष्यति तवानघ ।
सृज त्वं मत्प्रसादेन चराचरमिदं जगत् ॥ ६५ ॥
एष योगीश्वरः शार्ङ्गी ममैवांशो न संशयः ।
साहाय्ये भविता ब्रह्मन्ममाऽऽदेशात्तवानघ ॥ ६६ ॥
एवं दत्त्वा वरं शंभुर्ब्रह्मणे द्विजसत्तमाः ।
अथाब्रवीद्धृषीकेशं प्राञ्जलिं पुरतः स्थितम् ॥ ६७ ॥
वरं वरय दास्यामि तव नारायणाऽव्यय ।
नाऽऽवाभ्यां विद्यते भेदो मच्छक्तिस्त्वं न संशयः ॥ ६८ ॥
त्वन्मयं मन्मयं सर्वमव्यक्तं पुरुषात्मकम् ।
ज्ञानज्ञेयात्मकं विश्वं त्वन्मयं मन्मयं हरे ॥ ६९ ॥
ज्ञाताऽहं ज्ञानरूपस्त्वं मन्ताऽहं त्वं मतिर्हरे ।
प्रकृतिस्त्वं सुरश्रेष्ठ पुरुषोऽहं न संशयः ॥ ७० ॥
त्वं चन्द्रमा अहं सूर्यः शर्वरी त्वमहं दिनम् ।
त्वमेव माया विश्वस्य मायाऽहं परमो विभो ॥ ७१ ॥

---

* ब्रह्मोवाचेति घङचछसंज्ञितपुस्तकेषु नास्ति ।

---

१ (घ. ङ. च. छ. ज.) सृष्टेः सृ० । २ (ज.) ०इ परं वचः ॥ ६० ॥ ३ (ङ.) ०ब्रस्ते च पि० । ४ (क. ख. ग.) ०हाय्यस्त्वेन भविता मम० । ५ (घ. ङ.) ०ह्मणो द्वि० । ६ (घ. ङ. च. छ.) ०मार्थतः ॥ ७१ ॥

एवं शंभोर्वचः श्रुत्वा वासुदेवो निरञ्जनः ।
अब्रवीत्परमात्मानं महादेवं द्विजोत्तमाः ॥ ७२ ॥
**विष्णुरुवाच**–निश्चला त्वयि मे भक्तिर्भवत्वव्यभिचारिणी ।
वरैः किमन्यैर्भगवन्करोमि सुरपूजित ॥ ७३ ॥
एवमस्त्वित्यथाऽऽभाष्य समालिङ्ग्य च शार्ङ्गिणम् ।
पालयैतन्ममाऽऽदेशादित्युक्त्वाऽन्तर्हितो हरः ॥ ७४ ॥
अभवद्ब्रह्मणः पुत्रो यथा देवस्त्रिलोचनः ।
तथा सर्वमशेषेण कथितं मुनिपुङ्गवाः ॥ ७५ ॥ १०९५ ॥
इति श्रीब्रह्मपुराणोपपुराणे श्रीसौरे सूतशौनकसंवादे ब्रह्म-
पद्मयोनित्वादिकथनं नाम चतुर्विंशोऽध्यायः ॥ २४ ॥
**ऋषय ऊचुः**–कथं भगवती गौरी शंकरार्धशरीरिणी ।
परब्रह्मात्मिका नित्या परमाऽऽकाशमध्यगा ॥ १ ॥
सर्वशक्तिमयी शान्ता निर्गुणा निरुपद्रवा ।
आदिमध्यान्तरहिता सर्वोपाधिविवर्जिता ॥ २ ॥
स्वभाभिर्भासयन्तीदं विश्वमेतत्सुरेश्वरी ।
नित्यानन्दा निरातङ्का निर्विभागा निरञ्जना ॥ ३ ॥
पृथक्शरीरमकरोत्कथं सा परमेश्वरी ।
वयं तच्छ्रोतुमिच्छामः सूत वक्तुमिहार्हसि ॥ ४ ॥
**सूत उवाच**–विश्वेश्वरान्महादेवाद्वरं लब्ध्वा पितामहः ।
प्रजाः ससर्ज भगवान्न व्यवर्धन्त ताः प्रजाः ॥ ५ ॥
दुःखितोऽभूत्तदा ब्रह्मा प्रजा दृष्ट्वा तु दुर्बलाः ।
मेनेऽकृतार्थमात्मानं प्रादुर्भूतस्ततो हरः ॥ ६ ॥
ब्रह्माणमब्रवीच्छंभुर्ज्ञातं त्वद्दुःखकारणम् ।
सर्वतः शर्मणे यत्र भविष्यति तवानघ ॥ ७ ॥
क्रियतां वै तथेत्युक्त्वा कर्तुं समुपचक्रमे ।
अर्धनारीश्वरो देवः स्वयं विश्वेश्वरः शिवः ॥ ८ ॥
नारीभागान्महादेवः ससर्ज पृथगीश्वरीम् ।
ब्रह्मात्मिकां परां शक्तिं कोटिबालार्कभासुराम् ॥ ९ ॥

---

१ (क. ख. ग.) ०पप्लवा । २ (घ.) ०भासा भास०। ३ (ङ.) ०न्तीह वि०।४ (ख. ग. ङ.) ०र्मणे तत्र (घ.) ०र्मणो य०। ५ (च. छ.) ०देवः श्रियं ।

न तस्या विद्यते जन्म जातेति किल भाति या ।
परं भावं न जानन्ति यस्या ब्रह्मादयः सुराः ॥ १० ॥
यस्यास्तु शक्तिभिर्वाच्या ब्रह्माण्डानां च कोटयः ।
भर्तुरङ्काद्विभक्तेव दृष्टा साऽथ विरञ्चिना ॥ ११ ॥
अब्रवीत्प्राञ्जलिर्भूत्वा विश्वेश्वरीं पितामहः ॥ १२ ॥

**ब्रह्मोवाच**—त्वां नमामि शिवां शान्तामीश्वरार्धशरीरिणीम् ।
अनाद्यनन्तविभवां मूलप्रकृतिमीश्वरीम् ॥ १३ ॥
जन्ममृत्युजरातीतां जन्ममृत्युजरापहाम् ।
क्षेत्रज्ञशक्तिनिलयां परमाकाशमध्यगाम् ॥ १४ ॥
ब्रह्मेन्द्रविष्णुनमितामष्टमूर्त्यङ्गिनीमजाम् ।
प्रधानपुरुषातीतां सावित्रीं वेदमातरम् ॥ १५ ॥
ऋग्यजुःसामनिलयामृज्वीं कुण्डलिनीं पराम् ।
विश्वेश्वरीं विश्वमयीं विश्वेश्वरपतिव्रताम् ॥ १६ ॥
विश्वसंहारकरणीं विश्वमायाप्रवर्तिनीम् ।
सर्गस्थित्यन्तकरिणीं व्यक्ताव्यक्तस्वरूपिणीम् ॥ १७ ॥
पाहि मां देवदेवेशि शरणागतवत्सले ।
नान्या गतिर्महेशानि मम त्रैलोक्यवन्दिते ॥ १८ ॥
त्वं माता मम कल्याणि पिता सर्वेश्वरः शिवः ।
सृष्टोऽहं त्रिपुरघ्नेन सृष्ट्यर्थं शंकरप्रिये ॥ १९ ॥
विविधाश्च प्रजाः सृष्टा न वृद्धिमुपयान्ति ताः ।
ततः परं प्रजाः सर्वा मैथुनप्रभवाः किल ॥ २० ॥
संवर्धयितुमिच्छामि कृत्वा सृष्टिमतः परम् ।
शक्तीनां खलु सर्वासां त्वत्तः सृष्टिः प्रवर्तते ॥ २१ ॥
नैव सृष्टं त्वया पूर्वं शक्तीनां यत्कुलं शिवे ।
सर्वेषां देहिनां देवि सर्वशक्तिप्रदायिनी ॥ २२ ॥
त्वमेव चात्र सन्देहस्तस्मात्त्वं वरदा भव ।
मम सृष्टिविवृद्ध्यर्थमंशेनैकेन शाश्वते ॥ २३ ॥
मम पुत्रस्य दक्षस्य पुत्री भव शुचिस्मिते ।
प्रार्थिता वै तदा देवी ब्रह्मणा मुनिपुङ्गवाः ॥ २४ ॥

---

१ (क. ख. ग. ङ.) ०श्वेशीं प्रपि०। २ ( घ. ङ. च. छ. ज. ) ०मितां तथा मू०। ३ ( च. ज. ) यामि त्वां दे०। ४ ( घ. ) ०या सर्वे। ५ ( ङ. ) ०म शक्तिवि०। ६ ( क. ख. ग. ज. ) ०त्र ईश्वरि । प्रा०।

एकां शक्तिं भ्रुवोर्मध्यात्ससर्जाऽऽत्मसमप्रभाम् ।
आह तां प्रहसन्प्रेक्ष्य देवीं विश्वेश्वरो हरः ॥ २५ ॥
ब्रह्मणो वचनाद्देवि कुरु तस्य यथेप्सितम् ।
आदाय शिरसा शंभोराज्ञां सा परमेश्वरी ॥ २६ ॥
अभवद्दक्षदुहिता स्वेच्छया ब्रह्मरूपिणी ।
पुनराद्या परा शक्तिः शंभोर्देहं समाविशत् ॥ २७ ॥
अर्धनारीश्वरो देवो विभातीति हि नः श्रुतिः ।
ततः प्रभृति विप्रेन्द्रा मैथुनप्रभवाः प्रजाः ॥ २८ ॥
एवं वः कथिता विप्रा देव्याः संभूतिरुत्तमा ।
पठेद्यः शृणुयाद्वाऽपि संततिस्तस्य वर्धते ॥ २९ ॥ ११२४ ॥

इति श्रीब्रह्मपुराणोपपुराणे श्रीसौरे सूतशौनकसंवादे गौरीपृथक्शरीरत्वादिकथनं नाम पञ्चविंशोऽध्यायः ॥ २५ ॥

सूत उवाच–हिरण्यगर्भः शिवयोर्लब्ध्वा वरमनुत्तमम् ।
असृजद्भगवान्ब्रह्मा मरीच्यादीनकल्मषान् ॥ १ ॥
मरीचिभृग्वङ्गिरसः पुलस्त्यं पुलहं क्रतुम् ।
दक्षमात्रिं वसिष्ठं च सोऽसृजन्मनसा विभुः ॥ २ ॥
देवासुरमनुष्यांश्च पितॄंश्चापि प्रजापतिः ।
असृजत्क्रमशः सर्वानन्धकारे च राक्षसान् ॥ ३ ॥
गन्धर्वान्स तथा नागान्यक्षांश्चापि सहस्रशः ।
असृजन्मुखतो विप्रान्बाहुभ्यां क्षत्रियान्विभुः ॥ ४ ॥
ऊरुद्वयात्तथा वैश्यान्पादाच्छूद्रान्ससर्ज ह ।
छन्दांसि वेदान्यज्ञांश्च कल्पसूत्रमतः परम् ॥ ५ ॥
वेदाङ्गानि ततः सृष्ट्वा मैथुनप्रभवामतः ।
सृष्टिं कर्तुं मतिं चक्रे देवदेवः पितामहः ॥ ६ ॥
स्वयमप्यर्धतो नारी त्वर्धेन पुरुषोऽभवत् ।
अर्धेन नारी या तस्माच्छतरूपाऽभ्यजायत ॥ ७ ॥
स्वायंभुवं मनुं ब्रह्मा चार्धेन वपुषाऽसृजत् ।
शतरूपां च या देवी तपस्तप्त्वा सुदुश्चरम् ॥ ८ ॥

---

१ (क. ख. झ.) ०र्मध्ये सस०। २ (घ. ङ. च. छ.) ०स्य ममेप्सि० (ज.) ०स्य मयेप्सि० ३ (क. ख. ग. ल.) ०न्धर्वांश्च त०। ४ (घ.) मनश्चक्रे। ५ (घ. ङ. ज.) ०पा तु या।

अन्वपद्यत भर्तारं मनुं स्वायंभुवं द्विजाः ।
प्रियव्रतोत्तानपादौ मनोः स्वायंभुवात्सुतौ ॥ ९ ॥
महात्मानौ महावीर्यौ शतरूपा व्यजीजनत् ।
द्वे कन्ये लक्षणोपेते द्वाभ्यां सृष्टिरवर्धत ॥ १० ॥
आकूतिश्च प्रसूतिश्च रुचये प्रथमां ददौ ।
प्रसूतिं चैव दक्षाय स्वयं देवो मनुर्विराट् ॥ ११ ॥
चतस्रो विंशतिः कन्याः प्रसूत्यां संबभूविरे ।
धर्माय प्रददौ दक्षः श्रद्धाद्या वै त्रयोदश ॥ १२ ॥
ददौ स भृगवे ख्यातिं सतीं देवाय शूलिने ।
मरीचये च संभूतिं स्मृतिमङ्गिरसे तथा ॥ १३ ॥
पुलस्त्याय ददौ प्रीतिं पुलहाय तथा क्षमाम् ।
संततिं क्रतवे चैव अनसूयां तथाऽत्रये ॥ १४ ॥
वसिष्ठाय ददावूर्जां स्वधां पितृगणाय च ।
पावकाय तथा स्वाहां ददौ दक्षः प्रजापतिः ॥ १५ ॥
भृगोः ख्यात्यां समुत्पन्ना लक्ष्मीर्नारायणप्रिया ।
देवौ धाताविधातारौ मेरोर्जामातरौ शुभौ ॥ १६ ॥
आयतिर्नियतिश्चैव मेरोः कन्ये महात्मनः ।
बभूवतुस्तयोः पुत्रौ प्राणश्चाऽऽद्यश्च कथ्यते ॥ १७ ॥
मृकण्डुरथ तत्पुत्रो मार्कण्डेयो मृकण्डुतः ।
अभूद्वेदशिरा नाम प्राणस्य मुनिसत्तमाः ॥ १८ ॥
मरीचेरपि संभूतिः पौर्णमासमसूयत ।
कन्याचतुष्टयं चैव श्रद्धादीनां द्विजोत्तमाः ॥ १९ ॥
कर्दमं चाम्बरीषं च पुलहात्सुषुवे क्षमा ।
दुर्वाससं तथा सोमं दत्तात्रेयं च योगिनम् ॥ २० ॥
अनसूया तु सुषुवे पुत्रानत्रेरकल्मषात् ।
सिनीवालीं कुहूं चैव राकामनुमतिं तथा ॥ २१ ॥
स्मृतिश्चाङ्गिरसः पुत्रीः सूते लक्षणसंयुताः ।
प्रीत्यां पुलस्त्यादभवद्दत्तो निर्मानवैः सुतः ॥ २२ ॥
पूर्वजन्मनि योऽगस्त्यः ख्यातः स्वायंभुवेऽन्तरे ।
पुत्राणां षष्टिसाहस्रं संततिः सुषुवे क्रतोः ॥ २३ ॥

---

१ (ज.) अरुन्धतीं वसिष्ठाय स्व०। २ (क. ख. ग. ज.) ०पान् । सि०। ३ (क. ख. ग.) निर्नाम वै सु०।

वालखिल्या इति ख्याताः सर्वे ते चोर्ध्वरेतसः ।
वसिष्ठश्च तथोर्जायां सप्त पुत्रानजीजनत् ॥ २४ ॥
रजो गोत्रोऽर्ध्वबाहुश्च सवनश्चानघस्तथा ।
सुतपाः शुक्र इत्येते पुण्डरीका च कन्यका ॥ २५ ॥
ब्रह्मणस्तनयो वह्निर्योऽसौ रुद्रात्मकः स्मृतः ।
तस्मात्स्वाहा सुतांल्लेभे त्रीनुदारान्गुणाधिकान् ॥ २६ ॥
पावकः पवमानश्च शुचिरेतेऽग्नयस्त्रयः ।
निर्मथ्यः पवमानश्च वैद्युतः पावकः स्मृतः ॥ २७ ॥
सूर्ये तपति यो वह्निः शुचिरग्निरिहेष्यते ।
बभूवुः संततौ तेषां चत्वारिंशच्च पञ्च च ॥ २८ ॥
पावकाद्यास्त्रयश्चैते चत्वारिंशत्तथा नव ।
यज्ञेषु भागिनः सर्वे तथा सर्वे तपस्विनः ॥ २९ ॥
रुद्रार्चनपराः सर्वे त्रिपुण्ड्राङ्कितमस्तकाः ।
अयज्वानश्च यज्वानः पितरो ब्रह्मणः सुताः ॥ ३० ॥
अग्निष्वात्ता बर्हिषदो द्विधा तेषां व्यवस्थितिः ।
स्वधाऽनुसुषुवे तेभ्यः कन्ये द्वे लोकविश्रुते ॥ ३१ ॥
मेनां च धारिणीं तत्र योगमार्गरते उभे ।
मेना हिमवतः सूते मैनाकं क्रौञ्चमेव च ॥ ३२ ॥
गौरीं च गङ्गां च ततः कन्ये द्वे लोकमातरौ ।
मेरोस्तु धारिणी सूते मन्दरं चारुकन्दरम् ॥ ३३ ॥
महादेवप्रियतमं नानाधातुविचित्रितम् ।
धारिणी सुषुवे वेलां नियतिं चाऽऽयतिं तथा ॥ ३४ ॥
सागरात्सुषुवे वेला सामुद्रीं नाम नामतः ।
प्राचीनबर्हिषा सा च दश पुत्रानजीजनत् ॥ ३५ ॥
प्राचेतस इति ख्याताः सर्वे स्वायंभुवेऽन्तरे ।
भवशापादभूत्पुत्रो येषां दक्षः प्रजापतिः ॥ ३६ ॥

---

१ (क. ख. ग. ज. झ.) °सुताः पावकाः स्मृताः ॥ २७ ॥ २ (घ. ङ. छ.) °अग्निरिहे°। ३ (क. ख.) °ष्यति । ब°। ४ (ज.) °भूव संततिस्तेषां । ५ (ङ. छ. [illegible]सुताः ॥ ३० ॥ ६ (क. ख. ग. ज.) च धरणी चैव यो°। ७ (क. ख. ग. ज. झ.) °रस्तु धरणी । ८ (क. ख. ग. ज. झ.) °द् । धरणी ।

एषा दक्षस्य कन्यानां संततिः कथिता मया ।
अथेदानीं मनोः पुत्रसंततिं कथयामि वः ॥ २७ ॥ ११६१ ॥

इति श्रीब्रह्मपुराणोपपुराणे श्रीसौरे सूतशौनकसंवादे मरीच्यादि-
सर्गदक्षकन्यासंततिकथनं नाम षड्विंशोऽध्यायः ॥ २६ ॥

**सूत उवाच**–उत्तानपादस्य सुतो ध्रुवो नाम महामनाः ।
आराध्य परमं देवं नारायणमनामयम् ॥ १ ॥
निर्ममो निरहंकारस्तन्निष्ठस्तत्परायणः ।
प्रसादात्तस्य देवस्य प्राप्तवान्स्थानमुत्तमम् ॥ २ ॥
ध्रुवस्य पुत्राश्चत्वारः सृष्टिर्धन्यस्तथा परः ।
हर्यः शंभुर्महात्मानो वैष्णवाः प्रथितौजसः ॥ ३ ॥
छाया पञ्च सुतान्सूते सृष्टेर्धर्मपरायणान् ।
रिपुं रिपुंजयं विप्रं वृषलं वृकतेजसम् ॥ ४ ॥
रिपोर्भार्या तु बृहती प्रसूते चक्षुषं सुतम् ।
सूते पुष्करिणी पुत्रं चक्षुषश्चाक्षुषं मनुम् ॥ ५ ॥
तद्वंशजा असंख्याता अङ्गक्रतुशिवादयः ।
अङ्गाद्वेनस्ततो वैन्यस्तस्मात्पृथुरिति स्मृतः ॥ ६ ॥
ख्यातः स पृथिवीपालो येन दुग्धा वसुंधरा ।
न तत्समो नृपः कश्चिद्विद्यते पृथिवीतले ॥ ७ ॥
वासुदेवार्चनरतो वासुदेवपरायणः ।
तपसाऽऽराध्य गोविन्दं गोवर्धनगिरौ शुभे ॥ ८ ॥
प्रीतस्तमब्रवीद्विष्णुः पृथुं मुनिवरोत्तमाः ।
मत्प्रसादेन राजर्षे पुत्रौ तव भविष्यतः ॥ ९ ॥
सार्वभौमौ महात्मानौ मद्भक्तौ पितृतत्परौ ।
एवं लब्धवरो राजा देवेशे पुरुषोत्तमे ॥ १० ॥
आस्थाय परमां भक्तिं भगवद्ध्यानमाश्रितः ।
पृथोर्भार्या महाभागा कालेन सुषुवे सुतौ ॥ ११ ॥
शिखण्डिनं हविर्धानं सुशीलश्च शिखण्डिनः ।
श्वेताश्वतरनामानं शिवध्यानैकतत्परम् ॥ १२ ॥

---

१ (छ.) ०हामुनिः । आ०। २ (छ.) ०कारो नारायणपरा०। ३ (ग. घ. छ.) ०णा-त् । रि०। ४ (घ. ङ.) वृकलं । ५ (क. ज. ङ.) वृषते०। ६(क. ख. ग. ज.ङ.)विख्यातः पृ०। ७ (घ. ङ. च. छ.) ०वद्ध्यानमा०। ८ (क. ख. ग. ज. ङ.) ०नं शैव०।

उपास्य लब्धवांस्तस्मात्सुशीलो योगमैश्वरम् ।

**ऋषय ऊचुः**–सुशीलेन कथं राज्ञा प्राप्तं ज्ञानमनुत्तमम् ॥ १३ ॥

वयं तच्छ्रोतुमिच्छामो ब्रूहि सूत महामते ॥ १४ ॥

**सूत उवाच**–योऽसौ शिखण्डिनः पुत्रो ब्रह्मचर्याश्रमे रतः ।

अधीत्य विधिवद्वेदान्परं वैराग्यमास्थितः ॥ १५ ॥

विचारः श्रेयसे तस्य कदाचित्समभूद्द्विजाः ।

प्रवृत्तं च निवृत्तं च कर्म यद्द्विविधं मतम् ॥ १६ ॥

तयोरात्यन्तिकी मुक्तिर्मम केन भविष्यति ।

इति संचिन्त्य मनसा जगाम हिमवद्गिरिम् ॥ १७ ॥

तत्र धर्मवनं नाम मुनिसिद्धैर्निषेवितम् ।

अपश्यद्योगिभिर्जुष्टं महादेवकृतालयम् ॥ १८ ॥

यत्र सिद्धा महात्मानो मरीच्याद्या महर्षयः ।

नारायणश्च भगवांस्तथा चान्ये सुरासुराः ॥ १९ ॥

समाराध्य महादेवं सिद्धिं प्राप्ता ह्यनेकशः ।

यत्र मन्दाकिनी गङ्गा राजते ह्यघहारिणी ॥ २० ॥

अपश्यदाश्रमं तस्यास्तीरे योगीन्द्रसेवितम् ।

मन्दाकिनीजले तत्र स्नात्वाऽभ्यर्च्य महेश्वरम् ॥ २१ ॥

महादेवकथायुक्तैः स्तुत्वा स विविधैः स्तवैः ।

ध्यायमानः क्षणं तत्र स्थितो विश्वेश्वरं शिवम् ॥ २२ ॥

श्वेताश्वतरनामानमथापश्यन्महामुनिम् ।

महापाशुपतं शान्तं जीर्णकौपीनवाससम् ॥ २३ ॥

भस्मोद्धूलितसर्वाङ्गं त्रिपुण्ड्रतिलकान्वितम् ।

अभिवन्द्य मुनेः पादौ शिरसा प्राञ्जलिर्नृपः ॥ २४ ॥

अब्रवीत्तं मुनिश्रेष्ठं सर्वभूतानुकम्पिनम् ।

अद्य धन्यः कृतार्थोऽस्मि सफलं जीवितं मम ॥ २५ ॥

तपांसि सफलान्येव जातानि तव दर्शनात् ।

भवामि तव शिष्योऽहं रक्ष संसारजाद्भयात् ॥ २६ ॥

योग्यता मम चेदस्ति शिष्योऽहं भवितुं तव ।

सोऽनुगृह्याथ पुत्रत्वे राजानं मुनिपुङ्गवाः ॥ २७ ॥

---

१ ( ख ) ०मास्थितः ॥ १५ ॥

कारयित्वा स संन्यासं ददौ योगमनुत्तमम् ।
यत्तत्पाशुपतं योगमन्त्याश्रममिति श्रुतम् ॥ २८ ॥
गुह्यं तत्सर्ववेदेषु वेदविद्भिरनुष्ठितम् ।
अनुग्रहान्मुनेस्तस्य सोऽपि पाशुपतोऽभवत् ॥ २९ ॥
वेदाभ्यासरतः शान्तो भस्मनिष्ठो जितेन्द्रियः ।
संन्यासविधिमाश्रित्य सुशीलो मुक्तिमान्भवेत् ॥ ३० ॥११९१॥

इति श्रीब्रह्मपुराणोपपुराणे श्रीसौरे सूतशौनकसंवाद उत्तानपादसंतत्यादिकथनं नाम सप्तविंशोऽध्यायः ॥ २७ ॥

**सूत उवाच**—स्वयंभुवा समादिष्टः पूर्वं दक्षः प्रजापतिः ।
प्रजाः सृजेति सर्गादौ ससर्ज च सुरासुरान् ॥ १ ॥
प्रजापतेर्वीरणस्य कन्याऽसिक्नीति विश्रुता ।
षष्टिं दक्षोऽसृजत्कन्या असिक्न्यां वै प्रजापतिः ॥ २ ॥
ददौ च दश धर्माय कश्यपाय त्रयोदश ।
सप्तविंशतिं सोमाय चतस्रोऽरिष्टनेमिने ॥ ३ ॥
द्वे चैव बहुपुत्राय द्वे कृशाश्वाय धीमते ।
द्वे चैवाङ्गिरसे तद्वद्ददौ दक्षः प्रजापतिः ॥ ४ ॥
साध्या विश्वा च संकल्पा मुहूर्ता च ह्यरुन्धती ।
मरुत्वती वसुर्भानुर्लम्बा जामीति ता दश ॥ ५ ॥
धर्मस्य पत्नयस्त्वेतास्तासां संततिरुच्यते ।
साध्या बभूवुः साध्यायां विश्वायां विश्वदेवताः ॥ ६ ॥
संकल्पायास्तु संकल्पो मुहूर्तास्तु मुहूर्तजाः ।
अरुन्धत्यास्त्वरुन्धत्यां मरुत्वत्यां मरुत्वतः ॥ ७ ॥
वसोस्तु वसवः प्रोक्ता भानोस्ते भानवः स्मृताः ।
लम्बायां घोषनामानो नागवीथीस्तु जामिजाः ॥ ८ ॥
ज्योतिष्मन्तस्त्रयो देवा व्यापकाः सर्वतो दिशम् ।
वसवस्ते समाख्याताः सर्वभूतहितैषिणः ॥ ९ ॥
आपो नलश्च सोमश्च ध्रुवश्चैवानिलोऽनलः ।
प्रत्यूषश्च प्रभासश्च वसवोऽष्टौ प्रकीर्तिताः ॥ १० ॥

---

१ ( घ. ङ. च. छ.) ०लो भक्तिमाग्भवे०। २ ( घ. ) ०तेर्नृवीरस्य । ३ (घ.) ०नोस्तु भा०। ४ ( क. ख. ग. ङ. ) घोरना०। ५ ( घ. ) ०वीथिषु जा०। ( ङ. छ. ) वीथिस्तु जा०।

ध्रुवस्य पुत्रः कालः स्यात्सर्वलोकभयंकरः ।
विश्वकर्मा प्रभासस्य धर्मस्यैषा तु संततिः ॥ ११ ॥
अदितिश्च दितिश्चैव दनुरित्यपरा मता ।
अरिष्टा सुरसा प्रोक्ता स्वधा सुरभिरेव च ॥ १२ ॥
विनता च तथा ताम्रा कद्रूः क्रोधवशा त्विरा ।
मुनेश्च पत्नयस्त्वेताः कश्यपस्य द्विजोत्तमाः ॥ १३ ॥
अंशुर्धाता भगस्त्वष्टा मित्रोऽथ वरुणोऽर्यमा ।
विवस्वान्सविता पूषा अंशुमान्विष्णुरेव च ॥ १४ ॥
तुषिता नाम ते पूर्वं चाक्षुषस्यान्तरे मनोः ।
आदित्या अदितेः पुत्राः प्रोक्ता वैवस्वतेऽन्तरे ॥ १५ ॥
पुत्रद्वयं दितिः सूते कश्यपान्मुनिपुङ्गवात् ।
हिरण्यकशिपुं त्वेकं हिरण्याक्षमनन्तरम् ॥ १६ ॥
हिरण्यकशिपुर्योऽसौ ब्रह्मणो वरदर्पितः ।
शक्राद्या देवताः सर्वास्तेन दैत्येन बाधिताः ॥ १७ ॥
ब्रह्माणं शरणं गत्वा प्रोचुः प्राञ्जलयः सुराः ।

**देवा ऊचुः**—देवदेव जगन्नाथ चतुर्मुख सुरोत्तम ॥ १८ ॥
हिरण्यकेन दैत्येन शस्त्रास्त्रैः सूदिता वयम् ।
दाराश्चापहृतास्तेन वज्रादीन्यायुधानि च ॥ १९ ॥
त्रायस्वास्मान्भयत्रस्ताञ्शरणं नान्यदस्ति नः ।
एवं सुरैर्निगदितं श्रुत्वा चैव पितामहः ॥ २० ॥
देवैः सह ययौ तूर्णं यत्राऽऽस्ते विष्णुरव्ययः ।
संस्तूय विविधैः स्तोत्रैरब्रवीत्कमलासनः ॥ २१ ॥

**ब्रह्मोवाच**—हिरण्यकशिपुर्देव मद्वरेणातिगर्वितः ।
बाधते सकलान्देवान्मुनीन्निर्धूतकल्मषान् ॥ २२ ॥
यस्तं हनिष्यति क्षिप्रं न तं पश्यामि माधव ।
त्वमेव हन्ता तस्येति मत्वा वयमुपागताः ॥ २३ ॥
हन्तुमर्हसि तं शीघ्रं देवानां कार्यसिद्धये ।
श्रुत्वा नारायणो वाक्यमीरितं त्रिदिवौकसाम् ॥ २४ ॥

---

१ (घ. ङ. छ. ज.) अंशोर्धा०। २ (क. ख. ग. झ.) ०स्त्रवाः। हि०। ३ (घ.) ०स्त्रावैः सू०। (ङ.) ०स्त्राद्यैर्मर्दिता। ४ (क. ख. ग. ज.) ०न्भयात्तस्माच्छर०। ५ (ङ. छ.) ०न्देव मु०।

नरस्यार्धतनुं कृत्वा सिंहस्यार्धतनुं तथा।
नृसिंहरूपी भगवान्हिरण्यकशिपोः पुरे ॥ २५ ॥
आविर्बभूव भगवान्देवो नारायणः प्रभुः।
शुभ्राकारं महाघोरमसुराणां भयंकरम् ॥ २६ ॥
हिरण्यकशिपुर्दृष्ट्वा नृसिंहमतिभीषणम्।
वधाय प्रेषयामास प्रह्लादादीन्महासुरान् ॥ २७ ॥
प्रह्लादश्चानुह्लादश्च संह्लादो ह्लाद एव च।
हिरण्यकशिपोः पुत्राश्चत्वारः प्रथितौजसः ॥ २८ ॥
नरसिंहेन ते सार्धं युयुधुर्दानवास्तदा।
प्रह्लादः प्राहिणोद्ब्राह्ममस्त्रं तं नरकेसरिम् ॥ २९ ॥
वैष्णवास्त्रमनुह्लादः कौमारं च तथाऽपरः।
प्राहिणोद्ध्लाद आग्नेयं तथा चान्ये महासुराः ॥ ३० ॥
चत्वार्यस्त्राणि संप्राप्य भगवन्तं नृकेसरिम्।
बभूवुस्तानि भग्नानि यथा वज्राहता द्रुमाः ॥ ३१ ॥
गृहीत्वा चतुरः पुत्रान्हस्ताभ्यां नरकेसरिः।
चिक्षेप गगनाद्भूमौ गृहीत्वैवं पुनः पुनः ॥ ३२ ॥
एवं तान्व्यथितान्दृष्ट्वा हिरण्यकशिपुः स्वयम्।
जाज्वल्यमानः कोपेन ययौ यत्र नृकेसरिः ॥ ३३ ॥
विनिवृत्तोऽथ संग्रामात्प्रह्लादो दैत्यराट् ततः।
ज्ञात्वा तु भगवद्भावं नृसिंहस्यामितौजसः ॥
ध्यात्वा नारायणं देवं वारयामास दानवान् ॥ ३४ ॥
एष नारायणो योगी परमात्मा सनातनः।
ध्यातव्यो न तु योद्धव्यो भवद्भिरिति निश्चितम् ॥ ३५ ॥
पुत्रोदितमनादृत्य हिरण्यकशिपुः पुनः।
युयुधे हरिणा सार्धं यावद्वर्षशतत्रयम् ॥ ३६ ॥
अथ विश्वात्मको विष्णुः क्रोधसंरक्तलोचनः।
नखैर्विदारयामास हिरण्यकशिपुं तदा ॥ ३७ ॥ १२२८ ॥

इति श्रीब्रह्मपुराणोपपुराणे श्रीसौरे सूतशौनकसंवादे सुरासुरसृष्ट्यादिकथनं नामाष्टाविंशोऽध्यायः ॥ २८ ॥

---

१ (घ. ङ. छ.) ०वान्देवो नारायणः प्रभुः। आ०। २ (घ) भयानकम् ॥ २६ ॥ ३ (ङ. छ.) ०स्तथा ॥ २८ ॥ ४ (क. ख. ग. ज.) ०मितद्युतेः ॥ ३४ ॥

*सूत उवाच–हते हिरण्यकशिपौ प्रह्लादो दैत्यसत्तमः ।
हिरण्याक्षं महाबाहुं राज्ये समभियोजयत्(?) ॥ १ ॥
सोऽपि देवान्रणे जित्वा स्वर्गात्ते वै पलायिताः ।
हिरण्याक्षो महादेवं तपसाऽऽराध्य चान्तकम् ॥ २ ॥
लेभे पुत्रं महाबाहुं सर्वामरनिषूदनम् ।
हिरण्याक्षभयाद्देवाः शार्ङ्गिणं शरणं गताः ॥ ३ ॥
दृष्ट्वाऽथ भगवान्देवान्हिरण्याक्षवधाय वै ।
वाराहं रूपमास्थाय हिरण्याक्षो निषूदितः ॥ ४ ॥
हते तस्मिन्हिरण्याक्षे प्रह्लादो वैष्णवाग्रणीः ।
त्यक्त्वा तु तामसीं वृत्तिं स्वकीयं राज्यमास्थितः ॥ ५ ॥
ततः कदाचिद्देवानां मायया मोहितोऽभवत् ।
कंचन ब्राह्मणं दृष्ट्वा कृशाङ्गं गृहमागतम् ॥ ६ ॥
अवज्ञामकरोद्दैत्यः शप्तस्तेनाग्रजन्मना ।
बलं यस्य समाश्रित्य दैत्य मामवमन्यसे ॥ ७ ॥
भक्तिर्विनश्यतु क्षिप्रं[2] तव देवे जनार्दने ।
इति शप्त्वा ययौ विप्रः स्वाश्रमं मुनिपुङ्गवाः[3] ॥ ८ ॥
अथ दैत्यपतिर्युद्धमकरोद्विष्णुना सह ।
पितुर्वधमनुस्मृत्य देवाश्चान्ये विनिर्जिताः ॥ ९ ॥
अनुग्रहाद्भगवतः पूर्वस्माद्दैत्यराट् पुनः ।
त्यक्त्वा मायामयं सर्वं शार्ङ्गिणं शरणं ययौ ॥ १० ॥
अभिषिच्यान्धकं राज्ये योगयुक्तोऽभवत्स्वयम् ।
अथ देवो महादेवः शरण्यः सर्वदेहिनाम् ॥ ११ ॥
केनापि हेतुना भिक्षामकरोद्ब्राह्मणैः सह ।
संस्थाप्य मन्दरे[4] देवीं गिरिजां गिरिजापतिः ॥ १२ ॥
सनारायणकान्देवानकरोत्पार्श्वगाञ्शिवः ।
स्त्रीरूपधारिणो देवाः सेवन्ते पार्वतीं तदा ॥ १३ ॥
संस्थाप्य नन्दिप्रमुखानसंख्यातान्गणेश्वरान् ।
भैरवं च समादिश्य नन्दिनं द्वारदेशतः ॥ १४ ॥

---

* कखगसंज्ञितपुस्तकेषु सूत उवाचेति पदद्वयं नास्ति ।

---

१ ( क. ख. ग. ) चाधिक०। २ ( क. ) ०प्रं देव०। ३ ( घ. छ. ) ०ङ्गवः ॥८॥ ४ ( घ. ङ. च. छ. ज. ) मन्दिरे ।

एतस्मिन्नन्तरे प्राप्तो मन्दरं चान्धकासुरः।
आहर्तुकामः शर्वाणीं तं दृष्ट्वा कालभैरवः॥ १५॥
ताडयामास शूलेन पपात भुवि मूर्छितः।
पुनरुत्थाय वेगेन गदामादाय दैत्यराट्॥ १६॥
भैरवं ताडयामास तथा चान्यान्गणेश्वरान्।
दृष्ट्वा तदद्भुतं युद्धं विष्णुर्दानवमर्दनः॥ १७॥
असृजच्छक्तयो* दिव्यास्ताभिर्दैत्यः पराजितः।
ततो वधाय भगवान्रुद्रो मन्दरपर्वतम्॥ १८॥
प्राप्तो यत्र स्थिता देवी देवैः सह गणेश्वरैः।
दृष्ट्वा विश्वेश्वरं देवी शीघ्रं परमया मुदा॥ १९॥
ननाम शिरसा भक्त्या भर्तुश्चरणपङ्कजम्।
प्रणम्य दण्डवद्विष्णुं यद्वृत्तं तन्न्यवेदयत्॥ २०॥
श्रुत्वा तद्विस्मितो भूत्वा देव्या सह वरासने।
उपविष्टस्तदा सर्वे देवाः प्राञ्जलयः स्थिताः॥ २१॥
अथास्मिन्नन्तरे प्राप्तो हिरण्यनयनात्मभूः।
युयुधे स सुरैः सार्धं मातृभिश्च गणैः सह॥ २२॥
तेन ते निर्जिता देवाः शक्राद्याः सह मातृभिः।
युद्धं तदद्भुतं दृष्ट्वा शार्ङ्गी शंकरमब्रवीत्॥ २३॥
यथाऽसौ हन्यते दैत्यस्तथोपायं कुरु प्रभो।
एवं हरेर्वचः श्रुत्वा शंकरः कालभैरवम्॥ २४॥
वधाय प्रेषयामास दैत्येन्द्रस्य बलीयसः।
ततः स भैरवः शंभोः शिवस्याऽऽज्ञां विधाय च॥ २५॥
आदाय सहसा शूलं ययौ दैत्यस्य संगरम्।
शूलाग्रेण विनिर्भिद्य ननर्त स्वात्मलीलया॥ २६॥
शूलाग्रे स्थापिते दैत्ये ब्रह्माद्या मुनयस्तदा।
अस्तुवन्विविधैः स्तोत्रैर्हृष्टो लोकस्तदाऽभवत्॥ २७॥

**अन्धक उवाच**—नमामि मूर्ध्ना भगवन्तमेकं समाहिता यं विदुरीशतत्त्वम्।
पुरातनं पुण्यमनन्तरूपं कालं कविं योगवियोगहेतुम्॥ २८॥

---

* अत्र सर्वेष्वप्यादर्शपुस्तकेषु शक्तय इति प्रथमविभक्त्यन्तं पदं वर्तते। तत्र द्वितीयार्थे प्रथमा बोध्या। आर्षत्वात्।

---

१ (घ.ङ.च.) ०ष्ट्वा देवी शिवं देवं शी०। २ (घ.छ.) ०यस्तदा॥ २१॥ ३ (क.ख.ङ.छ.) शक्राद्याः। ४ (क.) शूलेनाग्रेण नि०। (ख.ग.) शूलेनाग्न्येण नि०। ५ (घ.ङ.छ.) ०दुरक्षत०।

दंष्ट्राकरालं दिवि नृत्यमानं हुताशवक्त्रं ज्वलनार्करूपम् ।
सहस्रपादाक्षिशिरोभियुक्तं भवन्तमेकं प्रणमामि रुद्रम् ॥ २९ ॥
जयादिदेवामरपूजिताङ्घ्रे विभागहीनामलतत्त्वरूपम् ।
त्वमग्निरेको बहुधा विभज्यसे वाय्वादिभेदैरखिलात्मरूपः ॥३०॥
त्वामेकमाहुः पुरुषं पुराणमादित्यवर्णं तमसः परस्तात् ।
त्वं पश्यसीदं परिपास्यजस्रं त्वमन्तको योगिगणाभिजुष्टः॥३१॥
एकान्तरात्मा बहुधा निविष्टो देहेषु देहादिविशेषहीनः ।
त्वमात्मतत्त्वं परमार्थशब्दं भवन्तमाहुः शिवमेव केचित् ॥३२॥
त्वमक्षरं ब्रह्म परं पवित्रमानन्दरूपं प्रणवाभिधानम् ।
त्वमीश्वरो वेदविदेषु सिद्धः स्वायंभुवोऽशेषविशेषहीनः ॥ ३३ ॥
त्वमिन्द्ररूपो वरुणोऽग्निरूपो हंसः प्राणो मृत्युरन्ताधियज्ञः ।
प्रजापतिर्भगवानेकरूपो नीलग्रीव स्तूयसे वेदविद्भिः ॥ ३४ ॥
नारायणस्त्वं जगतामनादिः पितामहस्त्वं प्रपितामहश्च ।
वेदान्तगुह्योपनिषत्सु गीतः सदाशिवस्त्वं परमेश्वरोऽसि ॥३५॥
नमः परस्तात्तमसः परस्मै परात्मने पञ्चपरान्तराय ।
त्रिमूर्त्यतीताय निरञ्जनाय सहस्रशक्त्यासनसंस्थिताय ॥ ३६
त्रिमूर्तयेऽनन्तपरात्ममूर्तये जगन्निवासाय जगन्मयाय ।
नमो ललाटार्पितलोचनाय नमो जनानां हृदि संस्थिताय ॥३७
फणीन्द्रहाराय नमोऽस्तु तुभ्यं मुनीन्द्रसिद्धार्चितपादपद्म ।
ऐश्वर्यधर्मासनसंस्थिताय नमः परान्ताय भवोद्भवाय ॥ ३८ ॥
सहस्रचन्द्रार्कसमूहमूर्तये नमोऽग्निचन्द्रार्कत्रिलोचनाय ।
नमोऽस्तु सोमायनमध्यमाय नमोऽस्तु देवाय हिरण्यबाहवे ॥३९
नमोऽतिगुह्याय गुहान्तराय वेदान्तविज्ञानविनिश्चिताय ।
त्रिकालहीनामलधामधाम्ने नमो महेशाय नमः शिवाय ॥ ४०
स्तवेनानेन भगवान्प्रीतो भूत्वाऽथ भैरवः ।
अवरोह्य च शूलाग्रादुवाच परमेश्वरः ॥ ४१ ॥
त्वयाऽहं स्तोत्रवर्येण तोषितो दैत्यपुङ्गव ।
प्रीतोऽस्मि तव दास्यामि गाणपत्यं हि दुर्लभम् ॥ ४२ ॥
नन्दीश्वरसमो वत्स भृङ्गी नाम गणो भव ।
एवं लब्धवरो दैत्यः कोटिसूर्यसमप्रभः ॥ ४३ ॥

१ (घ. ङ. छ. ज.) °वा यजताङ्घ्रिपद्मं वि°। २ (क. ख. ग.) °रूपः । त्व°। ३ (क. ख. ग.) वियुज्य°। ४ (घ. ङ.) °रणामि° । ५ (क. ख. ग.) °ग्रीवः स्तु°। ६ (घ. ङ. छ. ज.) °हस्त्वम् । वे°। ७ (घ. ङ. छ. ज.) °रस्मात्त°। ८ (घ.) भवान्तकाय ॥ ३८ ॥

नीलकण्ठस्त्रिनेत्रश्च वृषकेतुर्जटाधरः ।
तं दृष्ट्वा देवताः सर्वा हर्षनिर्भरमानसाः ॥ ४४ ॥
तुष्टुवुर्गणराजं तं भैरवस्य समीपगम् ।
अथ शंभोः समीपस्थां देवीं विश्वेश्वरीं शिवाम् ॥ ४५ ॥
संस्तूय सर्वभावेन शरणागतवत्सलाम् ।
पुत्रत्वे जगृहे दैत्यं प्रीतेन मनसा शिवा ॥ ४६ ॥
ततोऽनुज्ञां महेशस्य लब्ध्वाऽसौ कालभैरवः ।
मातृभिः सह विश्वात्मा पाताले स्वपुरं ययौ ४७ ॥
*विष्णोर्भगवती मूर्तिर्यत्राऽऽस्ते तामसी परा ।
अथ तां भैरवो दृष्ट्वा मुदा तां परिषस्वजे ॥ ४८ ॥
एकैव मूर्तिरभवत्तयोर्भैरवशार्ङ्गिणोः ।
कालाग्निभैरवो योऽसौ स एव नृहरिः स्वयम् ॥ ४९ ॥
भगवान्नृहरिर्योऽसौ स एव किल भैरवः ।
नृहरेः पूजनान्नूनं प्रीतो भवति भैरवः ॥ ५० ॥
पूजनाद्भैरवस्यैव नृहरिः पूजितो भवेत् ।
ये पश्यन्ति तयोर्भेदं मायया मोहिता जनाः ॥ ५१ ॥
निरये ते[1] विपच्यन्ते यावदाभूतसंप्लवम् ॥ ५२ ॥
तस्मात्पूज्या सदा मूर्ती रुद्रनारायणात्मिका ।
प्रीता भूत्वा भगवती भवत्यज्ञानहारिणी ॥ ५३ ॥
एवं संक्षेपतः प्रोक्तो मयाऽन्धकवधो द्विजाः ।
प्रादुर्भावो भैरवस्य तस्य चैव पराक्रमः ॥ ५४ ॥
इमं यः पठतेऽध्यायं महादेवस्य संनिधौ ।
सर्वपापविनिर्मुक्तः शिवस्यानुचरो भवेत् ॥ ५५ ॥ १२८३ ॥

इति श्रीब्रह्मपुराणोपपुराणे श्रीसौरे सूतशौनकसंवादे हिरण्याक्षवधादिकथनं नामोनत्रिंशोऽध्यायः ॥ २९ ॥

**सूत उवाच**—हिरण्यकशिपोः पुत्रः प्रह्लादो दैत्यसत्तमः ।
अन्धके निहते दैत्ये तत्र राज्ये स्थितः स्वयम् ॥ १ ॥
कृत्वा[2] स सुचिरं कालं राज्यं परमधार्मिकः ।
राज्ये विरक्तो मतिमान्[3]क्षमादिगुणसंयुतः ॥ २ ॥

* घङ्छसंज्ञितपुस्तकेष्वयं श्लोको न विद्यते ।

१ (घ. ङ. छ.) तेऽपि प०। २ (घ. ङ. छ.) ०त्वा तु सु०। ३ (घ. ङ. छ.) ०मान्नमाविगुणयोगतः ॥ २ ॥ (ज.) ०मान्समाधिगणसंयुतः ॥ २ ॥

राज्ये मतिमतां श्रेष्ठो ह्यभिषिच्य विरोचनम् ।
तपोवनं गतः सोऽथ वासुदेवपरायणः ॥ ३ ॥
विरोचनश्च निहतो देवदेवेन चक्रिणा ।
बलिस्तस्याभवत्पुत्रो दैत्यो धर्मपरायणः ॥ ४ ॥
बद्ध्वा नीतः स पातालं देवदेवेन चक्रिणा ।
बाणासुरस्तस्य सुतो भक्तो विश्वेश्वरे शिवे ॥ ५ ॥
दत्तं भगवता तस्मै गाणपत्यमनुत्तमम् ।
तारश्च शम्बरश्चैव कपिलः शंकरस्तथा ॥ ६ ॥
स्वर्भानुर्वृषपर्वा च बाणस्यैते सुता द्विजाः ।
कश्यपात्सुरसा जज्ञे खेचरान्मुनिपुङ्गवाः ॥ ७ ॥
अनन्ताद्याः काद्रवेया बलिनो बलवत्तराः ।
गन्धर्वाञ्जनयामास तथाऽरिष्टा तु कश्यपात् ॥ ८ ॥
विनता जनयामास विख्यातौ गरुडारुणौ ।
पश्वादीन्स्थावरान्तांश्च तथोऽन्यान्सुषुवुर्द्विजाः ॥ ९ ॥
स्थावराञ्जङ्गमांश्चैव समुत्पाद्याथ कश्यपः ।
पुनः संतानवृद्ध्यर्थं तताप परमं तपः ॥ १० ॥
तपःप्रभावात्संभूतौ वत्सरश्चासितः सुतौ ।
नैध्रुवो वत्सराज्जातो रैभ्यश्चैव महामतिः ॥ ११ ॥
सुमेधा सुषुवे पुत्रान्नैध्रुवान्कुण्डपायिनः ।
असितादेकपर्णायां समभूद्देवलो मुनिः ॥ १२ ॥
आराध्य देवलः शंभुं परां सिद्धिमवाप्तवान् ।
शाण्डिल्यो देवलाज्जात एतेऽपत्यास्तु काश्यपाः ॥ १३ ॥
तृणबिन्दुस्तु राजर्षिः कन्यामिलविलाभिधाम् ।
पुलस्त्याय ददौ तस्यां विश्रवाः समजायत ॥ १४ ॥
पुष्पोत्कटा तथा वाका कैकसी देववर्णिनी ।
चतस्रः पत्नयस्तस्य पौलस्त्यस्य महात्मनः ॥ १५ ॥
कुबेरो देववर्णिन्यां कैकस्यां रावणस्तथा ।
कुम्भकर्णः शूर्पणखा तथैव च विभीषणः ॥ १६ ॥
पुष्पोत्कटायामभवंस्त्रयः पुत्राश्च कन्यकाः ।
महोदरः प्रहस्तश्च महापार्श्वस्तथाऽपरः ॥ १७ ॥

---

१ (ग.) ०वेया० कणिनो ब० । २ (घ.) ०थाऽन्याः सं० । ३ (क. ख. ग.) ०शामुने ॥ [illegible]

तथा कुम्भनखी कन्या तस्य विश्रवसो द्विजाः ।
त्रिशिरा दूषणश्चैव विद्युज्जिह्वो महाबलः ॥ १८ ॥
वाकायामभवन्पुत्रा राक्षसाः क्रूरकर्मिणः ।
भूता मृगाः पिशाचाश्च सर्वे वै दंष्ट्रिणस्तथा ॥ १९ ॥
पौलस्त्या इति ते सर्वे मरीचेः कश्यपः सुतः ।
भृगोः सकाशादभवच्छुक्रो दैत्यगुरुर्महान् ॥ २० ॥
प्राप्ता संजीविनी विद्या येन शुक्रेण धीमता ।
महादेवं समाराध्य पुरा बदरिकाश्रमे ॥ २१ ॥
जरामरणनिर्मुक्तो वज्रकायो महामुनिः ।
योगाचार्य इति ख्यातः प्रसादाद्गिरिजापतेः ॥ २२ ॥
अनसूया तु सुषुवे क्रमात्पुत्रत्रयं द्विजाः ।
दत्तात्रेयं चन्द्रमसं तथा दुर्वाससं मुनिम् ॥ २३ ॥
आत्रेया इति ते ख्याता निरपत्यस्तथा क्रतुः ।
वसिष्ठाय ददौ कन्यां नारदो मुनिपुङ्गवाः ॥ २४ ॥
अरुन्धतीमरुन्धत्यां शक्तिर्नाम बभूव ह ।
शक्तेः पराशरस्तस्मात्कृष्णद्वैपायनो मुनिः ॥ २५ ॥
द्वैपायनाच्छुको जज्ञे पञ्च पुत्राः शुकस्य ते ।
भूरिश्रवाः प्रभुः शंभुः कृष्णो गौरश्च पञ्चमः ॥ २६ ॥
कन्या कीर्तिमती नाम वंशा एते प्रकीर्तिताः ।
कश्यपाददितिर्लेभे भास्करं तेजसाऽधिकम् ॥ २७ ॥
संज्ञा राज्ञी प्रभा छाया भानोर्भार्याः स्मृतास्त्विमाः ।
सूते सूर्यान्मनुं संज्ञा यस्य वंशेऽभवन्नृपाः ॥ २८ ॥
यमं च यमुनां चैव राज्ञीरेवंतमेव च ।
प्रभा प्रभातमादित्याच्छाया सावर्णिमेव च ॥ २९ ॥
शनिं च तपतीं चैव विष्टिं चैव यथाक्रमम् ।
इक्ष्वाकुर्नभगश्चैव धृष्टः शर्यातिरेव च ॥ ३० ॥
नरिष्यन्तश्च नाभागो ह्यरिष्टः करुषस्तथा ।
वृषध्वजो महातेजा नव वैवस्वताः समाः ॥ ३१ ॥
इला ज्येष्ठा वरिष्ठा च कन्या एतास्त्रयः(?) स्मृताः ।
इक्ष्वाकोश्चाभवत्पुत्रो विकुक्षिरिति विश्रुतः ॥ ३२ ॥

---

१ (क.) रेवत०। २ (ख. ग.) ०पतीं चै०। ३ (क. ख. ग.) ०ताः स्मृताः।

तस्य पुत्रशतं त्वासीत्ककुत्स्थो ज्येष्ठ ईरितः ।
तस्मात्सुयोधनो जज्ञे पृथुस्तस्य सुतोऽभवत् ॥ ३३ ॥
विश्वकस्तस्य पुत्रोऽभूद्दमकस्तस्य वै सुतः ।
तस्माच्छर्यातिरभवद्युवनाश्वश्च तत्सुतः ॥ ३४ ॥
श्रावस्तिस्तस्य पुत्रोऽभूच्छ्रावस्ती येन निर्मिता ।
तस्मात्कुवलयः ख्यातो धुन्धुमारिस्ततोऽभवत् ॥ ३५ ॥
धुन्धुमारेस्त्रयः पुत्रा दृढाश्वाद्या महौजसः ।
दृढाश्वस्य च दायादो हरिश्चन्द्रस्ततोऽभवत् ॥ ३६ ॥
रोहितस्तस्य पुत्रोऽभूद्रोहितस्यापि तत्सुतः ।
धुन्धुस्तस्मादभूत्पुत्रो धुन्धोः पुत्रौ बभूवतुः ॥ ३७ ॥
सुदेवो विजयश्चैव कुरुको विजयात्स्मृतः ।
वृकोऽथ कुरुकाज्जज्ञे तस्माद्बाहुरभूत्सुतः ॥ ३८ ॥
सगरस्तस्य पुत्रोऽभूत्पौत्रस्तस्यांशुमान्स्मृतः ।
तस्य पुत्रो दिलीपस्तु तस्माज्जज्ञे भगीरथः ॥ ३९ ॥
प्रीतोऽभूत्तपसा शंभुर्ददौ वरमनुत्तमम् ।
गङ्गां बभार शिरसा रक्षार्थं जगतां हरः ॥ ४० ॥
दशायुतानां वर्षाणि द्विसहस्रं शतद्वयम् ।
महादेवाद्वरं लब्ध्वा राज्यं कृत्वा भगीरथः ॥ ४१ ॥
विरक्तो राज्यभोगेभ्यो विश्वं मत्वेन्द्रजालवत् ।
जाबालं समनुप्राप्य यत्तज्ज्ञानं शिवात्मकम् ॥ ४२ ॥
मुनेरनुग्रहाल्लब्ध्वा परां सिद्धिं गतो नृपः ।
श्रुतस्तस्याभवत्पुत्रो नाभागस्तत्सुतोऽभवत् ॥ ४३ ॥
सिन्धुद्वीपस्ततो जज्ञे अयुतायुस्ततोऽभवत् ।
ऋतुपर्णस्तु तत्पुत्रः सुधामा तत्सुतोऽभवत् ॥ ४४ ॥
यस्मै दत्तं भगवता गाणपत्यमनुत्तमम् ।
कल्माषपादस्तत्पुत्रः क्षेत्रजस्तत्सुतोऽश्मकः ॥ ४५ ॥
ऋषेर्वसिष्ठाद्धिमेन्द्राभकुलस्तत्सुतोऽभवत् ।
नकुलस्याभवत्पुत्रो नाम्ना शतरथो नृपः ॥ ४६ ॥

---

१ (क. ख. ग.) °स्मात्स्वर्या° । २ (क. ख. घ. ङ. ज.) °भूत्पुत्र° । ३ (क. ख. ग. छ.) °तत्रय° । ४ (क. ख. ग.) सिंहद्वी° । ५ (छ.) °तोऽभवत् ।

अभूद्दिलविलस्तस्माद्वृद्धशर्मा ततोऽभवत् ।
तस्माद्विश्वसहो नाम खट्वाङ्गस्तत्सुतोऽभवत् ॥ ४७ ॥
दीर्घबाहुस्ततो जज्ञे रघुस्तस्याभवत्सुतः ।
रघोरजस्तु विख्यातो राजा दशरथस्ततः ॥ ४८ ॥
तस्य पुत्राश्च चत्वारो धर्मज्ञा लोकविश्रुताः ।
रामोऽथ भरतश्चैव तृतीयो लक्ष्मणः स्मृतः ॥ ४९ ॥
चतुर्थश्चैव शत्रुघ्नो रामो नारायणः स्वयम् ।
धर्मज्ञः सत्यसंकल्पो महादेवपरायणः ॥ ५० ॥
सीता तस्याभवद्भार्या पार्वत्यंशसमुद्भवा ।
जनकेन पुरा गौरी तपसा तोषिता यतः ॥ ५१ ॥
जनकाय ददौ शंभुः प्रीतो धनुरनुत्तमम् ।
तद्धनुर्भञ्जयामास जनकस्य गृहे स्थितम् ॥ ५२ ॥
दृष्ट्वा पराक्रमं तस्य रामस्य गुणशालिनः ।
जनकः प्रददौ तस्मै सीतां ब्रह्मविदां वरः ॥ ५३ ॥
पित्रा कृतोऽभिषेकार्थं रामो राज्यस्य वै यदा ।
वारयामास कैकेयी तदा राज्ञः प्रिया वधूः ॥ ५४ ॥
राजंस्त्वया वरो दत्तः पूर्वमेव यतः प्रभो ।
राजानं मत्सुतं तस्माद्भरतं कर्तुमर्हसि ॥ ५५ ॥
इति तस्या वचः श्रुत्वा राज्ये तमभिषिच्य सः ।
प्रेषयामास तं रामं वनं प्रति सलक्ष्मणम् ॥ ५६ ॥
वनं गत्वा निवसतो भार्यां दृष्ट्वाऽथ राक्षसः ।
रावणो नाम पौलस्त्यो नीत्वा लङ्कां पुनर्ययौ ॥ ५७ ॥
अदृष्ट्वा तां ततः सीतां दुःखितौ रामलक्ष्मणौ ।
सख्यं वानरराजेन गत्वा दाशरथी द्विजाः ॥ ५८ ॥
सुग्रीवस्य सखा वीरो हनुमान्नाम वानरः ।
गत्वाऽथ रावणपुरीमपश्यज्जनकात्मजाम् ॥ ५९ ॥
अश्रुपूर्णेक्षणां सीतामिन्दीवरनिभाननाम् ।
विश्वासार्थं ददौ तस्यै रामस्यैवाङ्गुलीयकम् ॥ ६० ॥
दृष्ट्वाऽङ्गुलीयकं सीता प्रहृष्टा च तदाऽभवत् ।
समाश्वास्य ततः सीतां प्रययौ राघवान्तिकम् ॥ ६१ ॥

१ ( घ. क. छ. ञ. ) °न परा । २ ( घ. ) °र्धयद्वि°।

रामस्तमागतं दृष्ट्वा प्रहर्षोत्फुल्ललोचनः ।
श्रुत्वा तद्वचनाद्वृत्तं युद्धाय कृतनिश्चयः ॥ ६२ ॥
सेतुं कृत्वाऽथ रक्षोभिर्युद्धं कृत्वा महात्मना ।
निहत्य रावणं रामो भ्रातृभिः सह सुव्रतः ॥ ६३ ॥
आनयामास तां सीतामशोकवनमध्यगाम् ।
प्रतिष्ठाप्य महादेवं सेतुमध्येऽथ राघवः ॥ ६४ ॥
लब्धवान्परमां भक्तिं शिवे शिवपराक्रमः ।
रामेश्वर इति ख्यातो महादेवः पिनाकधृक् ॥ ६५ ॥
तस्य दर्शनमात्रेण ब्रह्महत्यां व्यपोहति ।
अभिषिक्तस्ततो राज्ये रामो राजीवलोचनः ॥ ६६ ॥
पालयन्पृथिवीं सर्वां धर्मेण मुनिपुङ्गवाः ।
अयजद्देवदेवेशमश्वमेधेन शंकरम् ॥ ६७ ॥
तस्य प्रसादात्स्वपदं प्राप्तवानथ राघवः ।
एवं संक्षेपतः प्रोक्तं रामस्य चरितं मया ॥ ६८ ॥
इदं विस्तरतो विप्राः प्रोक्तं वाल्मीकिना पुनः ।
कुशश्चैको लवश्चान्यः पुत्रौ रामस्य सुव्रतौ ॥ ६९ ॥
सत्यसन्धौ महावीर्यौ महादेवपरायणौ ।
अतिथिश्च कुशाज्जज्ञे निषधस्तत्सुतोऽभवत् ॥
नलस्तस्याभवत्पुत्रो नभस्तस्याभवत्सुतः ॥ ७० ॥
ततश्चन्द्रावलोकश्च तारापीडस्ततोऽभवत् ।
ततश्चन्द्रगिरिर्नाम भानुजित्तत्सुतोऽभवत् ॥ ७१ ॥
एते सर्वे नृपाः प्रोक्ता इक्ष्वाकुकुलसंभवाः ।
धर्मात्मानो महासत्त्वाः कीर्तिमन्तो दृढव्रताः ॥ ७२ ॥
इमं यः पठते नित्यमिक्ष्वाकोर्वंशमुत्तमम् ।
सर्वपापविनिर्मुक्तः सूर्यलोके महीयते ॥ ७३ ॥ १२५६ ॥

इति श्रीब्रह्मपुराणोपपुराणे श्रीसौरे सूतशौनकसंवादे प्रद्युम्नराज्यारोहणादीक्ष्वाकुकुलसंभवनृपमालिकान्तकथनं नाम त्रिंशोऽध्यायः ॥३०॥

सूत उवाच—ऐलः पुरूरवाश्चासीद्राजा परमधार्मिकः ।
उर्वश्यां जनयामास षट् पुत्रान्प्रथितौजसः ॥ १ ॥

---

१ (क.) ०व्रताः ॥६३॥ २ (ख.) ०रायणः । रा०। ३ (घ.) ०माहात्म्यं ब्र०। ४ (क.ख.ग.) ०स्य विश्रुतौ । ५ (ङ.घ.छ.) ०कस्तु ता०। ६ (क.ख.ग.ज.) ०च । इलात्पुरूरवाश्चाभूद्रा०।

आयुर्मायुरमायुश्च विश्वायुश्च ततः परः ।
शतायुश्च श्रुतायुश्च षडेते देवयोनयः ॥ २ ॥
आयोः पञ्च सुताः ख्याताः स्वर्भानुतनयात्मजाः ।
ज्येष्ठस्तेषामभूत्पुत्रो नहुषो लोकविश्रुतः ॥ ३ ॥
उत्पन्नाः पितृकन्यायां नहुषात्पञ्च सूनवः ।
विरजायां मुनिश्रेष्ठा ययातिरिति विश्रुतः ॥ ४ ॥
द्वे च भार्ये ययातेस्तु प्रथमा शुक्रकन्यका ।
देवयानीति विख्याता द्वितीया वृषपर्वणः ॥ ५ ॥
सुताऽसुरस्य शर्मिष्ठा तयोर्वक्ष्यामि संततिम् ।
देवयानी तु सुषुवे यदुं तुर्वसुमेव च ॥ ६ ॥
द्रुह्युं चानुं च पुरुं च शर्मिष्ठा सुषुवे सुतान् ।
अभिषिच्य पुरुं राजा यवीयांसमनिन्दितम् ॥ ७ ॥
वैराग्ययुक्तो मतिमान्ययातिः प्रययौ वनम् ।
योऽयं प्रसिद्धः शतजिद्यदोः समभवत्सुतः ॥ ८ ॥
हैहयः शतजित्पुत्रो धर्मस्तस्य सुतः स्मृतः ।
धर्मनेत्रः सुतस्तस्य धनकस्तत्सुतोऽभवत् ॥ ९ ॥
धनकस्य तु दायादः कृतवीर्यो महायशाः ।
कार्तवीर्यः कृताग्निश्च कृतवर्मा तथा परः ॥ १० ॥
कार्तवीर्यस्य नृपतेः पुत्राणां च शतं त्वभूत् ।
तत्र पञ्च महात्मानः शूरसेनादयो नृपाः ॥ ११ ॥
महादेवाल्लब्धवरा महादेवपरायणाः ।
जयध्वजस्तु मतिमान्नारायणपरायणः ॥ १२ ॥
जयध्वजस्य दायादास्तालजङ्घा इति स्मृताः ।
तेषां ज्येष्ठो वीतिहोत्रः सर्वे ते यादवाः स्मृताः ॥ १३ ॥
विश्रुतस्तस्य दायादस्तस्य पत्नी पतिव्रता ।
रममाणस्तया स राजा कदाचिद्यमुनातटे ॥ १४ ॥
अपश्यदुर्वशीं तत्र वीणावादनलालसाम् ।
उर्वशीमब्रवीद्राजा स्मरबाणेन पीडितः ॥ १५ ॥

---

१ ( घ. ) परम् । श० । २ ( घ. ङ. छ ) ०श्रेष्ठो श० । ३ ( क. ख.ग. ज. ) ०श्च कनीयां० ।
४ ( क. ख. ग. ज. ) ०नेत्रस्ततथाभूतन० । ५ ( क. ख. ग ) ०स्य च दा० ।

त्वयाऽहं रन्तुमिच्छामि त्वं मां रन्तुमिहार्हसि ।
सा नृपस्य वचः श्रुत्वा दृष्ट्वा तं मदनोपमम् ॥ १६ ॥
क्रीडमाना तदा तेन चिरकालं सहोर्वशी ।
गते वर्षसहस्रे तु विरक्तः कामभोगतः ॥ १७ ॥
आहोर्वशीं गमिष्यामि स्वपुरीमिति विश्रुतः ।
भोगेनैतावता नालमवोचदिति सा पुनः ॥ १८ ॥
न गन्तव्यं त्वया राजन्स्थातव्यं प्रीतये मम ।
अब्रवीत्तां ततो राजा पुरीं गत्वा यशस्विनीम् ॥ १९ ॥
आगमिष्याम्यहं क्षिप्रमहं परिसरं तव ।
प्राप्तानुज्ञस्ततो राजा जगाम स्वपुरीं प्रति ॥ २० ॥
दृष्ट्वा पतिव्रतां भार्यामभवद्भयविह्वलः ।
चेष्टितं तस्य सा ज्ञात्वा महिम्ना स्वेन भामिनी ॥ २१ ॥
मा भैषीरिति तं प्राह भर्तारं सा पतिव्रता ।
न दोषस्तव राजेन्द्र सर्वं कामस्य चेष्टितम् ॥ २२ ॥
कामेन स्वर्गमाप्नोति कामेन नरकं ततः ।
विधिना सेवितः कामः स्वर्गदः श्वभ्रमन्यथा ॥ २३ ॥
तस्मात्त्वया नरपते विधिं हित्वा स सेवितः ।
तस्मात्पापं महज्जातं कुरु पापविशोधनम् ॥ २४ ॥
भार्यानिगदितं श्रुत्वा ययौ कण्वाश्रमं प्रति ।
ज्ञात्वा तद्वचनाच्छुद्धिं जगाम हिमवद्गिरिम् ॥ २५ ॥
मार्गेऽपश्यत्स गन्धर्वं विश्वावसुमरिंदमम् ।
सकान्तं क्रीडमानं तं शोभितं दिव्यमालया ॥ २६ ॥
दृष्ट्वा मालां स राजेन्द्रः सस्माराप्सरसं तदा ।
उर्वश्या एव योग्यैषा माला नान्यस्य कस्यचित् ॥ २७ ॥
एवं संचिन्त्य मनसा मालामाहर्तुमुद्यतः ।
तेन सार्धं महद्युद्धं गन्धर्वेण नृपोत्तमः ॥ २८ ॥
कृत्वा गृहीत्वा तां मालां जगामाप्सरसं प्रति ।
अन्विष्यमाणः सकलां बभ्राम स वसुंधराम् ॥ २९ ॥

---

१ (घ. ङ. छ. झ.) ॰माने त॰ २ (क. ख. ग.) ॰द्भयः । स॰ ३ (घ. झ.) ॰कलं व॰ ।

वनानि पर्वतान्द्वीपाँल्लोकान्सर्वानशेषतः।
अटित्वाऽपि च नापश्यदुर्वशीं राजपुङ्गवः ॥ ३० ॥
अनुग्रहान्महेशस्य या तिरोऽप्यस्ति खेचरी।
भ्रममाणो महर्लोके सोऽपश्यन्नारदं मुनिम् ॥ ३१ ॥
यथावदभिवाद्याथ लज्जितः पार्श्वगोऽभवत्।
पृष्ट्वा तु कुशलं राज्ञे नारदो मुनिपुङ्गवः ॥ ३२ ॥
अब्रवीन्नारदं राजा चोर्वशीदर्शनोत्सुकः।
भगवन्नागतः कस्माद्दृष्टा वाऽस्ति हि तत्र तु ॥ ३३
अस्ति चेच्छ्रोतुमिच्छामि ब्रवीतु ब्रह्मणः सुतः।
राज्ञो मनोगतं सर्वं विज्ञाय भगवान्मुनिः ॥ ३४ ॥
यथावत्कुशलं तस्य नारदस्तं तथाऽब्रवीत्।
यत्राऽऽसीदुर्वशी देवी मेरोर्दक्षिणदेशतः ॥ ३५ ॥
सरश्च मानसं नाम तत्राहं मेदिनीपते।
विरञ्चेः कार्यमुद्दिश्य गत्वा पुनरिहागतः ॥ ३६ ॥
गमिष्यामि पुनस्तत्र यत्राऽऽस्ते सत्यलोकपः।
इति श्रुत्वा मुनेर्वाक्यं राजाऽनुज्ञाप्य नारदम् ॥ ३७ ॥
तं प्रदेशं गतस्तूर्णं तत्रापश्यत्स चोर्वशीम्।
मालां निवेदयामास सा तयाऽलंकृताऽभवत् ॥ ३८ ॥
रममाणस्तया सार्धं गतं वर्षशतं पुनः।
कदाचित्तमपृच्छत्सा राजानं मुनिपुङ्गवाः ॥ ३९ ॥
स्वकीयं नगरं गत्वा भवता तत्र किं कृतम्।
ब्रूहि राजन्महाबाहो यद्यस्मि तव वल्लभा ॥ ४० ॥
इति पृष्टस्तया राजा प्रोवाच तदशेषतः।
तस्येरितमथाऽऽकर्ण्य राजानं प्रत्यभाषत ॥ ४१ ॥
इत ऊर्ध्वं मया सार्धं स्थातव्यं नैव सुव्रत।
शापं दास्यति ते कण्वो भार्या तव ममानघ ॥ ४२ ॥
तया चोक्तोऽपि तन्वङ्ग्या न तत्याज ह उर्वशीम्।
ज्ञात्वाऽथ तस्य निर्बन्धमकरोदात्मनस्तनुम् ॥ ४३ ॥

१ (क. ख. ग.) ०तान्सर्वाँल्लो०। २ (क. ख. ग. ज.) ०दो द्विजपुङ्गवाः ॥ ३२ ॥ ३ (घ. ङ. छ.) ०रमुनिं यथावदभिवाद्य च। भ०। ४ (घ. ङ. छ. ज.) तत्त्वतः ॥ ३३ ॥ ५ (छ.) ०रतमथा०। ६ (क. ख. ग. ज.) ०स्ते पद्मभूः स्वयम्। इ०। ७ (क. ख. ग.) ०र्श चोर्वशीं तूर्णं।

वलिभिः पलिताकीर्णां तां दृष्ट्वा राजसत्तमः ।
तत्क्षणादुर्वशीं त्यक्त्वा तपसे कृतनिश्चयः ॥ ४४ ॥
द्वादशाहान्यभूद्राजा कन्दमूलफलाशनः ।
तावत्कालं च वाय्वाशी ततः कण्वाश्रमं ययौ ॥ ४५ ॥
दृष्ट्वा मुनिवरं शान्तं शिवध्यानैकतत्परम् ।
प्रणम्य दण्डवद्भक्त्या प्राञ्जलिः पार्श्वसंस्थितः ॥ ४६ ॥
यद्वृत्तमात्मनः सर्वं मुनेः सर्वं न्यवेदयत् ।
मुनिर्विदित्वा तत्पापमब्रवीत्पापशोधनम् ॥ ४७ ॥
मुनिना प्रेषितो राजा गत्वा वाराणसीं पुरीम् ।
स्नात्वा संतर्प्य जाह्नव्यां दृष्ट्वा विश्वेश्वरं शिवम् ॥ ४८ ॥
मुक्तोऽसावेनसो राजा जगाम स्वपुरीं तदा ।
वसूनि ब्राह्मणेभ्यश्च दत्वा राज्यमपालयत् ॥ ४९ ॥
उर्वश्यां विश्रुताज्जाताः सप्त पुत्रा महौजसः ।
क्रोष्टोर्यदुसुतस्याऽऽसन्वंश्याः सत्कीर्तिशालिनः ॥ ५० ॥
शृणुध्वं तान्मुनिश्रेष्ठा मुख्यानेव न चापरान् ।
क्रोष्टोर्वंशे क्रथः ख्यातो विदर्भः कोशलस्तथा ॥ ५१ ॥
सात्त्वतश्च ततः ख्यातो महाभोजस्ततः परः ।
भोजश्च सत्यवाक्चैव सत्यकः सात्यकिस्ततः ॥ ५२ ॥
क्रथकश्च सुषेणश्च सुभोजो नरवाहनः ।
आहूको देवकश्चैवं श्रीदेवो देवसुव्रतः ॥ ५३ ॥
उग्रसेनश्च कंसश्च वसुदेवो महायशाः ।
उग्रसेनस्य कन्यायां देवक्यां वसुदेवतः ॥ ५४ ॥
भृगोः शापवशाद्विष्णुः संभूतस्त्रिदशेश्वरः ।
रोहिणी नाम या पत्नी वसुदेवस्य शोभना ॥ ५५ ॥
तस्यां संकर्षणो जातो योऽनन्तः शेषसंज्ञितः ।
षोडश स्त्रीसहस्राणि पत्नयो माधवस्य याः ॥ ५६ ॥
तासु जाता ह्यसंख्याताः प्रद्युम्नप्रमुखाः सुताः ।
कृष्णोऽपि देवकीसूनुः परमात्मा सनातनः ॥ ५७ ॥
कृतकृत्योऽपि योगात्मा मायावी विश्वभुक्स्वयम् ।
तथाऽपि पूजयत्येव भगवन्तमुमापतिम् ॥ ५८ ॥

लिङ्गे सर्वात्मकं मत्वा महादेवं पिनाकिनम्।
वरांश्च विविधाँल्लब्ध्वा तस्माद्देवान्महेश्वरात् ॥ ५९ ॥
अजेयस्त्रिषु लोकेषु देवदेवो जनार्दनः।
न कृष्णादधिकस्तस्मादस्ति माहेश्वराग्रणीः ॥ ६० ॥
तस्मात्तत्पूजनाच्छंभुर्भवत्येव सुपूजितः।
हरेरवज्ञाकरणाद्भवेदीशः पराङ्मुखः ॥ ६१ ॥
तस्मात्पूज्यः सदा शार्ङ्गी महादेवपरायणैः।
तद्भक्तैश्च विशेषेण प्रीतये गिरिजापतेः ॥ ६२ ॥
एष वः कथितो वंशो यदोः संक्षेपतो द्विजाः।
सर्वपापक्षयकरः पठतां शृण्वतां भवेत् ॥ ६३ ॥ १४१९ ॥

इति श्रीब्रह्मपुराणोपपुराणे श्रीसौरे सूतशौनकसंवादे पुरुयदुवंशकथनं नामैकत्रिंशोऽध्यायः ॥ ३१ ॥

मन्वन्तराणि वक्ष्यामि शृणुध्वं मुनिपुङ्गवाः।
मनवः षडतीतास्ते सप्तमो वर्तते किल ॥ १ ॥
तेषां स्वायंभुवस्त्वाद्यस्ततः स्वारोचिषः स्मृतः।
उत्तमस्तामसश्चैव रैवतश्चाक्षुषस्तथा ॥ २ ॥
स्वायंभुवं तु कल्पादावन्तरं कथितं मया।
स्वारोचिषेऽन्तरे देवास्तुषिता नाम ते स्मृताः ॥ ३ ॥
विपश्चिन्नाम देवेन्द्र ऋषीन्वक्ष्यामि सांप्रतम्।
ऊर्जस्तम्भस्तथा प्राणो दान्तोऽथ ऋषभस्तथा ॥ ४ ॥
तिमिरः शार्वरीवांश्च सप्तैत ऋषयः स्मृताः।
*उत्तरे त्वन्तरे देवाः सुधामानो द्विजोत्तमाः ॥ ५ ॥
प्रतर्दनाः शिवाः सत्यास्ततश्च वशवर्तिनः।
एतेषां च गणाः प्रोक्ता भवद्वादशभिर्गणैः ॥ ६ ॥
सुदान्तिर्नाम देवेन्द्रो महाबलपराक्रमः।
रजो गोत्रोऽर्ध्वबाहुश्च सवनश्चानघस्तथा ॥ ७ ॥
सुतपाः शुक्रनामाऽथ सप्तैत ऋषयः स्मृताः।
सत्यांश्च सुधियश्चैव तामसस्यान्तरे सुराः ॥
ज्योतिर्धर्मः पृथुः कल्पश्चैत्राग्निः सवनस्तथा ॥ ८ ॥

* उत्तरे त्वन्तरे इत्यादि सवनश्चानघस्तथेत्यन्तं सार्धश्लोकद्वयं घङछञसंज्ञितपुस्तकेषु नास्ति।

१ (क. ख. ग.) सखाः सूतस्य व०। २ (घ. ङ. छ.) पृथः क०।

पीवरश्च समाख्याताः सप्तैत ऋषयो मताः[1] ।
स्याच्छिबिर्नाम देवेन्द्रः सिद्धचारणसेवितः ॥ ९ ॥
देवराज्यं परित्यज्य परं वैराग्यमाश्रितः ।
ज्ञात्वैवाशाश्वतं सर्वं बृहस्पतिमथाब्रवीत् ॥ १० ॥
भगवन्किं करोमीदं राज्यं तुच्छैसुखं यतः[2] ।
कैवल्यं लभते केन तन्मे ब्रूहि गुरो स्फुटम् ॥ ११ ॥

**बृहस्पतिरुवाच**—अस्त्यनन्तगुणावासः परानन्दैकविग्रहः ।
ध्यातः कैवल्यदः पुंसां महादेवो न चापरः ॥ १२ ॥
मोहपाशनिबद्धानां महामोहात्मतां हरेत् ।
स्मरणान्मोचकस्तेषामुमापतिरिति श्रुतिः ॥ १३ ॥
यद्ब्रह्म परमं ज्योतिः प्रतिष्ठाक्षरमव्ययम् ।
सर्वानुग्राहिणं शंभुं तमाशु शरणं व्रज ॥ १४ ॥
स ज्योतिषां परं ज्योतिरानन्दं तमसः परम् ।
न यस्मादधिकं किंचित्तत्त्वं विद्धि शांकरम् ॥ १५ ॥
तं जानीहि परं ब्रह्म विश्वात्मानं महेश्वरम् ।
तदात्मकतया सर्वं जानीह्यसुरसूदन ॥ १६ ॥
आत्मानं ये हि मन्यन्ते विभिन्नं त्रिपुरद्विषः ।
ते पश्यन्त्येव तं देवं नाऽऽवर्तन्ते पुनः पुनः ॥ १७ ॥
सर्वस्मादधिकः शंभुः परमात्मा महेश्वरः ।
इति[3] ये निश्चितधियः कृतार्थास्ते[4] सुराधिप ॥ १८ ॥
दर्शनं तस्य काङ्क्षन्ते हरिब्रह्मादयः सुराः ।
योगिनो नियतात्मानस्तमीशं शरणं व्रज ॥ १९ ॥
महदादिविशेषान्तं जगद्यस्मिँल्लयं व्रजेत् ।
पुनरुत्पद्यते यस्मात्तं जानीहि पिनाकिनम् ॥ २० ॥
लीलाविलसितं यस्य विश्वमेतच्चराचरम् ।
तदभावाच्च विलयस्तं जानीहि[5] महेश्वरम् ॥ २१ ॥
यस्याऽऽज्ञया स्थितो ब्रह्मा जगज्जननकर्मणि ।
हरिश्च पालने रुद्रः संहारे च स शूलभृत्[6] ॥ २२ ॥

---

१ (घ.) ०षयः स्मृताः । स्या०। २ (घ. ङ. ज.) ०च्छतरं य०। ३ (घ. ङ. छ. ज.) ०ति ते नि०। ४ (क. ख. ग.) ०स्ते न संशयः ॥ १८ ॥ ५ (घ.) ०हि पिनाकिनम् ॥ २१ ॥ ६ (क. ख. ग.) ०लधृक् ॥ २२ ॥

यस्य प्रसादलेशेन मर्त्या मरणधर्मिणः ।
भवन्त्येव हि तेऽमर्त्या भजन्ते वृषभध्वजम्[1] ॥ २३ ॥
क्षणं मुहूर्तमथवा ध्यातः संपूजितः स्मृतः ।
प्रददात्याशु कैवल्यं यस्तं भज महेश्वरम् ॥ २४ ॥
तस्यैव मूर्तयस्तिस्रो ब्रह्मविष्णुहरा इति ।
सर्गरक्षागुणलयैस्तमीशं शरणं व्रज ॥ २५ ॥
यस्यान्तःस्थानि भूतानि येनेदं भ्राम्यते जगत् ।
ब्रह्मेति च जगुर्वेदास्तं रुद्रं शरणं व्रज ॥ २६ ॥
यज्ञैर्य इज्यते देवो मुक्तये वेदवादिभिः ।
कर्मणां फलदस्तेषां शरणं व्रज तं हरम् ॥ २७ ॥
ये विनिद्रा जितश्वासा ध्यायन्ति क्षीणकर्मिणः ।
तेषां प्रजायते यत्तत्त्वं विद्धि च शांकरम् ॥ २८ ॥
अज्ञानरज्ज्वा बद्धानां मनुष्यादिशरीरिणाम् ।
महादेवादृते[2] नान्यं शक्र पश्यामि मोचकम् ॥ २९ ॥
तस्मात्त्वं तपसा शक्र समाराधय शंकरम् ।
प्रसन्नो दास्यति पदं तव कैवल्यमुत्तमम् ॥ ३० ॥
एवं गुरोर्निगदितं श्रुत्वा सुरपतिस्तदा ।
समाराधयितुं देवं ययौ बदरिकाश्रमम् ॥ ३१ ॥
तत्र गत्वा जटी भूत्वा भस्मनिष्ठो जितेन्द्रियः ।
मन्दाकिनीजले स्नात्वा भस्म चैवाभिमन्त्र्य च ॥ ३२ ॥
अग्निरित्यादिमन्त्रैश्च समुद्धूल्य च विग्रहम् ।
पूजयामास देवेशं पुष्पैः पत्रैर्मनोहरैः[3] ॥ ३३ ॥
शैवीं विद्यां जपन्नास्ते शिवध्यानैकतत्परः ।
एवं गतानि वर्षाणि सहस्राणि चतुर्दश ॥ ३४ ॥
तपसा देवराजस्य प्रसन्नोऽभूत्ततः शिवः ।
प्राह त्रिपुरहा शक्रं वरं ब्रूहि शतक्रतो ॥ ३५ ॥
तपसाऽनेन तीव्रेण प्रसन्नोऽहं तवानघ[4] ।
*ईप्सितं ते प्रदास्यामि तव यद्यपि दुर्लभम् ॥ ३६ ॥
मयि प्रसन्ने तु हरे न किंचिदपि दुर्लभम् ॥ ३७ ॥

* घङसंज्ञितपुस्तकयोरीप्सितमित्यादि न किंचिदपिदुर्लभमित्यन्तं शब्दजातं नास्ति ।

१ (क. ख. ग. ज.) ०वकेतनम् ॥ २३ ॥ २ (क. ख. ग.) ०ते शक्र नान्यं प०। ३ (क. ख. ग.) ०र्नोरमैः ॥ ३३ ॥ ४ (ङ.) ०साऽनेन तीव्रेण प्र०।

एवं शंभोर्वचः श्रुत्वा स्तुत्वा तं विविधैः स्तवैः ।
कृताञ्जलिपुटो भूत्वा प्रणम्याऽऽह महेश्वरम् ॥ ३८ ॥

**इन्द्र उवाच**-भगवन्कृतकृत्योऽस्मि भवतो दर्शनाच्छिव ।
अलमन्यैर्वरैः शंभो भक्तिर्भवतु मे त्वयि ॥ ३९ ॥
तव भक्त्यमृतास्वादपरानन्दस्य देहिनः ।
भवेत्कष्टं कुतः शंभो पूर्णकामो यतो हि सः ॥ ४० ॥
तावदेवास्थिरं चेतः परिभ्रमति वस्तुषु ।
न यावत्त्वयि देवेश भक्तिर्भवति देहिनः ॥ ४१ ॥
तावदेव भवाम्भोधिर्दुस्तरो देहिनां हर ।
तव पादाम्बुजे भक्तिः परा यावन्न लभ्यते ॥ ४२ ॥
तावत्पतति संसारगर्ते जन्तुः पुनः पुनः ।
यावन्न तव कारुण्यलेशो भवति शंकर ॥ ४३ ॥
संसारविषवृक्षो यः सर्वतोऽतिभयंकरः ।
तव भक्तिकुठारेण च्छिद्यते नान्यथा शिव ॥ ४४ ॥
इति शक्रवचः श्रुत्वा कारुण्यादवलोक्य तम् ।
समुत्स्पृश्य तु पाणिभ्यां गाणपत्यं ददौ शिवः ॥ ४५ ॥
विरञ्चिप्रमुखा देवा जायन्ते कर्मगौरवात् ।
प्रलये च विनश्यन्ति भवन्ति च पुनः पुनः ॥ ४६ ॥
स्वर्गं गत्वा गताः श्वभ्रं तिर्यक्त्वं च मनुष्यताम् ।
पुनर्विरञ्च्यादिपदमेवं चक्रपरंपरा ॥ ४७ ॥
शंभोर्गणेश्वरा ये च नाऽऽवर्तन्ते भवे पुनः ।
भोगान्यथेप्सितान्भुक्त्वा शंभोः सायुज्यमाप्नुयात् ॥ ४८ ॥
स्वेच्छाविग्रहिणः सर्वे स्वेच्छाचारा गणेश्वराः ।
शिवेन सह ते भोगान्भुक्त्वा यान्ति शिवं पदम्[1] ॥ ४९ ॥
एवं दत्वा वरं शंभुर्गाणपत्यं सुदुर्लभम् ।
सुरराजाय शिवये तत्रैवान्तर्हितोऽभवत्[2] ॥ ५० ॥
गाणपत्यं वरं लब्ध्वा शिविर्भगवतो द्विजाः ।
आज्ञया तस्य देवस्य जगाम स्वपुरीं[3] ततः ॥ ५१ ॥
महादेवार्चनरतो महादेवकथारतः ।
स्थित्वा मन्वन्तरं तत्र चण्डो नाम गणोऽभवत् ॥ ५२ ॥

---

१ (घ. ङ.) ०ह मुनीश्व०। २ (क. ख. ग.) भव। ३ (क. ख. ग. ज.) ०रीं पुनः ॥ ५१ ॥

वृषध्वजस्त्रिनेत्रश्च जटाजूटेन्दुमण्डितः ।
शुद्धस्फटिकसंकाशश्चतुर्बाहुस्त्रिशूलभृत् ॥ ५३ ॥
अक्षमालाधरः खड्गी सर्वेषामभयप्रदः ।
द्वीपिचर्माम्बरधरः सर्वाभरणभूषितः ॥
रराज शांकरपदे नन्दीश्वर इवापरः ॥ ५४ ॥
एतद्वः कथितं सर्वं शिबेस्तु चरितं द्विजाः ।
सर्वपापक्षयकरं सर्वसिद्धिप्रदं नृणाम् ॥ ५५ ॥
श्रद्धया ये पठन्तीदं शिबेस्तु चरितं द्विजाः ।
प्राप्नुवन्त्यश्वमेधस्य फलमित्यब्रवीद्रविः ॥ ५६ ॥ १४७५ ॥

इति श्रीब्रह्मपुराणोपपुराणे श्रीसौरे सूतशौनकसंवादे शिबिनामधेय-
देवेन्द्रचरितकथनं नाम द्वात्रिंशोऽध्यायः ॥ ३२ ॥

सूत उवाच–विभुर्नामा भवेदिन्द्रो रैवतस्यान्तरे द्विजाः ।
वैकुण्ठाद्याः स्मृता देवा गणाश्चत्वार ईरिताः ॥ १ ॥
हिरण्यरोमा विश्वश्रीरूर्ध्वबाहुस्तथैव च ।
ऐन्द्रबाहुः सुबाहुश्च पर्जन्यश्च महामुनिः ॥ २ ॥
सप्तैत ऋषयः प्रोक्ताः प्रियव्रतकुलोद्भवाः ।
मनोजवः सुरेन्द्रोऽभूच्चाक्षुषेऽप्यन्तरे द्विजाः ॥ ३ ॥
आयोः प्रसूता भावाद्याः कथिता देवतागणाः ।
सुमेधा विरजाश्चैव हविष्मानुत्तमो बुधः ॥ ४ ॥
अत्रिनामा सहिष्णुश्च सप्तैत ऋषयः स्मृताः ।
पुत्रो विवस्वतो विप्रा मनुर्वैवस्वतः स्मृतः ॥ ५ ॥
सांप्रतं वर्तते योऽसौ तत्र देवान्ब्रवीम्यहम् ।
मरुद्गणास्तथाऽऽदित्या रुद्राश्च वसवः स्मृताः ॥ ६ ॥
पुरंदरस्तु देवेन्द्रो बभुवासुरदर्पहा ।
वसिष्ठः कश्यपश्चात्रिर्जमदग्निश्च गौतमः ॥ ७ ॥
विश्वामित्रो भरद्वाजः सप्तैत ऋषयो मताः ।
मन्वन्तराण्यतीतानि वर्तमानं मया द्विजाः ॥ ८ ॥
कथितान्यथ वक्ष्यामि शृणुध्वं प्रतिसंचरम् ।
चतुर्धा कथितः सोऽपि पुराणेऽस्मिन्द्विजोत्तमाः ॥ ९ ॥

---

१ (घ. ङ. छ.) ०ण्ठाख्याः स्मृ०। २ (घ. ङ.) ०धा बर०। ३ (क. ख. ग.) ०षयः स्मृताः।
४ (घ.) ०न्यत्र व०।

नित्यो नैमित्तिकश्चैव प्राकृतात्यन्तिकौ तथा ।
योऽयं भूतक्षयो लोके नित्यं नित्यस्तु स स्मृतः ॥ १० ॥
कल्पान्ते यस्तु संहारो नैमित्तिक इहोच्यते ।
महदाद्यं विशेषान्तं स यदा याति संक्षयम् ॥ ११ ॥
प्राकृतः प्रतिसर्गोऽयं कथ्यते मुनिभिर्द्विजाः ।
आत्यन्तिकस्तु प्रलयो ज्ञानादेव स जायते ॥ १२ ॥
तच्च ज्ञानं महेशस्य भक्तिलभ्यमितिश्रुतिः ।
चतुर्युगसहस्रान्ते संप्राप्ते भूतसंक्षये ॥ १३ ॥
अनावृष्टिस्ततस्तीव्रा जायते शतवार्षिकी ।
वृक्षगुल्मलताः सर्वाः पृथिव्यां यान्ति संक्षयम् ॥ १४ ॥
गभस्तिमाली भगवानथ सप्तरथोऽभवत् ।
रश्मिभिः सागराम्भांसि तदा पिबति भास्करः ॥ १५ ॥
दीप्ताश्च रश्मयस्तेन भवन्ति मुनिपुङ्गवाः ।
भवन्ति सूर्याः सप्तैते सर्वतो रश्मिसंकुलाः ॥ १६ ॥
तेषां रश्मिप्रतापेन दग्धा भवति मेदिनी ।
द्वीपैश्च पर्वतैः सार्धं सागरैश्च द्विजोत्तमाः ॥ १७ ॥
सूर्यतेजोग्निदग्धानां भूतानां च परस्परम् ।
एकत्वमुपजातानामग्निरेकस्ततोऽभवत् ॥ १८ ॥
ज्वालाभिरखिलं विश्वं निर्दहत्याशु पावकः ।
स दग्ध्वा पृथिवीं सर्वां रुद्रतेजोविजृम्भितः ॥ १९ ॥
दिवं दग्ध्वाऽथ पातालं दन्दहीति द्विजोत्तमाः ।
उत्तिष्ठन्ति शिखास्तस्य शतयोजनमायताः ॥ २० ॥
तेजसा तस्य कालाग्नेरग्निः संवर्तकः स्वयम् ।
दग्ध्वा स चतुरो लोकान्सयक्षोरगराक्षसान् ॥ २१ ॥
तप्तायःपिण्डवत्सर्वं जगदेतत्प्रकाशते ।
उत्तिष्ठन्ते ततो मेघास्तडिद्भिश्च समन्ततः ॥ २२ ॥

१ (घ.ङ.च.छ.ज.) ०क्षयाल्लोके । २ (घ.ङ.च.छ.ज.) इहेष्यते । ३ (क. ख. ग.) ०जाः । अत्य०। ४ (घ. ङ.) ०कश्च प्र०। ५ (क. ख. ग. ज.) ०स्तु मिल०। ६ (क.) ०च प्रजा० ७ (क. ख. ग.) यच्च । ८ (क. ख. ग.) ०क्षयुग्मल०। ९ (क. ख. ग. ज.) ०स्ततोऽग्र०। १० (घ. ङ. छ. ज.) दिव्यं द०। ११ (क. ख. ग.) ०काशितम् । उ०।

संवर्तकोपमाः सर्वे नानावर्णा भयंकराः।
जायन्ते भास्कराद्धोरा राविणो मुनिपुङ्गवाः॥ २३॥
ततो वर्षं प्रमुञ्चन्ति बिन्दुभिर्गजसंनिभैः।
ब्रह्मणा प्रेरिता वृष्टिर्जायते शतवार्षिकी॥ २४॥
जलौघैर्नाशमायान्ति तदा कल्पान्तपावकाः।
द्वीपैश्च पर्वतैर्युक्ता पृथिवी पूर्यते जलैः॥ २५॥
विलीयते धरा चैव सर्वा एव द्विजोत्तमाः।
तस्मिन्नेकार्णवे घोरे देवदेवः प्रजापतिः॥ २६॥
योगनिद्रां समास्थाय शेते ध्यायन्महेश्वरम्।
एष नैमित्तिकः प्रोक्तः प्रलयो मुनिपुङ्गवाः॥ २७॥
अतः शृणुध्वं वक्ष्यामि प्राकृतः प्रलयो यथा।
कालाग्निरुद्रो भगवान्परार्धद्वितये गते॥ २८॥
ब्रह्माण्डं भस्मसात्कृत्वा ताण्डवं नाट्यमास्थितः।
पीत्वा तत्परमानन्दं समालोक्य गिरीन्द्रजाम्॥ २९॥
एका सा परमा शक्तिर्नित्या हैमवती शिवा।
एक एव महादेवस्तयोर्भेदो न विद्यते॥ ३०॥
तिष्ठत्येका तदा तस्मिन्नेक एव महेश्वरः।
पार्वत्या परया शक्त्या नान्यः कश्चिदिति श्रुतिः॥ ३१॥
सहस्रशीर्षा पुरुषः सहस्राकृतिरीश्वरः।
सहस्रनयनो देवः सहस्रचरणः शिवः॥ ३२॥
सहस्रबाहुर्विश्वात्मा त्रिशूली दीप्तलोचनः।
दंष्ट्राकरालवदनः परब्रह्मतनुः शिवः॥ ३३॥
दग्ध्वा ब्रह्मादिकं विश्वं स्वतेजस्यधितिष्ठति?।
पृथिवी विलयं याति स्वगुणैरप्सु संयुता॥ ३४॥
जलमग्नौ लयं याति वायौ तेजश्च लीयते।
व्योम्नि वायुर्लयं याति भूतादौ व्योम लीयते॥ ३५॥
इन्द्रियाणि च सर्वाणि तैजसे यान्ति संक्षयम्।
वैकारिके देवगणाः प्रलयं यान्ति सत्तमाः॥ ३६॥

---

१ (क. ख. ग.) भयानकाः। जा०। २ (क. ख. ग.) ०निसत्तमाः॥ २३॥ ३ (क. ख. ग.) धरा चैव विलीयन्ते तदा वृष्ट्या द्वि०। ४ (घ. ङ. च. छ.) ० गिरिप्रजम्। ५ (घ. ङ. च. छ. ज.) एषा सा। ६ (घ. ङ. झ. छ. ज.) ०लाक्ष इतीश्व० ७ (घ. ङ.) ०जसाऽधि०। ८ (घ.) ०न्ति संगताः॥ ३६॥

अहंकारो लयं याति महति त्रिविधश्च यः ।
महत्तत्त्वं लयं याति विरञ्चौ मुनिपुङ्गवाः ॥ ३७ ॥
अव्यक्ते निलयस्तस्य ब्रह्मणः पद्मजन्मनः ।
एवं भूतैश्च तत्त्वानि संहृत्य भगवाञ्शिवः ॥ ३८ ॥
आस्ते स भगवानेको न द्वितीयोऽस्ति कश्चन ।
इच्छया पार्वतीशस्य प्रलयो नान्यथा द्विजाः ॥ ३९ ॥
ब्रह्मादीनां पुनः सृष्टिरित्याहुस्तत्त्वदर्शिनः ।
तस्यैव शक्तयस्तिस्रो ब्रह्मविष्णुमहेश्वराः ॥ ४० ॥
सर्वस्मादधिकस्ताभ्यः शूलपाणिरिति श्रुतिः ।
एकमेव महादेवं वदन्ति बहुधा जनाः ॥ ४१ ॥
ब्रह्माणं शार्ङ्गिणं रुद्रं वायुमिन्द्रं रविं शशिम् ? ।
अग्निं यमं च वरुणं जनं भेददृशो जनाः ॥ ४२ ॥
तत्तद्रूपं समास्थाय भगवानेव शंकरः ।
फलं ददाति सर्वेषां सर्वशक्तिमयः शिवः ॥ ४३ ॥
तस्मात्सर्वान्परित्यज्य यजेदेकं महेश्वरम् ।
आदिमध्यान्तरहितं निर्गुणं तमसः परम् ॥ ४४ ॥
क्रमेण लभ्यतेऽन्येषां मुक्तिराराधने द्विजाः ।
आराधयन्महेशं तं तस्मिञ्जन्मनि मुच्यते ॥ ४५ ॥
एष वः कथितो विप्रा यथावत्प्रतिसंचरः ।
यदीरितं भगवता किमन्यच्छ्रोतुमिच्छथ ॥ ४६ ॥ १५२१ ॥

इति श्रीब्रह्मपुराणोपपुराणे श्रीसौरे सूतशौनकसंवादे नित्यनैमित्तिकप्राकृतात्यन्तिकप्रतिसंचरकथनं नाम त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

**ऋषय ऊचुः**—सर्गश्च प्रतिसर्गश्च वंशा मन्वन्तराणि च ।
वंशानुचरितं चैव श्रुतं सर्वमशेषतः ॥ १ ॥
इदानीं श्रोतुमिच्छामश्चरितं त्रिपुरद्विषः ॥ २ ॥
पुराणि त्रीणि भगवान्ददाह स कथं पुरा ।
लीलयैवेषुणैकेन सूत नो वद कौतुकम् ॥ ३ ॥

---

१ (क. ख. ग.) ०निसत्तमाः ॥ ३७ ॥ २ (क. ख. ग.) ०त्त्ववादिनः । ३ (ख. ग. ङ. छ.) वन्दन्ति ।४ (क. ख. ग.) ०ग्निं मित्रं च । (ज.) ०ग्निमिन्द्रं च ।५ (क. ख. ग.) ०नं यमं ते ददृशुर्जनाः ॥४२॥ ६ (घ.ङ.च.छ.ज.) ०त्सर्वं परित्य० ७ (घ.ङ.च.छ.ज.) ०जेदेव म० ८ (घ. ङ. छ. ज.) ०था च प्र० ९ (क. ख. ग.) वंशो म०। १० (घ. ङ.) ०रित्रं त्रि० ।

**सूत उवाच**-शृणुध्वमृषयः सर्वे चरितं शूलपाणिनः ।
यथेरितं भगवता सूर्येण मनवे पुरा ॥ ४ ॥
शृण्वतां सर्वपापघ्नं सर्वदुष्टनिवारणम् ।
यत्तत्सर्वापदां हन्तृ श्रोत्रपीयूषमुत्तमम् ॥ ५ ॥
तारको नाम यो दैत्यो निहतः शक्तिपाणिना ।
आसन्सुतास्त्रयस्तस्य त्रैलोक्यैश्वर्यदर्पिताः ॥ ६ ॥
विद्युन्माली तारकाक्षः कमलाक्षो महाबलः ।
तेपुस्तपो महाघोरं दानवाः प्रियकाङ्क्षया ॥ ७ ॥
यमैश्च नियमैर्युक्ता बभूवुरनिलाशनाः ।
प्रीतश्चतुर्मुखस्तेषां प्रददौ वरमुत्तमम् ॥ ८ ॥
देवासुराणां सर्वेषामवध्यत्वं द्विजोत्तमाः ।
पुनस्तैरमरेशत्वं याचितः पद्मसंभवः ॥ ९ ॥
वरमन्यं दैत्यवर्या वृणीध्वं मनसेप्सितम् ।
दास्यामि तदहं क्षिप्रमिति ब्रह्माऽब्रवीत्पुनः ॥ १० ॥
अब्रुवंस्ते विचार्यैवं मिथः कमलसंभवम् ।
पुराणि त्रीणि लोकेश रचयित्वा वयं सदा ॥ ११ ॥
त्रींल्लोँकान्विचरिष्यामस्त्वत्तो लब्धवरा विभो ।
ततो वर्षसहस्रे तु समेष्यामः परस्परम् ॥ १२ ॥
एकीभावं गमिष्यन्ति पुराणि च सुरोत्तम ।
यदा समेतान्येतानि यो हन्याद्भगवंस्तदा ॥ १३ ॥
एकेनैवेषुणा देव स नो मृत्युर्भविष्यति ।
एवमस्त्विति तानुक्त्वा ब्रह्माऽन्तर्धानमाप्तवान् ॥ १४ ॥
तेषां मयस्तु क्रमशश्चक्रे त्रीणि पुराण्यथ ।
पृथिव्यामायसं त्वासीद्राजतं गगनाङ्गणे ॥ १५ ॥
स्वर्गे तु काञ्चनमयमसुराणां पुरं द्विजाः ।
विस्तारायामतस्तेषां योजनानां शतं भवेत् ॥ १६ ॥
आयसं यत्पुरं दिव्यं विद्युन्मालेस्तदाऽभवत् ।
राजतं तारकाख्यस्य कमलाख्यस्य काञ्चनम् ॥ १७ ॥
मयस्य तु गृहं रम्यं पुरेषु त्रिषु विस्तृतम् ।
तत्राऽऽस्ते दानवः श्रीमान्देवदानवपूजितः ॥ १८ ॥

---

( क.ख. ग. ) महाघोरं । २ ( क. ख. ग ) [illegible]

रम्यं पुरत्रयं रेजे त्रैलोक्यमिव चापरम् ।
विमानैः सूर्यसंकाशैः समन्तात्परिशोभितम् ॥ १९ ॥
गजवाजिसमाकीर्णं गोपुराट्टालमण्डितम् ।
सिद्धचारणगन्धर्वैर्दिव्यस्त्रीभिर्विराजितम् ॥ २० ॥
रहस्यायतनैर्दिव्यैरग्निहोत्रैर्गृहे गृहे ।
वेदाध्ययनसंपन्नैः समन्तादुपशोभितम् ॥ २१ ॥
सर्वाः पतिव्रतास्तत्र दानवानां स्त्रियो द्विजाः ।
महादेवार्चनेरतैर्दानवैरुपशोभितम् ॥ २२ ॥
तेषां तपःप्रभावेन शक्राद्यास्तनुतां गताः ।
दृष्ट्वा देवास्तदैश्वर्यं पुराणां द्विजसत्तमाः ॥ २३ ॥
देवास्तत्तेजसा दग्धा विष्णुं गत्वेदमब्रुवन् ।
देवा ऊचुः—देवदेव जगन्नाथ त्रैलोक्यस्याभयप्रद ॥ २४
पुरत्रयासुरभयाद्भवांस्त्रातुमिहार्हति ।
एवं सुराणां वचनं श्रुत्वा दानवमर्दनः ॥ २५ ॥
गोविन्दश्चिन्तयामास किं कार्यमिति चेतसा ।
हन्तव्यास्ते कथं दैत्या महादेवपरायणाः ॥ २६ ॥
हरतेजोग्निनिर्दग्धपापास्तेऽत्र न संशयः ।
त्रैलोक्यमपि यो हत्वा महादेवपरायणः ॥ २७ ॥
कस्तं निहन्ता त्रैलोक्ये विना शंभोरनुग्रहात् ।
शंभुप्रसादलेशेन ख्यातोऽस्मि भुवनत्रये ॥ २८ ॥
ब्रह्मा च देवा दैत्याश्च सिद्धाश्च मुनयस्तथा ।
मनवो राक्षसाः सर्पा गन्धर्वाः पितरश्च ये ॥ २९ ॥
मातरो गुह्यका भूताः पिशाचा मानवास्तथा ।
भगवन्तं महादेवमसंपूज्य जगत्त्रये ॥ ३० ॥
सिद्धिमिच्छन्ति ये मूढास्ते स्युर्दुःखस्य भाजनम् ।
तस्मात्तमीशमुग्रेण यज्ञेनेष्ट्वा सुरोत्तमम् ॥ ३१ ॥
हन्तव्या दानवा नूनमित्युक्त्वा कमलापतिः ।
मेरोरुत्तरतो गत्वा यज्ञेनाथ सदाशिवम् ॥ ३२ ॥

---

१ (क. ख. ग.) ०नपरैर्दा०। २ (घ. ङ.) ०लोक्याममभ०। ३ (घ. ङ. [illegible]०। ५ (क. ख. ग.) ०च्छति यो मूढः स भवेद्दुःखभ

इष्ट्वा वै रुद्रभागेन ततो भूता विनिर्गताः ।
नानायुधकराः सर्वे त्रैलोक्यदहनप्रभाः ॥ ३३ ॥
भूतांस्तान्प्रस्थितान्दृष्ट्वा देवो नारायणोऽब्रवीत् ।
गत्वा पुरत्रयं शीघ्रं दग्ध्वा हत्वा महासुरान् ॥ ३४ ॥
निःशेषानसुरान्कृत्वा पुनरागन्तुमर्हथ ।
अथ विष्णोर्वचः श्रुत्वा भूतवृन्दा महाबलाः ॥ ३५ ॥
हरिं प्रणम्य प्रययुस्तन्नियोगात्पुरत्रयम् ।
भूता भयंकरा दृप्ता अयुतायुतकोटयः ॥ ३६ ॥
पुरत्रयमनुप्राप्य बभूवुर्नष्टचेतसः ।
पराजितास्ततो भूता दैत्यैः सन्मार्गवर्तिभिः ॥ ३७ ॥
पुनरभ्येत्य शक्राद्या देवं नारायणं विभुम् ।
अब्रुवंस्त्राहि भगवन्निर्जिता भयविह्वलाः ॥ ३८ ॥
चिन्तयामास तान्दृष्ट्वा शक्रादीन्विष्णुरव्ययः ।
भविष्यति कथं कार्यं देवानामिति सुव्रताः ॥ ३९ ॥
नाभिचारेण नाशोऽस्ति धर्मिष्ठानां महात्मनाम् ।
एते दैत्या महाभागाः सत्यव्रतपरायणाः ॥ ४० ॥
श्रौतस्मार्तक्रियानिष्ठा महादेवार्चने रताः ।
मायया मोहयित्वैव निहन्तव्या महासुराः ॥ ४१ ॥
हनिष्ये त्रिपुरं सर्वमिति संचिन्त्य चेतसा ।
असृजन्मायिनं शार्ङ्गी स्वात्मदेहान्मुनीश्वराः ॥ ४२ ॥
दृष्टप्रत्ययकृच्छास्त्रं ददौ विष्णुः सुविस्तरम् ।
यस्मिञ्शरीरमेवाऽऽत्मा नास्ति पारत्रिकी गतिः ॥ ४३ ॥
संघातश्चेतयत्येव सुराया मदशक्तिवत् ।
अपहृत्य परद्रव्यं कामस्तेनैव सेव्यते ॥ ४४ ॥
शास्त्रं तदुपदिश्यैव त्रिपुरं प्रति सुव्रताः ।
प्रेषयामास तं विष्णुः सोऽपि मायी तदा ययौ ॥ ४५ ॥
पुरत्रयं प्रविश्याथ दानवा मोहितास्तदा ।
तत्यजुर्वैदिकं कर्म भवे भक्तिं च शाश्वतीम् ॥ ४६ ॥

---

१ (क. ख. ग. घ. ङ. ज.) दृष्ट्वा । २ (घ. ङ.) ०र्गवृत्तिभिः । ३ (क.) ०म् । अस्मि० (ख. ग.) ०म् । तस्मि० । ४ (घ.) यस्माच्छरी० । ५ (घ. ङ. च. छ. ज.) ०मनिशं क्वचित् ।

पातिव्रत्यं विहायैव स्वैरिण्यश्च स्त्रियस्तदा ।
नारदोऽपि ययौ तत्र स्वशिष्यैः सहितो मुनिः ॥ ४७ ॥
मायारूपं समास्थाय नियोगाच्चक्रिणो द्विजाः ।
स्त्रियो दृष्टफलार्थिन्यो दैत्या दृष्टफलार्थिनः ॥ ४८ ॥
बभूवुरुपदेशेन नारदस्य महात्मनः ।
पाषण्डमार्गभूयिष्ठा वेदमार्गविवर्जिताः ॥ ४९ ॥
शिवार्चनपरिभ्रष्टाः संजाता दानवास्तदा ।
एवं स भगवान्विष्णुर्मायारूपधरो विभुः ॥ ५० ॥
अधर्मबहुलं कृत्वा त्रिपुरं मुनिपुङ्गवाः ।
महादेवमनुप्राप्य शरणं सर्वदेहिनाम् ॥ ५१ ॥
तुष्टाव स्तोत्रवर्येण[1] भगवन्तं सनातनम् ।
दण्डवत्प्रणिपत्याऽऽह जले स्थित्वा समाहितः ॥ ५२ ॥
नमः सर्वात्मने तुभ्यं शंकरायार्तिहारिणे ।
रुद्राय नीलकण्ठाय कद्रुद्राय[2] प्रचेतसे ॥ ५३ ॥
गतिस्त्वं सर्वदाऽस्माकं नान्यो[3] देवारिमर्दन ।
त्वमादिस्त्वमनादिस्त्वमनन्तश्चाक्षयः[4] प्रभुः ॥ ५४ ॥
प्रकृतिः पुरुषः साक्षाद्स्रष्टा हर्ता जगद्गुरुः ।
त्राता नेता जगत्यस्मिन्[5]द्विजादीन्द्विजवत्सलः ॥ ५५ ॥
वरदो वाङ्मयो वाच्यो वाच्यवाचकवर्जितः ।
ध्येयो मुक्त्यर्थमीशानो योगिभिर्योगवित्तमैः ॥ ५६ ॥
हृत्पुण्डरीकसुषिरे योगिनां संस्थितं सदा[6] ।
वदन्ति सूरयः सन्तं परब्रह्मस्वरूपिणम् ॥ ५७ ॥
भवन्तं तत्त्वमित्याहुस्तेजोराशिं परात्परम्[7] ।
परमात्मानमित्याहुरस्मिञ्जगति यद्विभो ॥ ५८ ॥
दृष्टं[8] श्रुतं स्थितं सर्वं जायमानं जगद्गुरो ।
अणोरल्पतरं प्राहुर्महतोऽपि महत्तरम् ॥ ५९ ॥
सर्वतः पाणिपादान्तं सर्वतोऽक्षिशिरोमुखम् ।
महादेवमनिर्देश्यं सर्वज्ञं त्वामनामयम् ॥ ६० ॥

---

१ ( घ. ङ. छ. ज. ) °र्यैकं स्वै° । २ ( घ. ङ. छ. ज. ) °लरुद्राय । ३ ( क. ख. ग. ) °न्यदेवा° । ४ ( घ. ) °नन्तो ह्यक्ष° । ५ ( घ. ) °स्मिन्मा° । ६ ( क. ख. ग. ) °तस्सदा ॥ ५४ ॥ ७ ( क. ख. ग. ) °रावर° । ८ ( घ. ) °ष्टं स्थितं जगत्सर्वं ।

विश्वरूपं विरूपाक्षं सदाशिवमनुत्तमम् ।
कोटिभास्करसंकाशं कोटिशीतांशुसंनिभम् ॥ ६१ ॥
कोटिकालाग्निसंकाशं षड्विंशात्मकमीश्वरम् ।
प्रवर्तकं जगत्यस्मिन्प्रकृतेः प्रपितामहम् ॥ ६२ ॥
वदन्ति वरदं देवं सर्वावासं स्वयंभुवम् ।
श्रुतयः श्रुतिसारं त्वां श्रुतिसारविदश्च ये ॥ ६३ ॥
अदृष्टमस्माभिरनेकमूर्ते द्विधा कृतं यद्भवता नु लोके ।
तदेव दैत्यासुरभूसुराश्च देवासुराः स्थावरजङ्गमाश्च ॥ ६४ ॥
पाहि नान्या गतिः शंभो विनिहत्यासुरान्क्षणात् ।
मायया मोहिताः सर्वे दैत्यास्ते परमेश्वर ॥ ६५ ॥
यथा तरङ्गाः शफरीसमूहा युध्यन्ति(?) चान्योन्यमपां निधौ तु ।
जडाश्रयादेव जडीकृताश्च सुरासुरास्तद्विजये हि सर्वे ॥ ६६ ॥

**सूत उवाच**–य इमं प्रातरुत्थाय शुचिर्भूत्वा पठेन्नरः ।
शृणुयाद्वा स्तवं पुण्यं सर्वान्कामानवाप्नुयात् ॥ ६७ ॥
एवं स्तुतो महादेवो रुद्रजाप्येन चक्रिणा ।
नन्दिदत्तकरः शंभुः स्वयं वचनमब्रवीत् ॥ ६८ ॥

**ईश्वर उवाच**–युष्मत्कार्यं मया ज्ञातं विष्णोर्मायाबलं तथा ।
त्रिपुरे चैव यद्वृत्तमसुराणां सुरोत्तमाः ॥ ६९ ॥
सर्वे गतसमाचारा वेदधर्मविनिन्दकाः ।
दानवास्ते यतो जातास्तस्माद्वध्या मया तथा ॥ ७० ॥
एवमुक्त्वा महादेवः सोमः स्कन्देन नन्दिना ।
गणेश्वरैश्च सहितो दिव्यं भवनमाविशत् ॥ ७१ ॥
अथ ब्रह्मादयो देवा द्वारमाश्रित्य तुष्टुवुः ।
ततो गणाग्रणीर्नन्दी शूलहस्तो विनिर्गतः ॥ ७२ ॥
आज्ञया देवदेवस्य तं दृष्ट्वा देवतागणाः ।
तुष्टुवुर्विविधैः स्तोत्रैरभीष्टार्थप्रदायिनम् ॥ ७३ ॥
ववर्षुः पुष्पवर्षाणि नन्दिनो मूर्ध्नि खेचराः ।
नियोगाद्ब्रह्मणः सर्वे नन्दी तुष्टस्तदाऽभवत् ॥७४॥१९९९॥

इति श्रीब्रह्मपुराणोपपुराणे श्रीसौरे सूतशौनकसंवादे विद्युन्मालितारकाक्षकमलाक्षतपआदिकथनं नाम चतुस्त्रिंशोऽध्यायः॥३४॥

१ (क.ग.घ.ङ.) षड्विंशा०। २ (घ.) ०वतो नु लो०। ३ (क.ख.ग.ङ.) ०के। त्वमेव। ४ (घ.ङ.) ०न निर्मितः। ग०। ५ (छ.ज.) ०न्दितः। ग०। ६ (क.ख.ग.घ.ङ.ज.झ.) गणैः सुरै०।

**सूत उवाच**–अथ नन्दीश्वरः प्राह ब्रह्मादीन्परया मुदा ।
ससारथिं रथं शंभोः सशरं कर्तुमर्हथ ॥ १ ॥
रथारूढो महादेवस्त्रिपुरं संहरिष्यति ।
अथ देवाधिदेवस्य निर्मितो विश्वकर्मणा ॥ २ ॥
रथः परमशोभाढ्यः सर्वदेवमयः शिवः ।
सूर्यचन्द्रौ स्मृतौ चक्रे अरयः शशिनः कलाः ॥ ३ ॥
सूक्ष्मारा द्वादशादित्या नेम्यः षडृतवः स्मृताः ।
अन्तरिक्षमभूत्तस्य पुष्करं मुनिपुङ्गवाः ॥ ४ ॥
मन्दरश्चाभवन्नीडं कूबरं कथयामि वः ।
उदयाद्रिस्तथाऽस्ताद्रिरधिष्ठानमथोच्यते ॥ ५ ॥
मेरुः केसरशैलश्च वेगः संवत्सरः स्मृतः ।
अयने मेखले प्रोक्ते चक्रयोर्मुनिपुङ्गवाः ॥ ६ ॥
मुहूर्ता बन्धुराः शस्ता रथस्य द्विजसत्तमाः ।
घोणा काष्ठाश्च विज्ञेया अक्षदण्डः क्षणा द्विजाः ॥ ७ ॥
कुथा निमेषाः कथिताः कलाश्चैव लवाः स्मृताः ।
द्यौर्वरूथमभूत्तस्य स्वर्गमोक्षावुभौ ध्वजौ ॥ ८ ॥
दण्डौ च कर्मवैराग्यौ मखा दण्डाश्रयाः स्मृताः ।
संधयो दक्षिणास्तस्य युगाक्षौ शृणुत द्विजाः ॥ ९ ॥
अर्थकामौ द्विजश्रेष्ठा ईषादण्डस्तथोच्यते ।
अव्यक्तमिति यत्प्रोक्तं बुद्धिस्तस्यैव विड्वलः ॥ १० ॥
अहंकारो भवेत्कोणो भूतानि बलमुत्तमम् ।
भूषणानीन्द्रियाणि स्युरर्धं च गतिरुत्तमा ॥ ११ ॥
वेदास्तस्य हयाः प्रोक्ताः षडङ्गानि च भूषणम् ।
धर्मशास्त्राणि मीमांसा पुराणं न्याय एव च ॥ १२ ॥
बाणाश्रयाक्षयाश्चैव(?) मन्त्रा घण्टा इहेरिताः ।
रथंतरं च च्छन्दांसि दिशः पादा रथस्य ताः ॥ १३ ॥
सरितां पतयस्तस्य रथकम्बलिकाः स्मृताः ।
गङ्गाद्याः सरितः शुभ्राः सर्वाभरणभूषिताः ॥ १४ ॥

---

१ (क.) ०लस्य वे०। २ (क.ख.ग. ज.) शम्या र०। ३ (च. ङ.) ०दा वस्य। ४ (घ. ङ.) ०णि सर्वाणि मीमांमा न्या०। ५(घ. ङ. छ. ज.) ०ताः। अनन्तरथचक्र०।

सर्वाः स्त्रीरूपधारिण्यश्चामराग्रकराः शुभाः।
सप्ताऽऽवहाद्याः सोपानाः सारथिर्भगवानजः॥ १५॥
प्रतोदः प्रणवस्तस्य शैलेन्द्रः कार्मुकं तथा।
ज्या भुजंगाधिपः श्रीमान्घण्टा वै भारती स्मृता॥ १६॥
इषुस्तस्याभवद्विष्णुर्यमः शल्यं द्विजोत्तमाः।
शरस्य तैक्ष्ण्यं कालाग्निरेवं देवमयो रथः॥ १७॥
अथाऽऽरुरोह भगवान्दिव्यं रथमनुत्तमम्।
स्तूयमानो महादेवो मुनिसंघैर्मुनीश्वराः॥ १८॥
स्वकार्यविघ्नकर्तारं देवं दृष्ट्वा विनायकम्।
संपूज्य भक्ष्यभोज्यैश्च फलैश्च विविधैः शुभैः॥ १९॥
उण्डेरैर्मोदकैश्चैव पुष्पैर्दीपैर्मनोहरैः।
एवं संपूज्य भगवान्पुरं दग्धुं जगाम ह॥ २०॥
शंभोरग्रे ययुर्देवास्तेषामग्रे गणेश्वराः।
तेषामग्रेसरो नन्दी सर्वलोकनमस्कृतः॥ २१॥
विमानं कोटिसूर्याभमारुह्य मुनिपुङ्गवाः।
दैत्यान्प्रहर्तुं शैलादिर्स्त्वरेण प्रययौ तदा॥ २२॥
समन्तात्प्रययुर्देवाः सायुधाश्च सवाहनाः।
लोकपालास्तथा सिद्धा गन्धर्वाप्सरसां गणाः॥ २३॥
मुनयः शंसितात्मानो मातरो लोकमातरः।
समन्तादेवदेवस्य कृताञ्जलिपुटा ययुः॥ २४॥
पुष्पवर्षाणि ववृषुः खेचराश्चारणास्तथा।
भृङ्गी पुरत्रयं हन्तुं लक्षकोटिगणैर्वृतः॥ २५॥
जगाम शङ्कुकर्णश्च गोकर्णश्च महाबलः।
कुन्ददन्तो महाकालो डिण्डी मुण्डी गणेश्वरः॥ २६॥
शतजिह्वः सहस्राक्षो वीरभद्रो महाबलः।
शिवाख्यो विशिखश्चैव तथा पञ्चशिखो महान्॥ २७॥
शतास्यष्टङ्कहस्तश्च पिशाचीशः पिनाककृक्।
एते चान्ये च बहवो गणानां लक्षकोटयः॥

---

१ (क. ख. ग.) भक्ष्यैर्भोज्यै०। २ (क. ख. ग. ज.) ०कैर्दिव्यैः पु०। ३ (क. ख. ग. ज.) ०मोदकैः। ए०। ४ (घ. ङ.) ०दिः स्वरे०। ५ (क. ख. ग. ङ.) ०लाख्यो वी०। ६ (घ. ङ. छ.) ०शाचाश्च पि०।

समन्तात्परिवार्येशं त्रिपुरं हन्तुमुद्यताः ॥ २८ ॥
अथ विरञ्चिमुरारिविभावसुप्रभृतिभिर्नतपादसरोरुहः ।
सह तदा हि जगाम तयाऽम्बया सकललोकहिताय पुरत्रयम् ॥२९॥
दग्धुं समर्थो मनसा क्षणेन चराचरं सर्वमिदं त्रिशूली ।
किं त्वत्र दग्धुं त्रिपुरं पिनाकी स्वयं गतस्तत्र गणैश्च सार्धम् ॥३०॥
रथेन किं चेषुवरेण तस्य गणैश्च शंभोस्त्रिपुरं दिधक्षतः ।
पुरत्रयं दग्धुमलुप्तशक्तेः किमेतदित्याहुरजेन्द्रमुख्याः ॥ ३१ ॥
मन्ये च नूनं भगवान्पिनाकी लीलार्थमेतत्सकलं प्रहर्तुम् ।
व्यवस्थितश्चेति तथाऽन्यथा चेदाडम्बरेणास्य फलं किमेतत् ।३२।
अथ पाणौ समादाय धनुर्देवो महेश्वरः ।
शरं सन्धाय वेगेन त्रिपुरं समचिन्तयत् ॥ ३३ ॥
तस्मिन्काले पुष्ययोगे पुराण्येकत्वमाययुः ।
तदा समभवद्विप्रा देवानां तुमुलो महान् ॥ ३४ ॥
देवाश्च मुनयः सर्वे तुष्टुवुः परमेश्वरम् ।
ननृतुर्यक्षगन्धर्वाश्चारणाः सिद्धकिंनराः ॥ ३५ ॥
अथाब्रवीन्महादेवं ब्रह्मा लोकपितामहः ।
पुष्ययोगस्त्वनुप्राप्तो भगवन्पार्वतीपते ॥ ३६ ॥
पुराणीमानि देवेश पृथग्भावं न यान्ति वै ।
योगेऽस्मिन्नेव भगवंस्त्रिपुरं दग्धुमर्हसि ॥ ३७ ॥
देवाश्च दैत्या देवेश समास्तव महेश्वर ।
धर्मात्मानः सुरा यस्मात्पापात्मानोऽसुरास्तथा ॥ ३८ ॥
तस्माल्लीलां विहायैव भगवन्विश्वपूजित ।
त्रैलोक्यस्य हितार्थाय त्रिपुरं दग्धुमर्हसि ॥ ३९ ॥
अथावैक्षत देवेशः पुरत्रयमवज्ञया ।
भस्मसादभवद्विप्राः प्रभावात्परमेष्ठिनः ॥ ४० ॥
अथाब्रुवन्नुपेन्द्राद्या भगवन्तमुमापतिम् ।
कृताञ्जलिपुटाः सर्वे स्तुवन्तोऽस्य रथे स्थिताः ॥ ४१ ॥
दग्धं यद्यपि देवेश त्रिपुरं वीक्षणात्प्रभो ।
देवानां कार्यसिद्ध्यर्थं शरं मोक्तुमिहार्हसि ॥ ४२ ॥

---

[illegible]

अथ ज्यां धनुषो मृज्य(?) प्रहसन्भगनेत्रहा।
मुमोच बाणं वेगेन त्रिपुरं भस्मसादभूत् ॥ ४३ ॥
ये तत्रेशाननिरता दैत्याः क्षपितकल्मषाः।
शिवलोकं गताः सर्वे शिवस्यानुग्रहाद्द्विजाः ॥ ४४ ॥
विरञ्चिप्रमुखा देवा मुनयः सिद्धकिंनराः।
ववन्दिरे महादेवं दण्डवत्प्रणिपत्य ते ॥ ४५ ॥

**सूत उवाच**-एवं विश्वेश्वरो देवो भगवान्पार्वतीपतिः।
ब्रह्मादिभ्यो वरं दत्वा मन्दरं प्रययौ शिवः ॥ ४६ ॥
ततो देवाः प्रमुदिताः स्वं स्वं धाम ययुर्द्विजाः।
निर्वैराः स्वस्थमनसः शिवस्यानुग्रहात्स्थिताः ॥ ४७ ॥
एवं संक्षेपतः प्रोक्तं दग्धं भगवता यथा।
त्रिपुरं मुनिशार्दूलाः पुण्याख्यानमनुत्तमम् ॥ ४८ ॥
यः पठेदिदमाख्यानं महादेवस्य संनिधौ।
सर्वपापविनिर्मुक्तः शिवलोके महीयते ॥ ४९ ॥
लक्ष्मीं विद्यां यशः पुत्रान्दारांश्च लभते नरः।
अन्यांश्च प्राप्नुयात्कामाञ्श्रद्धया मुनिपुङ्गवाः ॥ ५० ॥ १६४५ ॥

इति श्रीब्रह्मपुराणोपपुराणे श्रीसौरे सूतशौनकसंवादे शिवरथ-
त्रिपुरदाहकथनं नाम पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

**ऋषय ऊचुः**-गाणपत्यं कथं लब्धमीश्वरादुपमन्युना।
क्षीरोदधिः कथं लब्धो ह्येतदाख्यातुमर्हसि ॥ १ ॥

**सूत उवाच***-उपमन्युरिति ख्यातो योऽसौ धौम्याग्रजो मुनिः।
महादेवाल्लब्धवरो द्वितीय इव षण्मुखः ॥ २ ॥
क्रीडमानो महाभागः कदाचिन्मातुलाश्रमे।
तस्यैव च गृहे पीतं क्षीरं तेनोपमन्युना ॥ ३ ॥
अब्रवीन्मातरं बालः पुनरेत्य स्वमाश्रमम्।
मातर्ममाद्य तद्देहि क्षीरं स्वादुतरं ततः ॥ ४ ॥

---

* कखपुस्तकयोर्मध्य एष श्लोको न दृश्यते।

तन्माता दुःखिता भूत्वा पुत्रमालिङ्ग्य सादरम् ।
बीजान्यथ समादाय पिष्ट्वा सा कलभाषिणी ॥ ५ ॥
पुत्राय प्रददौ क्षीरं सामपूर्वं च कृत्रिमम् ।
मात्रा दत्तं ततः पीत्वा पयः स मुनिपुङ्गवाः ॥ ६ ॥
मातः पयस्त्वया दत्तं नैतदित्यब्रवीद्वचः ।
अश्रुपूर्णेक्षणं दृष्ट्वा पुत्रं माता सुदुःखिता ॥ ७ ॥
नेत्रे संमार्ज्य हस्ताभ्यां पुत्रं प्रतीदमब्रवीत् ।
वने निवसतां पुत्र दरिद्राणां विशेषतः ॥ ८ ॥
यत्त्वया याच्यते क्षीरं तत्सदा दुर्लभं हि नः ।
भुक्तिश्च शिवकारुण्याल्लभ्यते नान्यथा सुत ॥ ९ ॥
**सूत उवाच**—एवं मातुर्वचः श्रुत्वा बालोऽपि मुनिपुङ्गवाः ।
मातरं प्राह कल्याणीं विनयेन तपस्विनीम् ॥ १० ॥
**उपमन्युरुवाच**—मातः शोकं त्यज क्षिप्रं यद्यस्ति भगवाञ्शिवः ।
क्वचिदप्यानयाम्याशु क्षीराब्धिं तव संनिधौ ॥ ११ ॥
एवमुक्त्वाऽथ तां नत्वा मातरं मुनिबालकः ।
जगाम स तपस्तप्तुं मातुराज्ञाप्रणोदितः ॥ १२ ॥
उपमन्युस्तपस्तेपे गत्वा तु हिमपर्वतम् ।
भूत्वाऽनिलाशनो विप्रा बहून्यब्दशतानि सः ॥ १३ ॥
तस्योपमन्योस्तपसा प्रदीप्तं भुवनत्रयम् ।
दृष्ट्वा तदीदृशं देवा विष्णुं गत्वेदमब्रुवन् ॥ १४ ॥
*__देवा ऊचुः__—देवदेव जगन्नाथ पुराण पुरुषोत्तम ।
त्रैलोक्यं दहतो वह्नेरस्मांस्त्रातुमिहार्हसि ॥ १५ ॥
श्रुत्वा तदीरितं विष्णुः संचिन्त्य मनसा तदा ।
जगाम शंकरं द्रष्टुं मन्दरं पर्वतोत्तमम् ॥ १६ ॥
महादेवं प्रणम्याथ दृष्ट्वा विष्णुः कृताञ्जलिः ।
अब्रवीद्भगवान्कश्चिद्बालको हिमवद्गिरौ ॥ १७ ॥

---

* कखगसंज्ञितपुस्तकेष्वेव पदद्वयमिदं दृष्टम् ।

---

१ (क. खं. ग.) भूता पु०। २ (क.) नः। भक्ति०। (ख. ग. ज. झ.) नः। मुक्ति०

उपमन्युरिति ख्यातः क्षीरार्थं तपसि स्थितः ।
तपोऽग्निस्तस्य भगवन्दन्दहीति जगत्रयम् ॥ १८ ॥
अथ देवो महादेवः परमात्मा शिवः स्वयम् ।
इन्द्ररूपं समास्थाय जगाम हिमवद्गिरिम् ॥ १९ ॥
ऐरावतं समारुह्य देवसंघैः समावृतः ।
वामेन शच्या सहितो मुनेस्तस्य तपोवनम् ॥ २० ॥
शक्ररूपधरः शंभुः प्रीत्या भूत्वाऽथ सुव्रताः ।
वरं ब्रूहीत्युवाचेदमुपमन्युं महामुनिम् ॥ २१ ॥
इतीरितं वचस्तस्य श्रुत्वा वज्रधरस्य सः ।
ततः प्रहसितः प्राह शिवेऽर्पितमनाः स्वयम् ॥ २२ ॥
भक्तिं शूलिन्यहं याचे शिवादेव न चान्यथा ।
अलमन्यैर्वरैः शक्र तरङ्गैरिव चञ्चलैः ॥ २३ ॥
निमिषं निमिषार्धं वा मुहूर्तं क्षणमेव वा ।
न ह्यलब्धप्रसादस्य भक्तिर्भवति शंकरे ॥ २४ ॥
त्वत्पदं तुच्छवद्भाति ब्रह्मत्वं चापि वृत्रहन् ।
भक्तिरेव विरूपाक्षे भवत्विति मतिर्मम ॥ २५ ॥
तस्मिन्महेश्वरे शक्र भक्तिश्चेद्यदि लभ्यते ।
ब्रह्मत्वमपि मे भाति पलालमिव नान्यथा ॥ २६ ॥
एवं मुनेर्निगदितं श्रुत्वा कुपितवत्प्रभुः ।
तमब्रवीच्छचीनाथो न मां वेत्सि कथं मुने ॥ २७ ॥
मत्परो मन्नमस्कारी मत्पूजनपरो भव ।
मयि प्रसन्ने जगति दुर्लभं किमिहास्ति ते ॥ २८ ॥
किं तेन पार्वतीशेन निर्गुणेन महात्मना ।
क्रियते मुनिशार्दूल तस्मान्मत्तो वरं शृणु ॥ २९ ॥
एवं शक्रस्य वचनं श्रुत्वा मुनिवराग्रणीः ।
उपमन्युरभूत्क्रुद्धश्चिन्तयानस्तदा द्विजाः ॥ ३० ॥

---

१ (घ.) ०ग्निर्भगवंस्तस्य संदहाति०। २ (ग. घ. ङ. छ.) ०वन्संदहति०। ३ (ख. ग. छ. ज.) ०म्। ऐन्द्रं रू०। ४ (छ.) प्रीतो भू०। ५ (क. ख. ग. ज.) ०स्य शक्ररूपध०। ६ (क. ख.) ०सः। श्रुत्वा प्र०। ७ (घ. ङ. च. छ.) सति शू०। ८ (ग.) ०श्चेल्लभ्यते सदा। ब्र०। ९ (घ. ङ. च. छ.) ०न्ने भवति।

अहो कश्चिदिहाऽऽयातः पापात्मा राक्षसाधमः ।
शक्ररूपं समास्थाय मत्तपोविघ्नहेतवे ॥ ३१ ॥
तस्मादसौ निहन्तव्यः शिवनिन्दाकरो यतः ।
तन्निन्दाश्रवणात्पापादधिकं तदुपेक्षणात् ॥ ३२ ॥
शिवनिन्दाकरं दृष्ट्वा घातयित्वा प्रयत्नतः ।
हत्वाऽऽत्मानं पुनर्यस्तु स याति परमां गतिम् ॥ ३३ ॥
इति शास्त्रं समुद्दिश्य शक्रं हन्तुं समुद्यतः ।
अब्रवीत्सुरराजानमुपमन्युर्मुनीश्वराः ॥ ३४ ॥
क्षीरार्थं यत्तपस्तावदास्तामत्र शचीपते ।
त्वां निहत्याऽऽत्मनो देहं दहिष्ये(?) योगवह्निना ॥ ३५ ॥
एवमुक्त्वा समादाय भस्मनो मुष्टिमादरात् ।
अथर्वास्त्रेण तज्जप्त्वा शक्रं दग्धुं मुमोच सः ॥ ३६ ॥
वह्निधारणयाऽऽत्मानं दग्धुं समुपचक्रमे ।
ध्यायन्विश्वेश्वरं देवं परमात्मानमव्ययम् ॥ ३७ ॥
एवं व्यवसिते तस्मिन्पिनाकी नीललोहितः ।
सौम्यधारणयाऽऽग्नेयीं वारयामास शंकरः ॥ ३८ ॥
शैलादिनाऽन्यथा तत्र संहृतां चातिभीषणाम् ।
अथ विश्वाधिपो रुद्रो भक्तिं ज्ञात्वा दृढां मुनेः ॥ ३९ ॥
आत्मानं दर्शयामास कोटिसूर्यसमप्रभम् ।
पञ्चवक्त्रं दशभुजं बालेन्दुकृतशेखरम् ॥ ४० ॥
द्वीपिचर्मपरीधानं त्रिपञ्चनयनं विभुम् ।
तं दृष्ट्वा कृतकृत्योऽभूदुपमन्युर्महामुनिः ॥ ४१ ॥
स्तोत्रैर्नानाविधैर्दिव्यैस्तुष्टाव परमेश्वरम् ।
तस्मै प्रसन्नो भगवान्दत्तवान्क्षीरसागरम् ॥ ४२ ॥
गाणपत्यं च दुष्प्रापं ब्रह्माद्यैरपि सुव्रताः ।
यद्दत्तं देवदेवेन नाभूत्तत्राऽऽदरो मुनेः ॥ ४३ ॥
भक्तिमेव विरूपाक्षे पुनः पुनरयाचत ।
एवं दत्वा वरं तस्मै महादेवः सहोमया ॥ ४४ ॥
स्तूयमानः सुरगणैस्तत्रैवान्तरधीयत ॥ ४५ ॥

---

१ (क. ख. ग. ज.) ०स्त्रं विनिश्चित्य श०। २ (क. ख. ग. च. ज.) ०थैर्देवं तुष्टा०।

यः पठेदिदमाख्यानमुपमन्योर्महात्मनः ।
सर्वपापविनिर्मुक्तो ब्रह्मलोकं स गच्छति ॥ ४६ ॥ १६९१ ॥

इति श्रीब्रह्मपुराणोपपुराणे श्रीसौरे सूतशौनकसंवाद उपमन्यूपाख्यान-
कथनं नाम षट्त्रिंशोऽध्यायः ॥ ३६ ॥

*ऋषय ऊचुः—कथं जालंधरो दैत्यो निहतः शूलपाणिना ।
सुदर्शनेन चक्रेण वक्तुमर्हसि सांप्रतम् ॥ १ ॥

सूत उवाच—आसीत्कृतान्तसंकाशो जालंधर इति स्मृतः ।
जलमण्डलसंभूतस्तेन देवा विनिर्जिताः ॥ २ ॥
†लोकपालाश्च साध्याश्च वसवश्च मरुद्गणाः ।
विश्वेदेवास्तथाऽऽदित्या रुद्राश्चैव विनिर्जिताः ॥ ३ ॥
ब्रह्माणं च सुरश्रेष्ठं समरे मुनिपुङ्गवाः ।
जगाम जेतुं देवेशं विष्णुं दैत्यनिवर्हणम् ॥ ४ ॥
तेन सार्धमभूद्युद्धं जालंधरसुरेशयोः ।
विनिर्जित्य ततो विष्णुं दैत्यान्प्रतीदमब्रवीत् ॥ ५ ॥
देवा विनिर्जिताः सर्वे वर्जयित्वा त्रिलोचनम् ।
तमद्य जेतुमिच्छामि भगवन्तं महेश्वरम् ॥ ६ ॥
नन्दीश्वरेण सहितं साम्बं चैव रणाङ्गणे ।
जालंधरवचः श्रुत्वा दैतेयास्ते द्विजोत्तमाः ॥ ७ ॥
ययुर्देवं तमीशानं योद्धुमुद्युक्तमानसाः ।
ततो जालंधरो दैत्यो दैत्यैश्च सहितो बली ॥ ८ ॥
रथैर्नागैश्च संनद्धः प्रययौ शंकरान्तिकम् ।
दृष्ट्वा जालंधरं शंभुरञ्जनाद्रिचयोपमम् ॥ ९ ॥
प्रहसन्नब्रवीद्दैत्यं ब्रह्मणो वरदर्पितम् ।
युद्धेनालं दितेः पुत्र मद्बाणैर्निशितैरिह ॥ १० ॥
क्षणाद्विच्छिन्नसर्वाङ्गो मृत्योर्ग्रासं गमिष्यसि ।
श्रुत्वा जालंधरो वाक्यं देवदेवस्य शूलिनः ॥ ११ ॥
कुपितः प्राह देवेशं भगवन्तं त्रिलोचनम् ।
अनेन वाक्प्रलापेन किं महेश वृथा तव ॥ १२ ॥
गदया ताडयामि त्वामनया तीक्ष्णधारया ।
मां यो जेष्यति लोकेषु न तं पश्यामि शंकर ॥ १३ ॥

---

* कखगसंज्ञितपुस्तकेष्वयं श्लोको न दृश्यते । † घसंज्ञितादर्शपुस्तके नास्त्ययं श्लोकः ।

१ (क. ख. ग. ङ.) ०ति श्रुतः ।

तस्मादुत्थाय युध्यस्व यदि तेऽस्ति बलं शिव ।
श्रुत्वाऽथ दैत्यवचनं पादाङ्गुष्ठेन शंकरः ॥ १४ ॥
चकार लीलया चक्रमम्बुधौ दिव्यमायुधम् ।
यदिदं निर्मलं चक्रं जालंधरमयाऽम्बुधौ ॥ १५ ॥
बलं ते यदि चोद्धर्तुं तिष्ठ योद्धुं च नान्यथा ।
आकर्ण्य तस्य वचनं क्रोधसंरक्तलोचनः ॥ १६ ॥
शूलिनं प्राह विप्रेन्द्रास्त्रैलोक्यं प्रदहन्निव ।
**जालंधर उवाच**–रेखामात्रं किमुद्धर्तुं किमिदं भाषसे शिव ॥१७॥
मेर्वादयोऽपि तिष्ठन्ति किं मया न विचालिताः ।
या त्वया लिखिता रेखा चक्ररूपा महेश्वर ॥ १८ ॥
तामुद्धृत्य ततो हन्मि त्वां नन्दिप्रमुखैः सह ।
बालत्वे निर्जितो ब्रह्मा तरसैव पुरा मया ॥ १९ ॥
निक्षिप्तो भगवान्विष्णुर्लीलया शतयोजनम् ।
इन्द्राद्या लोकपालाश्च बद्धाः कारागृहे स्थिताः ॥ २० ॥
दासीभूताः स्त्रियस्तेषां वर्तन्ते मद्गृहे शिव ।
दोर्भ्यां वियन्नदी रुद्धा क्रीडार्थं हिमवद्गिरौ ॥ २१ ॥
दिग्गजाश्च विनिक्षिप्ताः सिन्धौ वै रावणादयः ।
वडवाग्नेर्मुखे रुद्धे चैकार्णव इवाभवत् ॥ २२ ॥
तस्मान्न जानासि कथं शंभो मम पराक्रमम् ।
त्वामपि प्रापयाम्यद्य जित्वा कारागृहं प्रति ॥ २३ ॥
तस्य तद्वचनं श्रुत्वा दानवस्य महेश्वरः ।
नेत्राग्निलवभागेन चमूं तस्यादहत्क्षणात् ॥ २४ ॥
अक्षौहिणीनां साहस्रं लीलयैव महेश्वरः ।
कृत्वा तद्भस्मसाद्विप्रा जालंधरमथाब्रवीत् ॥ २५ ॥
**ईश्वर उवाच**–समयो यः कृतः पूर्वं लेखामुद्धरणं प्रति ।
कुरु दैत्य तथा शीघ्रं ततो मां जेतुमर्हसि ॥ २६ ॥
अथ शंभोर्वचः श्रुत्वा मदान्धो दैत्यपुङ्गवः ।
दोर्भ्यामास्फोट्य वेगेन लेखामुद्धर्तुमुद्यतः ॥ २७ ॥
सुदर्शनाख्यं यच्चक्रं कृच्छ्रेण महता द्विजाः ।
स्कन्धे वै स्थापयामास द्विधाभूते ततः क्षणात् ॥ २८ ॥

---

१ (क. ख. ग.) समर्थो य०। २(क. ख. ग. ज) ०च। लेखा०। ३ (क. ख. ग.) ०श्च समु०।
४ (घ. ङ. च.) ततः ऽ्रो०।

निपपात ततो दैत्यो मेघाचल इवापरः।
तस्य देहस्य रक्तेन संपूरितमभूज्जगत् ॥ २९ ॥
नियोगाद्देवदेवस्य तन्मांसं तस्य शोणितम्।
रक्तकुण्डमभूत्तत्र निरये पापकर्मणाम् ॥ ३० ॥
दृष्ट्वा जालंधरं[1] देवा निहतं शूलपाणिना।
मुमुचुः पुष्पवर्षाणि जय देवेति चाब्रुवन् ॥ ३१ ॥
देवाः स्वस्थानमापन्नाः समुद्राश्च वसुंधरा।
दिग्गजाः पर्वताः सर्वे हते तस्मिन्महासुरे ॥ ३२ ॥
जालंधरवधं यस्तु पठेद्वा शृणुयादपि।
श्रावयेद्वा द्विजान्भक्त्या ब्रह्मलोकं स गच्छति ॥३३॥१७२४॥

इति श्रीब्रह्मपुराणोपपुराणे श्रीसौरे सूतशौनकसंवादे जालंधरवधकथनं नाम सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

*सूत उवाच—चतुर्ष्वपि च वेदेषु पुराणेषु च सर्वशः।
श्रीमहेशात्परो देवो न समानोऽस्ति कश्चन ॥ १ ॥
ब्रह्मा विष्णुर्बलारातिः सर्वे यस्य वशे स्थिताः।
उत्पत्तिः सर्वदेवानां स एव ध्येय उच्यते ॥ २ ॥
नास्ति शंभोः परो धर्मो नास्त्यर्थः शंकरात्परः।
शिवादन्यत्सुखं नास्ति मोक्षो नैव हरात्परः ॥ ३ ॥
यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः।
तदा शिवमविज्ञाय दुःखस्यान्तो भविष्यति ॥ ४ ॥
स्रष्टृत्वं ब्रह्मणो येन ध्येयत्वं येन शार्ङ्गिणः।
विष्णुत्वं येन शक्रस्य तस्मादन्यः परो न हि ॥ ५ ॥

ऋषय ऊचुः—केचिल्लोका महेशानं त्यक्त्वा केशवकिंकराः।
तत्र किं कारणं सूत वद संशयनाशक ॥ ६ ॥
अन्तकाले स्मरन्त्येव प्रायेण गरुडध्वजम्।
विद्यमाने शिवे विष्णोः प्रभौ श्रीपार्वतीपतौ ॥ ७ ॥

* चतुर्ष्वपि च वेदेष्वित्यादि शिवनिन्दककारणमित्यन्तमध्यायत्रयं कखघङसंज्ञितपुस्तकेषु न दृश्यते। खसंज्ञितपुस्तके सप्तत्रिंशाध्यायसमाप्तिस्थले किंचिद्बहिर्लिखितमस्ति। तद्यथा—पूर्वत्राध्यायसमाप्तिस्थलव्यत्यासं कृत्वाऽग्रत्यमध्यायत्रयं मध्वाचार्यकथापरं वैष्णवैरपलपितमस्ति तत्पुस्तकान्तरेषु द्रष्टव्यम्—इति।

१ (घ. ङ.) ०रं दैत्यं नि०। २ (घ. ङ. छ.) ०तीश्वरे ॥७॥

सूत उवाच–यदा यदा प्रसन्नोऽभूद्भक्तिभावेन धूर्जटिः ।
विष्णुनाऽऽराधितो भक्त्या तदाऽसौ दत्तवान्वरान् ॥ ८ ॥
त्वत्तः परं प्रभुं नैव प्रायेण ज्ञास्यति स्फुटम् ।
विरलाः केचिदेतद्वै निष्ठां वेत्स्यन्ति तत्त्वतः ॥ ९ ॥
हेतुना तेन विप्रेन्द्राः शिवं जानन्ति केचन ।
प्रायेण विष्णुनामानि गृणन्ति वरदानतः ॥ १० ॥
विष्णोः स्मरणमात्रेण सर्वपापक्षयो भवेत् ।
शंभुप्रसाद एवैष नास्ति कार्या विचारणा ॥ ११ ॥
यः शंभुं तत्त्वतो वेत्ति स तु नारायणः स्वयम् ।
यस्तु नारायणं वेत्ति स शक्रो विबुधेश्वरः ॥ १२ ॥
य इन्द्रं वेत्ति देवेशं लोकपालो जलाधिपः ।
एवं सर्वाँल्लोकपालाञ्जानाति स इहामरः ॥ १३ ॥
देवाञ्जानाति यष्टव्यान्स ऋषिर्वेदवित्स्वयम् ।
ऋषीन्यो वेत्ति सम्यक्त्वात्स एव ब्राह्मणोत्तमः ॥ १४ ॥
सर्वदेवमयं विप्रं यो जानाति स वेदवित् ।
रहस्यं वेत्ति वेदस्य स एव हरवल्लभः ॥ १५ ॥
जन्मादिकारणं शंभुं विष्णुं ब्रह्मादिपूर्वजम् ।
न जानन्ति महामूर्खा विष्णुमायाविमोहिताः ॥ १६ ॥
आसीत्प्रतर्दनो नाम राजा परमधार्मिकः ।
सप्तद्वीपपतिः पृथ्वीप्रभुरेकः प्रतापवान् ॥ १७ ॥
शूरः पुण्यमतिर्भोगी दाता वेदार्थपालकः ।
रक्षिता सर्वसेतूनां ब्रह्मण्यो ब्राह्मणप्रियः ॥ १८ ॥
तस्य राज्ये सदा देवा गृह्णन्ति हविरुत्तमम् ।
न पाषण्डी न वा बौद्धस्तस्य राज्येऽभवज्जनः ॥ १९ ॥
कदाचित्स पुरीं त्यक्त्वा क्रीडार्थं निर्गतो बहिः ।
तदा ददर्श क्षपणं राजा विस्मयमागतः ॥ २० ॥
पृष्टं कस्त्वं कुतो यातः किं कार्यं च तवेप्सितम् ।
कुत्र यास्यसि तत्सर्वं किंजातीयो भवान्वद ॥ २१ ॥
क्षपणक उवाच–राजन्वणिगहं शान्तो यतिः शीलव्रते स्थितः ।
मदीयाश्चलसंलग्नाः सन्त्यत्र वणिजः परे ॥ २२ ॥
राजोवाच–को धर्मः किं नु तत्र त्वं ज्ञायते केन वक्ति कः ।
अयं पन्थाः कथं प्राप्तः कस्मात्त्वं प्रकटो भवान् ॥ २३ ॥

**क्षपणक उवाच**–अहिंसा परमो धर्मस्तत्तत्त्वं यत्तनोर्दमः ।
बुध्यते बौद्धजैनाभ्यां वक्ता तस्य जिनो मतः ॥ २४ ॥
वेदवेदाङ्गवेत्तारो याज्ञिका वैष्णवा द्विजाः ।
माहेश्वरा महापूज्या न व्यक्तोऽहं भयान्नृप ॥ २५ ॥
**सूत उवाच**–ततो राजा परां चिन्तां प्राप्तो दुःखितमानसः ।
धिग्राज्यं मम दुर्बुद्धेर्वेदबाह्योऽस्ति मत्पुरे ॥ २६ ॥
एतं हन्मि यदा पापं तदेतन्मानिनी प्रजा ।
कथयिष्यति शान्तात्मा हतो राज्ञा कुबुद्धिना ॥ २७ ॥
एतस्मिन्निहते किं स्याद्भवन्ति बहवस्तथा ।
दयाशब्दं पुरस्कृत्य ह्यधर्मो विचरिष्यति ॥ २८ ॥
वेदबाह्याः प्रजा राज्ञा शासितुं नैव शक्यते ।
तदा तत्पापभागी स्यादित्याह भगवान्मनुः ॥ २९ ॥
**सूत उवाच**–त्यक्त्वा राज्यं तपस्तेपे ततो राजा प्रतर्दनः ।
सावित्रीं मनसा ध्यात्वा नित्यमेकाग्रमानसः ॥ ३० ॥
ततः कतिपयाहोभिर्ब्रह्मा प्रत्यक्षतां गतः ।
महता तपसा तुष्ट इदं वचनमब्रवीत् ॥ ३१ ॥
**ब्रह्मोवाच**–पुत्र प्राप्तोऽस्मि संतोषं वरं वरय सुव्रत ।
कथं त्वं खिद्यसे चित्ते राज्यं त्यक्तं कुतस्त्वया ॥ ३२ ॥
**राजोवाच**–वेदः प्रमाणं वक्त्येव जानात्येव च यत्प्रजाः ।
शङ्कामात्रं भवेन्नैव वेदप्रामाण्यगोचरम् ॥ ३३ ॥
इति याचे वरं देव किमन्येन वरेण मे ।
याचे निष्कण्टकं राज्यं सप्तद्वीपावनीपतिः ॥ ३४ ॥
**सूत उवाच**–एवमस्त्विति संप्रोच्य ब्रह्माऽन्तर्ध्यानमाययौ ।
प्रतर्दनोऽपि राजर्षिः संतुष्टः पृथिवीपतिः ॥ ३५ ॥
ततः प्रभृति तद्राज्ये सर्वो धर्मो व्यवस्थितः ।
वेदवेदाङ्गवेत्तारो ब्राह्मणाः शंसितव्रताः ॥ ३६ ॥
अग्निहोत्राणि यज्ञाश्च यतयो ब्रह्मचारिणः ।
शैवा नानाविधाः पुण्या वैष्णवाः शुभलक्षणाः ॥ ३७ ॥
तस्य राज्ये महापुण्ये न पाषण्डी न हैतुकी ।
वर्णाश्रमाचारवतां क्रियाः सर्वास्तदाऽभवन् ॥ ३८ ॥

---

१ (घ. ङ.) [illegible]

उत्सवा विष्णुभक्तानां शिवपूजा गृहे गृहे ।
सर्वे देवान्मानयन्ति न कंचिद्द्वेष्टि मानवः ॥ ३९ ॥
तर्कवेदान्तमीमांसाव्याख्यानानि गृहे गृहे ।
वेदनिर्घोषवद्राज्यं यज्ञस्तम्भाः स्थले स्थले ॥ ४० ॥
अनेकभोगसंयुक्ता हृष्टाः पुष्टाः स्त्रियः सतीः ।
रक्षन्ति पतयः पुण्या यथा वृद्धपुरस्कृताः ॥ ४१ ॥
**सूत उवाच**-एवं बहुतिथे काले गते ये दैत्यदानवाः ।
पापिष्ठा हीनकर्माणो म्लेच्छास्तेऽपि दिवं गताः ॥ ४२ ॥
येषां तु संततिः शुद्धं वेदमार्गं हि मन्यते ।
ते सर्वे नरकान्मुक्त्वा प्राप्ता एवामरावतीम् ॥ ४३ ॥
सर्वत्र तुलसीवृन्दं सर्वत्र हरिपूजनम् ।
बिल्वदलैस्तु सर्वत्र पूज्यते गिरिजापतिः ॥ ४४ ॥
कथं तेषां तु पितरो नरके निवसन्ति हि ।
तस्मिन्राज्ये समागत्य किं कुर्युर्यमकिंकराः ॥ ४५ ॥
**सूत उवाच**-शृणुध्वमृषयः सर्वे यदासीत्परमाद्भुतम् ।
स्वर्गगामिषु सर्वेषु व्यापाररहिते यमे ॥ ४६ ॥
पूजिताः सर्वलोकेषु सर्वे देवा बभूविरे ।
तदाऽसौ धर्मराड्गत्वा शक्रलोकं महामनाः ॥ ४७ ॥
उवाच सर्वदेवानां पुरतः प्राञ्जलिः स्थितः ।
**यम उवाच**-चतुरशीतिलक्षाणां जीवानां या स्थितिः सदा ॥ ४८ ॥
तां नष्टामधुना वेद्मि यदि देवः प्रमाणवान् ।
यस्यां कीटादियोनौ यः स्थितो जीवोऽतिपापवान् ॥ ४९ ॥
नरके संयमिन्यां वा तत्पुत्रेण स उद्धृतः ।
श्राद्धदेवार्चनादीनि करोति श्रुतिनिश्चयः ॥ ५० ॥
**इन्द्र उवाच**-अस्माकं हीनजीवानां को विशेषो यदा श्रुतिः ।
प्रमाणयति तत्त्वेन वयं देवा यदाज्ञया ॥ ५१ ॥
पुरोहित तव प्रज्ञा शोभना प्रतिभाति मे ।
पूर्वं चार्वाकबौद्धादिमार्गाः संदर्शितास्त्वया ॥ ५२ ॥
तेन मार्गेण विभ्रान्ता वेदमार्गबहिष्कृताः ।
दैत्याश्च दानवाश्चैव तथा कुरु द्विजोत्तमाः ॥ ५३ ॥

गुरुरुवाच–न चार्वाको न वै बौद्धो न जैनो यवनोऽपि वा ।
कापालिकः कौलिको वा तस्मिन्राज्ये विशेत्कचित् ॥ ५४ ॥
वेदः प्रमाणमित्येव मन्यमानाः प्रजाः शुभाः ।
कथं सा चाल्यते तात न शक्यं हि शुभाऽधुना ॥ ५५ ॥
विधिदत्तवरस्याहमुच्छेत्तुं शक्तिमान्कथम् ।
इन्द्रादय ऊचुः–दैत्यानां दानवानां च दुर्दर्शानां भवो यदा ॥५६॥
तदा शुक्रः स्वयं तेषां कृपया सोद्यमो भवेत् ।
तस्मात्त्वं विप्रशार्दूल कस्मादस्मानुपेक्षसे ॥ ५७ ॥
असाध्यं तव किं मन्या वयं तच्छरणं गताः ।
अस्माकं दुर्जनाः सर्वे वेदकर्मरताः कृताः ॥ ५८ ॥
तेषां व्यामोहनाय त्वं कुरु यत्नं कृपानिधे ।
देवानां रक्षसां चैव दैत्यानां पापकर्मणाम् ॥ ५९ ॥
सूत उवाच–एवं ब्रुवत्सु देवेषु बृहस्पतिरुदारधीः ।
उपायं चिन्तयामास सृष्टेः संरक्षणाय च ॥ ६० ॥
गुरुरुवाच–शृण्वन्तु त्रिदशाः सर्वे ममोपायं वदाम्यहम् ।
देवः कश्चिद्यदि भवेत्कपटी वैष्णवः स्वयम् ॥ ६१ ॥
शङ्खचक्राङ्कितततनुस्तुलसीकाष्ठभूषितः ।
ऊर्ध्वपुण्ड्रं च बिभ्राणो हरिनामाक्षरं जपन् ॥ ६२ ॥
देवतामात्रनिन्दी च अकृत्वा मतिमीश्वरे ।
शिवद्वेष्टा महापापप्रेरकः शिवनिन्दकः ॥ ६३ ॥
दम्भेन यदि तद्राज्ये शिवनिन्दा कृता भवेत् ।
तदा तत्पूर्वजाः सर्वे नरकं यान्ति दारुणम् ॥ ६४ ॥
ततो देवेषु सर्वेषु न कश्चिदवदत्तथा ।
कथयन्ति स्म चान्योन्यं नैतत्कर्मास्ति सुन्दरम् ॥ ६५ ॥
कश्चाण्डालः शिवं ब्रूयात्साधारण्येन विष्णुना ।
यस्य प्रसादाद्वैकुण्ठः प्राप्तवानीदृशं पदम् ॥ ६६ ॥
सूत उवाच–ततः किंनरमाहूय प्रोवाचेदं शचीपतिः ।
याहि किंनर मायावी भूत्वा त्वं वैष्णवो भुवम् ॥ ६७ ॥

१ (ज.) ०थ सः ॥ ६० ॥ २ (घ्र. छ.) ०निन्दां च । ३ (घ. ङ. छ.) ०षु न कश्चिदवदत्तथा ॥ ...

तत्र गत्वा जनान्सर्वान्ब्रूहि कोऽस्ति शिवो महान् ।
एक एव महाविष्णुर्मान्यो ध्येयः कथंचन ॥ ६८ ॥
पूर्वं प्रच्छन्नरूपेण स्थित्वा मार्गं प्रदर्शय ।
शनैः शनैर्जना एवं भविष्यन्ति च हैतुकाः ॥ ६९ ॥
वेदः प्रमाणमित्येव वदितव्यं त्वया सदा ।
परं त्वेको महान्विष्णुः शिवस्तस्य च किंकरः ॥ ७० ॥
सूत उवाच–प्रेरितोऽसौ बलात्तेन भीतोऽगच्छच्छनैः शनैः ।
दाम्भिकं रूपमास्थाय यथा साधुं वदेज्जनः ॥ ७१ ॥
सर्ववैष्णवचिह्नानि धृत्वा भ्राम्यति तत्पुरे ।
शिष्यान्करोति तान्पूर्वं वदेन्मान्यो न शंकरः ॥ ७२ ॥
क्वचिद्वदति न ध्येयो न मुख्य इति च क्वचित् ।
क्वचिदुत्कृष्टजीवोऽयं क्वचिच्छ्रीविष्णुकिंकरः ॥ ७३ ॥
इति नानाविधा बुद्धिर्नराणां भेदिता यदा ।
तदा शिष्यैः परिवृतो राजगेहं विशत्यपि ॥ ७४ ॥
चालितो राजलोकोऽपि विरुद्धं नैव दृश्यते ।
विष्णुभक्तो महाञ्शान्तो वेदवेदाङ्गपारवान् ॥ ७५ ॥
उपायनान्यनेकानि हयांश्च स्यन्दनान्वसु ।
लोकाः सर्वे ददत्येव गुप्तं पापं न दृश्यते ॥ ७६ ॥
सूत उवाच–एकस्मिन्समये विप्रा एकादश्यामुपोषिताः ।
जनाः प्रातश्चक्रपाणिं नमस्कर्तुं गताः शुभाः ॥ ७७ ॥
तत्रोपविष्टः शिष्यैः स्वैर्वृतः स्वीयेन तेजसा ।
न कंचिन्मन्यते विप्रं यो भस्माङ्कितभालवान् ॥ ७८ ॥
एतस्मिन्नन्तरे राजा प्राप्तवाञ्श्रीप्रतर्दनः ।
वृतो बहुविधैर्विप्रैः कुशहस्तैः शुचिव्रतैः ॥ ७९ ॥
त्रिपुण्ड्रधारिणः केचिदूर्ध्वपुण्ड्रधरास्तथा ।
पठन्तः शिवसूक्तानि विष्णुसूक्तानि चापरे ॥ ८० ॥
एतैर्बहुविधैर्विप्रैर्वृतो राजोपविश्य सः ।
उवाच वचनं युक्तं कोमलाक्षरसंयुतम् ॥ ८१ ॥
स्वामिन्नागतवान्साक्षाद्भगवान्हरिपार्षदः ।
वेदं पठसि विष्णोश्च भक्तस्तद्वेषधार्यपि ॥ ८२ ॥

**वैष्णवाभास उवाच**–वेद एव परं श्रेयो वेदार्थादधिकं न हि ।
प्रमाणं वेद एवैको विष्णुवाक्श्रुतिरेव च ॥ ८३ ॥
राजन्वेदार्थविज्ञाने बहवो मोहिता जनाः ।
शिवपूजारताः सन्तो नानादैवतपूजकाः ॥ ८४ ॥
एको विष्णुर्न द्वितीयो ध्येयः किं त्वितरैः सुरैः ।
क्रूरं च क्रूरकर्माणं शंकरं मन्यते कथम् ॥ ८५ ॥
त्वदीया ब्राह्मणा एते ऊर्ध्वपुण्ड्राङ्किताः शुभाः ।
तान्दृष्ट्वा प्रीतिरत्यर्थं जायते नृपसत्तम ॥ ८६ ॥
एते त्रिपुण्ड्रभाला ये कररुद्राक्षमालिनः ।
पठन्तः शिवसूक्तानि दृष्ट्वा वज्रं पतेद्दिवः ॥ ८७ ॥
दर्भस्योपग्रहः कोऽयं किं वा भस्माङ्कधारणम् ।
रुद्राक्षा का च को रुद्रः कानि सूक्तानि तस्य च ॥ ८८ ॥
विष्णुरेकः परो ध्येयो नान्यो देवः कदाचन ।
तदीयायुधचिह्नानि पूज्यो वै वैष्णवः सदा ॥ ८९ ॥
**राजोवाच**–अनादिना प्रमाणेन वेदेन प्रोच्यते शिवः ।
विष्णोरप्यधिको विप्र संपूज्यो न कथं भवेत् ॥ ९० ॥
शिवादिषु पुराणेषु प्रोच्यते शंकरो महान् ।
सर्वासु स्मृतिषु ब्रह्मञ्शिवाचारेषु सर्वतः ॥ ९१ ॥
नानागमेषु पुण्येषु प्रोच्यते ह्यज ईश्वरः ।
कठोरं वाक्यमेतत्ते भाति चेतसि मेऽशनिः ॥ ९२ ॥
**वैष्णवाभास उवाच**–नैकाग्रमनसस्ते तु येऽर्चयन्तीह धूर्जटिम् ।
श्मशानवासी दिग्वासा ब्रह्मस्तकधृग्भवः ॥ ९३ ॥
सर्पहारः कथं सेव्यो विषधारी जटाधरः ।
तस्माद्विष्णुः सदा सेव्यः सुन्दरः कमलापतिः ॥ ९४ ॥
**राजोवाच**–नानारूपाणि रुद्रस्य के जानन्ति नराधमाः ।
त्वं वैष्णव इवाऽऽभासि वेदार्थं नैव वेत्सि रे ॥ ९५ ॥
**सूत उवाच**–चिन्तयित्वा ततो राजा विदुषो ब्राह्मणोत्तमान् ।
आहूय निर्णयं चास्य करिष्यामीति तत्त्वतः ॥ ९६ ॥१८२०॥

इति श्रीब्रह्मपुराणोपपुराणे श्रीसौरे सूतशौनकसंवादे शिवमहिमादि-
कथनं नामाष्टात्रिंशोऽध्यायः ॥ ३८ ॥

---

१ (घ. ङ.) ०ण ब्राह्मणो वा क०। २ (ज.) ०ङ्किभशाभा०। ३ (घ. ङ.) ०त्तमाः। भा०।

सूत उवाच–गृहं गत्वा स्थिरो भूत्वा यावदाहूयते(?) द्विजान् ।
तावदेव कलिः पापो ब्राह्मणेषु विवेश ह ॥ १ ॥
कश्चिद्राजानमाश्रित्य ब्रूते तादृशमेव हि ।
अन्योन्यामर्षयोगेन खण्डयन्ति परस्परम् ॥ २ ॥
मूकीभावाश्रिताः केचित्केचिद्याथार्थवादिनः ।
यो यथा वक्ति तत्तादृगित्थं केचिदथोचिरे ॥ ३ ॥
इति कोलाहले वृत्ते राजचेतसि निर्णये ।
जाते लोके नास्तिकतां बहवः प्रतिपेदिरे ॥ ४ ॥
राजा वेत्ति महामूर्खं न तु मायाविनं द्विजम् ।
लोके तु भ्रान्तिमापन्ने राजा चिन्तापरोऽभवत् ॥ ५ ॥
ईश्वरं हन्ति दुष्टात्मा वध्योऽयं मम शास्त्रतः ।
परं तु लोको ब्रह्मघ्नं मिथ्या मां तु वदिष्यति ॥ ६ ॥
सूत उवाच–एतस्मिन्समये प्राप्ते लोकपूर्वपितामहाः ।
स्वर्गाद्भ्रष्टा ह्यनेकानि नरकाणि प्रपेदिरे ॥ ७ ॥
येषां पुत्राश्च पौत्राश्च प्रतिपौत्रास्तथाऽपरे ।
मातामहादिवर्गाश्च सखिसंबन्धिबान्धवाः ॥ ८ ॥
शिवावगणनोद्भूतपातका यमलोकगाः ।
सुकृतं भस्मतां यातं मद्याद्गङ्गोदकं यथा ॥ ९ ॥
एतस्मिन्नेव काले तु कमलाहृदयंगमः ।
सुप्त आक्रन्दमकरोच्छोणितौघपरिप्लुतः ॥ १० ॥
लक्ष्मीर्दृष्ट्वाऽथ तद्रूपं विह्वलं भयविह्वला ।
प्राप्ताऽऽश्चर्यं महाघोरं रुरोद भृशदुःखिता ॥ ११ ॥
लक्ष्मीरुवाच–वेदान्तवेद्य पुरुषेश्वर देवदेव
त्रैलोक्यनाथ किमिदं त्वयि दृश्यतेऽद्य ।
आकारमात्ररहितः पुरुषः पुराण–
स्त्वय्येव विश्वमिह रज्जुभुजंगमात्रम् ॥ १२ ॥
शैलाः पतन्ति जलधिर्मरुतामुपैति
सूर्यादयो हतरुचः पृथिवी पराणुः ।
भूतानि चाच्युत विभो विलयं प्रयान्ति
[illegible] ॥ १३ ॥

**श्रीनारायण उवाच**-उक्तं त्वया तदपि लक्ष्मि तथैव किंतु
मत्स्वामिनोऽवगणना न हि शक्यते मे ।
कृत्वाऽपि पूज्यतममूर्तिमिमां गिरीशं
नो मन्यते तदिह वज्रसमं ममैव ॥ १४ ॥
**लक्ष्मीरुवाच**-सर्वात्मा सर्ववित्कर्ता वक्ता धर्ताऽव्ययः प्रभुः ।
त्वं साक्षी सर्वलोकानां त्वत्तः परतरोऽस्ति कः ॥ १५ ॥
**श्रीनारायण उवाच**-अस्ति सर्वं वरारोहे मयि तत्तथ्यमेव हि ।
श्रीमहेशवराल्लब्धं मदीयं न हि किंचन ॥ १६ ॥
एकः सृजति भूतानि मत्समानि कियन्त्यपि ।
तत्त्वं वेद्म्यहं देवि मदीयाः केचनापरे ॥ १७ ॥
वेदवेदाङ्गवेत्तॄणां सहस्राण्यग्रजन्मनाम् ।
हननान्मुच्यते जीवो न तु श्रीशिवहेलनात् ॥ १८ ॥
गुर्वङ्गनागमनकृत्सदा मद्यनिषेवकः ।
ब्राह्मणस्वर्णहारी च कदाचिन्मुच्यते जनः ॥ १९ ॥
स्त्रीघ्नो गोघ्नो नृपघ्नश्च तथा विश्वासघातकः ।
कृतघ्नो नास्तिको लुब्धः कदाचिन्मुच्यते जनः ॥ २० ॥
न तु श्रीरुद्रसामान्यदर्शी मुच्येत बन्धनात् ।
विरञ्चिविष्णुशक्रेभ्यः सर्वोत्कृष्टं न जायते ॥ २१ ॥
विष्णुना यदि वा तुल्यं मुच्यन्ते नैव जन्तवः ।
स्वामी मदीयः श्रीकण्ठस्तस्य दासोऽस्मि सर्वदा ॥ २२ ॥
**लक्ष्मीरुवाच**-गच्छामस्तत्र वैकुण्ठ यत्र स्वाम्यस्ति ते विभो ।
कैलासपर्वते रम्ये प्रणमामः सदाशिवम् ॥ २३ ॥
**सूत उवाच**-ततस्तौ गरुडारूढौ गत्वा कैलासपर्वतम् ।
नानाविधैः स्तोत्रपदैः संतुष्टं चक्रतुः क्षणात् ॥ २४ ॥
ततो ब्रह्मादयो देवाः सिद्धास्तत्राऽऽगता गिरौ ।
रुद्रः कौतूहलप्रेप्सुः सर्वैस्तैः परिवारितः ॥ २५ ॥
भवानीसहितस्तत्र गतो यत्र प्रतर्दनः ।
सर्वदेवविमानानां मध्ये तिष्ठति शंकरः ॥ २६ ॥
**श्रीमहेश उवाच**-कथयन्तु कथं ह्यत्र मिलिताः सर्वनिर्जराः ।
किं कार्यं किमपूर्वं वा राजा चिन्तातुरः कथम् ॥ २७ ॥

**देवा ऊचुः**–स्वामिन्प्रतर्दनो राजा विधिलब्धवरोऽभवत् ।
वेदमार्गप्रवक्ता च स्वयं तस्य प्रवर्तकः ॥ २८ ॥
सृष्टिरक्षार्थमस्माभिः कपटं कृतमीश्वर ।
सर्वधातुश्च भवतो हेलनं कारितं सुरैः ॥ २९ ॥
तत्क्षमस्व महादेव किंनरोऽयं प्रवर्तितः ।
कल्पितो वैष्णवोऽस्माभिस्तव निन्दापरायणः ॥ ३० ॥
**सूत उवाच**–एतस्मिन्नेव काले तु राजा वृत्तान्तमेयिवान् ।
तीव्रं खड्गं समादाय हतवान्किंनरं क्रुधा ॥ ३१ ॥
तत्पक्षपातिनो ये च तेषां शीर्षाणि कंधरात् ।
पृथक्कृतानि पश्चाद्या हता अश्वा अनेकशः ॥ ३२ ॥
न तं वारयते कश्चिद्राजानं पुण्यचेतसम् ।
महादेवेन शमितः क्रोधस्तस्य महात्मनः ॥ ३३ ॥
ततः कोलाहले शान्ते नन्दी कौतुकपूर्वकम् ।
युयोज हयशीर्षैं तच्छरीराणि पृथक्पृथक् ॥ ३४ ॥
शीर्षाणि हयगात्रैश्च सम्यक्संयोज्य बुद्धिमान् ।
उवाच वचनं तथ्यं देवसंसदि शुद्धगीः ॥ ३५ ॥
येन वक्त्रेण गिरिशो हेलितस्तन्मुखं हयः ।
मुद्राधारणगर्वेण हेलितस्तत्तनुर्हयः ॥ ३६ ॥
***ब्रह्मोवाच**–जातं तदधुना तथ्यं राजर्षौ राज्यकर्तरि ।
भविष्यं कथयिष्यामि तच्छृणुध्वं समाहिताः ॥ ३७ ॥
घोरे कलियुगे प्राप्ते म्लेच्छैर्व्याप्ते भुवस्तले ।
सर्वाचारपरिभ्रष्टा भविष्यन्ति नराधमाः ३८ ॥
तदान्ध्रीदेशमध्ये तु दाक्षिणात्यो भविष्यति ।
ब्राह्मणो दुर्भगः कश्चिद्विधवाब्राह्मणीरतः ॥ ३९ ॥
तस्य पापिष्ठविप्रस्य व्यभिचारात्सुतोऽनघः ।
भविष्यति गुणान्वेषी दैवादध्ययनोत्सुकः ॥ ४० ॥
पद्मपादुकमाचार्यं वरं वेदान्तवादिनम् ।
अद्वैतागमबोद्धारं प्रणम्य प्रार्थयिष्यति ॥ ४१ ॥

---

* जसंज्ञितपुस्तक एव ब्रह्मोवाचेति पदद्वयं विद्यते ।

---

१ ( घ. ङ. ) °र्वकः । य° । २ ( घ. ङ. छ. ) °शकाले त ।

विप्रोऽहं मधुशर्माऽस्मि स्वामिन्मां पाठय प्रभो ।
वेदान्तशास्त्रसर्वं च मह्यं पाठय भो गुरो ॥ ४२ ॥
आचार्यः करुणामूर्तिर्विनयेन परिप्लुतम् ।
करिष्यति च शिष्याणामग्रण्यं प्रेमवत्सलः ॥ ४३ ॥
ततो दिने दिने भक्तिं करिष्यति यथा यथा ।
गुरुर्भवति संतुष्टः सर्वां विद्यां प्रयच्छति ॥ ४४ ॥
*एकदा गुरुणा दृष्टः स्नानसन्ध्यादिकाः क्रियाः ।
अकृत्वा भोजनप्रेप्सुर्भविष्यति निराह्निकः ॥ ४५ ॥
पृष्टोऽसौ गुरुणा तथ्यं गोलको हि वदिष्यति ।
धर्मः साधारणो नाथ कृतोऽयं केन कुप्यसि ॥ ४६ ॥
ततो वक्ष्यत्यथाऽऽचार्यः कस्ते तातः प्रसूश्च का ।
ततो मे ब्राह्मणः स्वामिन्ब्राह्मणी च प्रसूर्मम ॥ ४७ ॥
वद मातामहः कस्ते येन प्राप्ता प्रसूस्तव ।
को विधिः कुत्र वा दत्ता तथ्यं शीघ्रं वदान्यथा ॥ ४८ ॥
भस्मसात्त्वां करिष्यामि हीनं ब्राह्मणवर्चसा ।
इत्येवं कथिते सर्वं कथयिष्यति तत्त्वतः ॥ ४९ ॥
शापं दास्यत्यथाऽऽचार्यः सिद्धान्तो मा स्फुरत्त्वयम् ।
सिद्धान्ते जडता तेऽस्तु परमद्वैतदर्शने ॥ ५० ॥
कथं त्वदीया सेवा मे निष्फला स्याद्वद प्रभो ।
इत्यादिबहुनिर्वेदं यदा त्वेष करिष्यति ॥ ५१ ॥
†पश्चाद्वदिष्यति स्वामी पूर्वपक्षोऽस्तु ते दृढः ।
सिद्धान्ते सर्वथैवाऽऽन्ध्यं मम वाक्यं न चान्यथा ॥ ५२ ॥
मधुना तेन शास्त्राणां पूर्वपक्षो विलोकितः ।
भविष्यति च वेदान्तमन्यथा कर्तुमुद्यतः ॥ ५३ ॥
यथा यथा कलेर्देवाः प्रचरः संभविष्यति ।
तथा तथाऽयमुन्मार्गः शिवद्वेष्टुर्भविष्यति ॥ ५४ ॥
पूर्वं तु द्राविडादेशात्कर्णाटकतिलङ्गयोः ।
शनैर्गोदावरीतीरे प्रसृतोऽयं भविष्यति ॥ ५५ ॥

---

* छसंज्ञितपुस्तकेऽयं श्लोको नास्ति ।

† घङखसंज्ञितपुस्तकेषु पश्चाद्वदि संभविष्यतीत्यन्तं सार्धश्लोकद्वयं नास्ति ।

---

१ ( घ. ङ. ) ष्यति ॥ ४६ ॥ २ ( ज. ) ०न प्राप्ता प्र० । ३ ( ङ. ) सर्वे कृ०।

पूर्णे कलियुगे प्राप्त आर्यावर्ते चलिष्यति ।
मायावादमसच्छास्त्रं वदिष्यन्ति नराधमाः ॥ ५६ ॥
तेषां दर्शनमात्रेण सचैलं स्नानमाचरेत् ।
भद्रात्वं च यथा विष्टे राहोः स्वर्भानुता यथा ॥ ५७ ॥
हरित्वं च यथाऽनेके तथैते तत्त्ववादिनः ।
योगनिन्दापरा नित्यमग्निहोत्रस्य निन्दकाः ॥ ५८ ॥
वेदान्तसममित्याहुः पुराणानि च ये नराः ।
केवलं वेषमात्रेण नरा नरकगामिनः ॥ ५९ ॥
संभाषणे कृते येषां पतेच्च ब्रह्मवर्चसः ।
वरं बौद्धस्तथा जैनः कापालिकमतोऽपि वा ॥ ६० ॥
व्यक्तं वदति वेदानामप्रामाण्यं तु तैः किमु ।
वेदप्रामाण्यवत्कृत्वाऽभिमानी न च वैदिकः ॥ ६१ ॥
ईश्वरं वचनाद्वक्ति परं चानीश्वरः खलः ।
सूत उवाच—एवं जाते ततः सर्वे यथाऽऽगतमितो गताः ।
प्रतर्दनोऽपि राजर्षिः कृत्वा राज्यमकण्टकम् ॥ ६२ ॥
देहान्ते मुक्तिमापन्नः परामद्वैतलक्षणाम् ।
ततः परं भविष्यन्ति तस्य शिष्या अनेकशः ॥ ६३ ॥
संन्यासिवेषमात्रेण कुर्वाणा जीविकां निजाम् ।
राजसेवां प्रकुर्वाणाः प्रच्छन्नाः कौलिका अपि ॥ ६४ ॥
अगम्यागमने सक्ता अभक्ष्यस्य च भक्षणे ।
अपेयनिरताः केचिन्नानाभोगसमाकुलाः ॥ ६५ ॥
यानारूढाः सदा राजसेवायां तत्परा अपि ।
अद्वैतनिन्दानिरताः प्रच्छन्नग्रन्थगौरवाः ॥ ६६ ॥
अन्यदर्शनसिद्धान्तं नैव जानन्ति तत्त्वतः ।
तत्र दोषस्य बुद्ध्या वै पठिष्यन्ति कलौ युगे ॥ ६७ ॥
अन्यदैवतनामानि यदि हेयानि तत्कथम् ।
वेदं पठन्ति पापिष्ठाः कथं तर्कं वदन्ति हि ॥ ६८ ॥
मीमांसाशास्त्रसद्ग्रन्थानालोक्य च पुनः पुनः ।
पूर्वपक्षं च सर्वेषां ग्रहीष्यन्ति समत्सराः ॥ ६९ ॥

---

१ (ज.) °र्कं पठन्ति ।

स्वकीयं न वदिष्यन्ति यतो नास्ति प्रमाकरम् ।
हंसान्परमहंसांश्च निन्दिष्यन्ति च जारजाः ॥ ७० ॥
जातमात्रं नरं कंचिन्मुण्डयित्वा मठाधिपम् ।
काषायवस्त्रमात्रेण करिष्यन्ति नराधमाः ॥ ७१ ॥
माठापत्यं च सेवा च धनसंग्रह एव च ।
दासीगमनमीर्ष्या च पञ्चधा तत्त्ववादिनः ॥ ७२ ॥
संसारस्तत्त्वमित्येव परं ते तत्त्ववादिनः ।
मायाविलसितं विश्वमिति मायैकवादिनः ॥ ७३ ॥
शुद्धं तत्त्वं न जानन्ति विश्वं तत्त्वं वदन्ति च ।
शब्दमात्रेण ते जाताः कलौ हा तत्त्ववादिनः ॥ ७४ ॥
भविष्यति यदा विप्राः पापानां प्रभवः कलौ ।
तथा तथा भविष्यन्ति ह्युदीच्यां दम्भवैष्णवाः ॥ ७५ ॥
शिवसामान्यवक्तारं शिवसामान्यदर्शिनम् ।
दृष्ट्वा स्नायात्सचैलः सञ्शिवसामान्यसङ्गिनम् ॥ ७६ ॥
मधुदर्शितमार्गेण पापिष्ठा वैष्णवाः कलौ ।
भविष्यन्ति ततो म्लेच्छाः शूद्रा यूथबहिष्कृताः ॥ ७७ ॥
तस्माच्छृणुध्वं विप्रेन्द्रा माहात्म्यं पार्वतीपतेः ।
भक्तिं तस्य सदा कर्तुमुद्यता भवत ध्रुवम् ॥ ७८ ॥ १८९८ ॥

इति श्रीब्रह्मपुराणोपपुराणे श्रीसौरे सूतशौनकसंवादे कलिप्रवेशादि-
कथनं नामोनचत्वारिंशोऽध्यायः ॥ ३९ ॥

**ऋषय ऊचुः**-सूत भद्रं समाचक्ष्व सेवको यस्य माधवः ।
श्रीमहेशस्य विष्णोश्च तुल्यत्वं ब्रुवते कथम् ॥ १ ॥
ब्रुवन्ति तुल्यतां केचिद्वैपरीत्येन केचन ।
एकत्वं केचिदीशेन केशवस्य वदन्ति हि ॥ २ ॥
अत्र सिद्धान्तमर्यादां ब्रूहि तत्त्वेन सूतज ।
अबाधा येन चास्माकं संशयो विनिवर्तते ॥ ३ ॥

**सूत उवाच**-शृण्वन्तु ऋषयः सर्वे श्रुतिसिद्धान्तमुत्तमम् ।
महेशान्न परं तत्त्वं सर्ववेदेषु गीयते ॥ ४ ॥
वैकुण्ठप्रभृतीनां तु महेशकृपया पुनः ।
महेशस्य च दासोऽयं विष्णुस्तेनानुकम्पितः ॥ ५ ॥

---

१ ( ग. ङ. ) ०रतत्त्व०। २ ( ज. ) ०न्ति मे। श०।

श्रुतिस्मृतिपुराणानां सिद्धान्तोऽयं यथाऽर्थतः ।
इन्द्रोपेन्द्रादयः सर्वे महेशस्यैव किंकराः ॥ ६ ॥
वेदान्तवेद्यमीशानं पार्वतीरमणं प्रभुम् ।
यो जानाति स वैकुण्ठो दुःखहा सर्वदेहिनाम् ॥ ७ ॥
वैकुण्ठं मन्यते सम्यगीशानं स पुरंदरः ।
य इन्द्रं मन्यते सर्वस्वामिनं स ऋषिर्मतः ॥ ८ ॥
स्वर्गलोकं समाप्नोति मुन्याज्ञाप्रतिपालकः ।
अद्वैतं शिवमीशानमज्ञात्वा नैव मुच्यते ॥ ९ ॥
घोरे कलियुगे प्राप्ते श्रीशंकरपराङ्मुखाः ।
भविष्यन्ति नरास्तथ्यमिति द्वैपायनोऽब्रवीत् ॥ १० ॥
रुद्रक्रोधाग्निनिर्दग्धे मन्मथे तस्य भार्यया ।
रत्या विलपिते तस्य सखायोऽप्यतिदुःखिताः ॥ ११ ॥
वसन्तादय आगत्य तामूचुः किं विधीयते ।
सर्वलोकेशितुः शंभोर्वराका वैरवारणे ॥ १२ ॥

**रतिरुवाच**—मन्यते घातकः सर्वैर्लोकेऽपूज्यो भवेदयम् ।
तत्र विघ्नः प्रकर्तव्यो येन केनापि हेतुना ॥ १३ ॥
अस्यापकीर्तिर्वक्तव्या न चलेद्यदि किंचन ।
तेन मे दुःखशान्तिः स्यात्किंचिन्मात्रं न चान्यथा ॥ १४ ॥

**वसन्तादय उचुः**—चतुर्दशसु विद्यासु गीयते चन्द्रशेखरः ।
वेदान्ता यं च गायन्ति मुनयः शंसितव्रताः ॥ १५ ॥
ब्रह्माद्या देवताः सर्वा इन्द्रोपेन्द्रादयस्तथा ।
न्यूनतां तस्य यो ब्रूते कर्मचाण्डाल उच्यते ॥ १६ ॥
तेन तुल्यो यदा विष्णुर्ब्रह्मा वा यदि गेयते ।
षष्टिवर्षसहस्राणि विष्ठायां जायते कृमिः ॥ १७ ॥
तुल्यता यदि नो शक्या न्यूनतायास्तु का कथा ।
मित्रस्याऽऽनृण्यमिच्छामः संकटं प्रतिभाति नः ॥ १८ ॥

**सूत उवाच**—विचार्यैवं तदा सर्वे महामोहपुरःसराः ।
तपस्तेपुर्महारौद्रं सर्वलोकभयंकरम् ॥ १९ ॥
कदाचिद्भगवान्ब्रह्मा प्रादुरासीद्दयानिधिः ।
मोहो दम्भस्तथा क्रोधो लोभस्ते सेवकाः कलेः ॥ २० ॥

---

१ (घ. ङ. छ.) न प्रेक्षति कि०। २ (ख. ङ.) गायते।

पञ्चमो हेतुवादश्च मधुना सर्वं आश्रिताः।
तानुवाच ततो ब्रह्मा वृणीध्वं मनसेप्सितम् ॥ २१ ॥
यथा वाणी च भवतां तथाऽहं दातुमुद्यतः।
**मोहाद्या ऊचुः**—अस्माकं परमं मित्रं कंदर्पो नाशितः प्रभो ॥२२॥
महादेवेन तेनामी आनृण्यं कर्तुमुद्यताः।
भविष्यामो वयं तात रुद्रपूजाभिनिन्दकाः ॥ २३ ॥
यथा न लभते पूजामस्मत्तश्चन्द्रशेखरः।
**ब्रह्मोवाच**—अधुना न भवेदेवं भविष्यत्यथ तच्चिरम् ॥ २४ ॥
भविष्याम इति प्रोक्तं भवत्तो नान्यथा क्वचित्।
ये भवद्वशगा लोकास्तेभ्यः पूजा न धूर्जटेः ॥ २५ ॥
प्रार्थितोऽयं वरो दत्तो यथेष्टं कर्तुमर्हथ ॥ २६ ॥
**सूत उवाच**—इत्युक्त्वा तानथो ब्रह्मा तत्रैवान्तरधीयत।
सर्वे ते मन्त्रयांचक्रुः कलिना सह दुःखिताः ॥ २७ ॥
**कलिरुवाच**—भवद्भिरधुना नोक्तं भविष्याम इतीरितम्।
ततो मत्समये प्राप्ते सर्वमेव भविष्यति ॥ २८ ॥
अस्मत्त इति यत्प्रोक्तं तेन चास्मद्वशे स्थिताः।
निन्दाकरा भविष्यन्ति नास्मान्यो मन्यते न सः ॥ २९ ॥
लोभमोहादिसंयुक्ताः प्राप्ते च मयि दारुणे।
हेतुवादं पुरस्कृत्य शिवभक्तिपराङ्मुखाः ॥ ३० ॥
**सूत उवाच**—ततः कलियुगे प्राप्ते सर्वधर्मविवर्जिते।
म्लेच्छैर्ब्राह्मणधेनूनां विध्वंसनकरे खरे ॥ ३१ ॥
अस्वाध्यायवषट्कारे जैनबौद्धादिसंकुले।
ब्राह्मणे म्लेच्छमार्गस्थे शूद्रे ब्राह्मणघातिनि ॥ ३२ ॥
तदा वसन्तः कर्णाटतिलङ्गादिकदूषकः।
मधुनामा च विधवाक्षेत्रे विप्राद्भविष्यति ॥ ३३ ॥
गोलकः स तु पापिष्ठः पद्मपादुकमीश्वरम्।
वेदान्तव्याख्यानरतं शिष्यत्वेनार्चयिष्यति ॥ ३४ ॥
शास्त्रं पूर्णं ततोऽधीत्य स्थित आह्निकवर्जितः।
किमग्निहोत्रं को यागो हेतुमेवं करिष्यति ॥ ३५ ॥

१ (घ. ङ.) ०र्वेषु म०। २ (घ. ङ.) ०नवृत्ता०। ३ (घ.) शूद्रा ब्रा०। ४ (घ.) ०ति-नः ॥ ३२ ॥

गुरुराकर्ण्य तद्वाक्यं ब्राह्मणो न भवेदयम् ।
इति निश्चित्य तं दुष्टं वक्ष्यति श्रुततद्वचाः ॥ ३६ ॥
**गुरुरुवाच**–को वर्णस्तव मे ब्रूहि यथार्थं वेददूषक ।
कर्मब्रह्मोद्भवद्वेष्टा नोत्पत्तिर्ब्राह्मणात्तव ॥ ३७ ॥
**मधुरुवाच**–ब्राह्मणादहमुत्पन्नो ब्राह्मण्यां च न संशयः ।
सत्यं वदामि नो मिथ्या कथं मां पश्यसे गुरो ॥ ३८ ॥
**गुरुरुवाच**–तन्माता केन दत्ता रे कस्य पुत्री कदा कथम् ।
कस्मै दत्ता च विधिना केन तद्ब्रूहि मा चिरम् ॥ ३९ ॥
**मधुरुवाच**–विधवा जननी नाथ ब्राह्मणेन तपस्विना ।
गर्भिणी समभूत्तस्मादयं देहस्ततोऽभवत् ॥ ४० ॥
**गुरुरुवाच**–कपटेन यतः शास्त्रं मत्तोऽधीतं दुरात्मना ।
तेन सिद्धान्तमर्यादा कदा चिन्मा स्फुरत्वियम् ॥ ४१ ॥
**मधुरुवाच**–भविष्यति महाभाग वचनं तव नान्यथा ।
पूर्वपक्षो मम हृदि प्रादुर्भवतु निश्चलः ॥ ४२ ॥
**गुरुरुवाच**–अन्धता तव सिद्धान्ते पूर्वपक्षे च पाटवम् ।
भवत्वेव परं त्वेकं पापाः शिष्या भवन्तु ते ॥ ४३ ॥
मोहात्सिद्धान्तरहिता लोभात्ते नृपसेवकाः ।
क्रोधात्कठिनवक्तारो दम्भाद्वेषेण सुन्दराः ॥ ४४ ॥
हेतुवादेन[1] शास्त्राणि सर्वाणि न विदन्ति ते ।
निरयेष्वेव घोरेषु गमिष्यन्त्यचिराच्चिरम् ॥ ४५ ॥
**सूत उवाच**–मधुनामा ततः प्राप्य शापं तं दुष्टबुद्धिमान् ।
बादरायणसूत्राणां व्याख्यानं स करिष्यति ॥ ४६ ॥
मध्वाचार्यस्ततो भावाद्दाक्षिणात्यो महान्कलौ ।
तच्छिष्याः प्रतिशिष्याश्च नाऽऽर्यावर्ते न चोत्कले ॥ ४७ ॥
न गौडे न च गङ्गायास्तीरे गोदावरीतटे ।
नार्बुदारण्यमध्ये च तत्प्रचारो भविष्यति ॥ ४८ ॥
यथा यथा कलेर्घोरः प्रचारो हि भविष्यति ।
तथा तथा महाराष्ट्रे[2] हैतुका विरलाः क्वचित् ॥ ४९ ॥
ततोऽतिदुष्टसमये महाम्लेच्छै[3]स्तिरस्कृते ।
प्रच्छन्नः कुत्रचित्पापी प्रचारं हि विधास्यति ॥ ५० ॥

---

१ (छ. ज.) ०न सर्वाणि शास्त्राणि न । २ (घ ङ.) ०ष्ट्रे हैतु० । ३ (ङ. छ.) ०म्लेच्छतिर०

पञ्चवर्षस्तु संन्यासी पठित्वा दुष्टबुद्धिमान् ।
शिष्योपशिष्यसंयुक्तो हेतुवादं करिष्यति ॥ ५१ ॥
तत्त्वं संसार इत्येव न बाध्यः सत्य एव हि ।
वदत्यतस्तत्त्ववादी मिथ्यावादी स उच्यते ॥ ५२ ॥
मिथ्याभूतः प्रपञ्चोऽयं मया निर्मित इष्यते ।
मायावादिन इत्येते वस्तुतस्तत्त्ववादिनः ॥ ५३ ॥
सच्छास्त्रं जैमिनीयं तु कर्मकाण्डप्रवर्तकम् ।
गौतमीयं तु सच्छास्त्रमीश्वरप्रतिपादकम् ॥ ५४ ॥
पुंप्रकृत्योर्विवेकस्य बोधकं कापिलं मतम् ।
तथा वैशेषिकं शास्त्रमीश्वरप्रतिपादकम् ॥ ५५ ॥
पातञ्जलं योगशास्त्रं शैवं तच्छास्त्रमिष्यते ।
वेदान्तशास्त्रमूर्धन्यमद्वैतं यच्च बोधयेत् ॥ ५६ ॥
वेदाः सर्वे षडङ्गास्तु पुराणानीतिहासकः ।
स्मृतिश्चोपपुराणानि तथोपस्मृतयः शुभाः ॥ ५७ ॥
अन्योन्यं सर्वविद्यानां प्रामाण्यमधिकारतः ।
तात्पर्यं च पुमर्थेषु सर्वाण्येवं जगुः किल ॥ ५८ ॥
किंचिद्विरोधे सत्येव न विरोधोऽस्ति तत्त्वतः ।
मन्यन्ते श्रीमहेशानं सर्वाण्येव परात्परम् ॥ ५९ ॥
पापिष्ठा नैव मन्यन्ते वेदमार्गबहिष्कृताः ।
आचार्यं मधुनामानं वदन्तो विधवासुतम् ॥ ६० ॥
प्रच्छन्नोऽसौ महादुष्टश्चार्वाको मधुसंज्ञकः ।
भविष्यन्ति कलौ विप्राः शिवनिन्दाप्रवर्तकः ॥ ६१ ॥
मोहात्सिद्धान्तबाह्यत्वं क्रोधाच्छास्त्रनिषेधनम् ।
लोभेन नृपतेः सेवा दम्भादन्यप्रतारणम् ॥ ६२ ॥
गणिकामैथुनं कामाद्धेतुवादेन वादिता ।
भविष्यन्ति कलौ विप्राः षोढेयं तत्त्ववादिता ॥ ६३ ॥
पञ्चवर्षं यतिं कृत्वा क्रमेणाऽऽदाय बालकम् ।
माठापत्यं विधास्यन्ति द्रव्यलोभेन नास्तिकाः ॥ ६४ ॥
पारंपर्यं मठस्यैव रक्षिष्यन्त्यभिरागिणः ।
भोगासक्ताश्च पापिष्ठा दासीगमनकारिणः ॥ ६५ ॥

---

१ (घ. ङ.) तत्त्वसं०।

नाम्ना संन्यासिनस्तीर्थे यानारूढाःससेवकाः ।
नरवाहनमारूढाः शिखासूत्रबहिष्कृताः ॥ ६६ ॥
तत्पक्षपातिनो मूढा गृहस्थाः शिवनिन्दकाः ।
मिथ्या वैष्णवमानेन ग्रस्ता निरयगामिनः ॥ ६७ ॥
वैष्णवा वेषमात्रेण तन्तुमात्रेण वाडवाः ।
वादिनः क्रोधमात्रेण विद्वांसो हेतुवादतः ॥ ६८ ॥
पठिष्यन्ति च शास्त्राणि केचिद्दूषणसिद्धये ।
स्वकीयं गोपयिष्यन्ति परकीयेन पण्डिताः ॥ ६९ ॥
**सूत उवाच**–महामोहादयः सर्वे रतिमाश्वास्य भामिनीम् ।
प्रोचुश्च श्लक्ष्णया वाचा तद्दुःखविनिवारकाः ॥ ७० ॥
**मोहादय ऊचुः**–रते मा कुरु संतापमहं मोहः कलेः सखा ।
क्रोधः पत्युः परो बन्धुर्लोभमोहौ च देवरौ ॥ ७१ ॥
प्राप्ते कलियुगे पूर्णे मोहलोभादयो वयम् ।
वसन्तं मधुनामानमवतीर्णं च दक्षिणे ॥ ७२ ॥
ममाऽऽश्रित्य ततो हेतुवादं कुटिलबुद्धयः ।
करिष्यामो यथा शक्यं शिवपूजानिवारणम् ॥ ७३ ॥
**सूत उवाच**–इति ते रतिमाश्वास्य यथाऽऽगतमितो गताः ।
इति सर्वं समाख्यातं शिवनिन्दककारणम् ॥ ७४ ॥ १९७२ ॥
इति श्रीब्रह्मपुराणोपपुराणे श्रीसौरे सूतशौनकसंवादे महेशविष्णुतुल्यत्वकारणादिकथनं नाम चत्वारिंशोऽध्यायः ॥ ४० ॥

**ऋषय ऊचुः**–सुदर्शनाख्यं यच्चक्रं लब्धवांस्तत्कथं हरिः ।
महादेवाद्भगवतः सूत तद्वक्तुमर्हसि ॥ १ ॥
**सूत उवाच**–देवासुराणामभवत्संग्रामोऽद्भुतदर्शनः ।
देवा विनिर्जिता दैत्यैर्विष्णुं शरणमागताः ॥ २ ॥
स्तुत्वा तं विविधैः स्तोत्रैः प्रणम्य पुरतः स्थिताः ।
भयभीताश्च ते सर्वे क्षताङ्गाः क्लेशिता भृशम् ॥ ३ ॥
तान्दृष्ट्वा प्राह भगवान्देवदेवो जनार्दनः ।
किमर्थमागता देवा वक्तुमर्हथ सांप्रतम् ॥ ४ ॥
वचः श्रुत्वा हरेर्देवाः प्रणम्योचुः सुरोत्तमाः ।
निर्जिता दानवैः सर्वे शरणं त्वामिहाऽऽगताः ॥ ५ ॥

गतिस्त्वमेव देवानां त्राता त्वं पुरुषोत्तम।
हन्तुमर्हसि ताञ्शीघ्रमवध्यान्वारिजेक्षण ॥ ६ ॥
जालंधरवधार्थाय यच्चक्रं शूलपाणिनः।
महादेवाद्वराल्लब्धं जहि तेन महाबलान् ॥ ७ ॥
तेषां तद्वचनं श्रुत्वा भगवान्वारिजेक्षणः।
अहं देवास्तथा नूनं करिष्यामीति सुव्रताः ॥ ८ ॥
हिमवत्पर्वतं गत्वा पूजयामास शंकरम्।
लिङ्गं तत्र प्रतिष्ठाप्य स्नाप्य गन्धोदकैः शुभैः ॥ ९ ॥
त्वरिताख्येन रुद्रेण संपूज्य च महेश्वरम्।
ततो नाम्नां सहस्रेण तुष्टाव परमेश्वरम् ॥ १० ॥
*प्रतिनाम च पद्मानि तैरिष्ट्वा वृषभध्वजम्।
भवाद्यैर्नामभिर्भक्त्या स्तोतुं समुपचक्रमे ॥ ११ ॥

**विष्णुरुवाच**-भवः शिवो हरो रुद्रः पुष्कलो मुद्गलोचनः।
अग्रगण्यः सदाचारः सर्वः शंभुर्महेश्वरः ॥ १२ ॥
ईश्वरः स्थाणुरीशानः सहस्राक्षः सहस्रपात्।
वरीयान्वरदो वन्द्यः शंकरः परमेश्वरः ॥ १३ ॥
गङ्गाधरः शूलधरः परार्थैकप्रयोजकः।
सर्वज्ञः सर्वदेवादिर्गिरिधन्वा[२] जटाधरः ॥ १४ ॥
चन्द्रापीडश्चन्द्रमौलिर्वेधा विश्वामरेश्वरः।
वेदान्तसारसंदोहः कपाली नीललोहितः ॥ १५ ॥
ध्यानाहारोऽपरिच्छेद्यो गौरीभर्ता गणेश्वरः।
अष्टमूर्तिर्विश्वमूर्तिस्त्रिवर्गः स्वर्गसाधनः ॥ १६ ॥
ज्ञानगम्यो दृढप्रज्ञो देवदेवस्त्रिलोचनः।
वामदेवो महादेवः पटुः परिवृढो दृढः ॥ १७ ॥
विश्वरूपो विरूपाक्षो वागीशः श्रुतिमन्तगः।
सर्वप्रणवसंवादी वृषाङ्को वृषवाहनः ॥ १८ ॥
ईशः पिनाकी खट्वाङ्गी चित्रवेषश्चिरंतनः।
मनोमयो महायोगी स्थिरो ब्रह्माण्डधूर्जटी ॥ १९ ॥

---

* घङसंज्ञितपुस्तकयोरेष श्लोको न विद्यते।

---

१ (ग. ङ. च. ञ.) ०गम्यः स०। २ (घ. ङ. छ. ज.) ०न्त्रागदाध०।

कालकालः कृत्तिवासाः सुभगः प्रणवात्मकः ।
नागचूडः सुचक्षुष्यो दुर्वासाः पुरशासनः ॥ २० ॥
दृगायुधः स्कन्दगुरुः परमेष्ठी परायणः ।
अनादिमध्यनिधनो गिरिशो गिरिजाधवः ॥ २१ ॥
कुबेरबन्धुः श्रीकण्ठो लोकवन्द्योत्तमो मृदुः ।
सामान्यो देवको दण्डी नीलकण्ठः परश्वधी ॥ २२ ॥
विशालाक्षो महाव्याधः सुरेशः सूर्यतापनः ।
धर्मधामा क्षमाक्षेत्रं भगवान्भगनेत्रहा ॥ २३ ॥
उग्रः पशुपतिस्तार्क्ष्यः प्रियभक्तः प्रियंवदः ।
दाता दयाकरो दक्षः कपर्दी कामशासनः ॥ २४ ॥ १०० ॥
श्मशाननिलयस्तिष्यः श्मशानस्थो महेश्वरः ।
लोककर्ता भूतपतिर्महाकर्ता महौषधिः ॥ २५ ॥
उत्तरो गोपतिर्गोप्ता ज्ञानगम्यः पुरातनः ।
नीतिः सुनीतिः शुद्धात्मा सोमः सोमरतः सुधीः ॥ २६ ॥
सोमपोऽमृतपः सौम्यो महानीतिर्महास्मृतिः ।
अजातशत्रुरालोक्यः संभाव्यो हव्यवाहनः ॥ २७ ॥
लोककारो वेदकारः सूत्रकारः सनातनः ।
महर्षिः कपिलाचार्यो विश्वदीप्तिर्विलोचनः ॥ २८ ॥
पिनाकपाणिर्भूदेवः स्वस्तिकृत्स्वस्तिदः सुधा ।
धात्रीधामा धामकरः सर्वगः सर्वगोचरः ॥ २९ ॥
ब्रह्मसृग्विश्वसृक्सर्गः कर्णिकारः प्रियः कविः ।
शाखो विशाखो गोशाखः शिवो भिषगनुत्तमः ॥ ३० ॥
गङ्गाप्लवोदको भव्यः पुष्कलः स्थपतिः स्थितः ।
विजितात्मा विधेयात्मा भूतवाहनसारथिः ॥ ३१ ॥
सगणो गणकायश्च सुकीर्तिश्छिन्नसंशयः ।
कामदेवः कामकालो भस्मोद्धूलितविग्रहः ॥ ३२ ॥
भस्मप्रियो भस्मशायी कामी कान्तः कृतागमः ।
समावृत्तो निवृत्तात्मा धर्मपुञ्जः सदाशिवः ॥ ३३ ॥

---

१ ( घ. ङ. छ. ज. ) सुखी ॥२६॥ २ ( घ. ङ. छ. ज. ) अज्ञात०। ३ ( क. ख. ग. झ. ) ०स्तिदः स्वस्तिकृत्सुधा । ४ ( क. ख. ग. ज. झ. ) ०र्वेदः स०। ५ ( घ. ङ. छ. ) विजेया०। ६ ( घ. ङ. छ. ) भस्मधलि०।

अकल्मषश्चतुर्बाहुः सर्वावासो दुरासदः ।
दुर्लभो दुर्गमो दुर्गः सर्वायुधविशारदः ॥ ३४ ॥
अध्यात्मयोगनिलयः सुतन्तुस्तन्तुवर्धनः ।
शुभाङ्गो योगसारङ्गो जगदीशो जनार्दनः ॥ ३५ ॥
भस्मशुद्धिकरो मेरुस्तेजस्वी शुद्धविग्रहः ॥ २०० ॥
हिरण्यरेतास्तरणिर्मरीचिर्महिमालयः ॥ ३६ ॥
महाह्रदो महागर्तः सिद्धवृन्दारवन्दितः ।
व्याघ्रचर्मधरो व्याली महाभूतो महानिधिः ॥ ३७ ॥
*अमृतात्माऽमृतवपुः पञ्चयज्ञः प्रभञ्जनः ।
पञ्चविंशतितत्त्वस्थः पारिजातः परापरः ॥ ३८ ॥
सुलभः सुव्रतः शूरो वाग्मयैकनिधिर्निधिः ।
वर्णाश्रमगुरुर्वर्णी शत्रुजिच्छत्रुतापनः ॥ ३९ ॥
आश्रमः क्षपणः क्षामो ज्ञानवानचलश्चलः ।
प्रमाणभूतो दुर्ज्ञेयः सुपर्णो वायुवाहनः ॥ ४० ॥
धनुर्धरो धनुर्वेदो गुणराशिर्गुणाकरः ।
अनन्तदृष्टिरानन्दो दण्डो दमयिता दमः ॥ ४१ ॥
अविवाद्यो महाकायो विश्वकर्मा विशारदः ।
वीतरागो विनीतात्मा तपस्वी भूतवाहनः ॥ ४२ ॥
उन्मत्तवेषः प्रच्छन्नो जितकामो जितप्रियः ।
कल्याणप्रकृतिः कल्पः सर्वलोकप्रजापतिः ॥ ४३ ॥
तपस्वी तारको धीमान्प्रधानप्रभुरव्ययः ।
लोकपालोऽन्तर्हितात्मा कल्पादिः कमलेक्षणः ॥ ४४ ॥
वेदशास्त्रार्थतत्त्वज्ञो नियमो नियमाश्रयः ।
राहुः सूर्यः शनिः केतुर्विरामो विद्रुमच्छविः ॥ ४५ ॥
भक्तिगम्यः परं ब्रह्म मृगबाणार्पणोऽनघः ।
अद्रिद्रोणिकृतस्थानः पवनात्मा जगत्पतिः ॥ ४६ ॥
सर्वकर्माचलस्त्वष्टा मङ्गल्यो मङ्गलप्रदः ।
महातपा दीर्घतपाः स्थविष्णुः स्थविरो ध्रुवः ॥ ४७ ॥

* अमृतात्मेत्यादिविधिरित्यन्तं कखगझसंज्ञितपुस्तकेषु नास्ति ।

१ ( क.ख.ग.झ. ) ०हरोजस्वी । २ ( क.ख. ग.झ. ) ०हाहद्रो म० । ३ ( च. छ. ) ०मृतोऽमृतपः श्रीमान्पञ्च० । ४ ( छ. ) अभिवा० । ५ ( क.ग.ज.झ. ) ०वादो म० । ६ ( घ. ) ०श्वधर्मवि० । ७ ( ङ. ) ०कर्मवि० । ८ ( क.ख.ग.झ. ) ०द्रिनन्द्रालयः स्था० । ९ ( ख.ग. ) ०विष्णुः स्थ० ।

अहः संवत्सरो व्यालः प्रमाणं परमं तपः ॥ ३०२ ॥
संवत्सरकरो मन्त्रः प्रत्ययः सर्वदर्शनः ॥ ४८ ॥
अजः सर्वेश्वरः सिद्धो महारेता महाबलः ।
योगी योगो महादेवः सिद्धः सर्वादिरच्युतः ॥ ४९ ॥
वसुर्वसुमनाः सत्यः सर्वपापहरो हरः ।
अमृतः शाश्वतः शान्तो बाणहस्तः प्रतापवान् ॥ ५० ॥
कमण्डलुधरो धन्वी वेदाङ्गो वेदविन्मुनिः ।
भ्राजिष्णुर्भोजनं भोक्ता लोकनेता दुराधरः ॥ ५१ ॥
अतीन्द्रियो महामायः सर्वावासश्चतुष्पथः ।
कालयोगी महानादो महोत्साहो महाबलः ॥ ५२ ॥
महाबुद्धिर्महावीर्यो भूतचारी पुरन्दरः ।
निशाचरः प्रेतचारी महाशक्तिर्महाद्युतिः ॥ ५३ ॥
अनिर्देश्यवपुः श्रीमान्सर्वाकर्षकरो मतः ।
बहुश्रुतो बहुमायो नियतात्माऽभयोद्भवः ॥ ५४ ॥
ओजस्तेजोद्युतिधरो नर्तकः सर्वनायकः ।
नित्यघण्टाप्रियो नित्यप्रकाशात्मा प्रतापनः ॥ ५५ ॥
ऋद्धः स्पष्टाक्षरो मन्त्रः संग्रामः शारदप्लवः ।
युगादिकृद्युगावर्तो गम्भीरो वृषवाहनः ॥ ५६ ॥
इष्टो विशिष्टः शिष्टेष्टः शरभः सरभो धनुः ।
अपां निधिरधिष्ठानं विजयो जयकालवित् ॥ ५७ ॥
प्रतिष्ठितः प्रमाणज्ञो हिरण्यकवचो हरिः ।
विमोचनं सुरगणो विद्येशो विबुधाश्रयः ॥ ५८ ॥
बालरूपो बलोन्माथी विकर्ता गहनो गुहः ।
करणं कारणं कर्ता सर्वबन्धप्रमोचनः ॥ ५९ ॥ ४०३ ॥
व्यवसायो व्यवस्थानः स्थानदो जगदादिजः ।
दुन्दुभो ललितो विश्वो भवात्माऽऽत्मनि संस्थितः ॥ ६० ॥
राजराजप्रियो रामो राजचूडामणिः प्रभुः ।
वीरेश्वरो वीरभद्रो वीरासनविधिर्विराट् ॥ ६१ ॥

---

१ ( क. ख. ग. ङ. ) ०न्सर्वकार्यमितो म०। २ ( क. ख. ग. ज. झ. ) रो गतिः । ब०। ३ ( घ. ङ. छ. ) काल०। ४ ( ज. झ. ) ०भद्रः शरा०।

वीरचूडामणिर्वेत्ता तीव्रानन्दो नदीधरः ।
आत्माधारस्त्रिशूलाङ्कः शिपिविष्टः शिवाश्रयः ॥ ६२ ॥
वालखिल्यो महाचारस्तिग्मांशुर्वारिधिः खगः ।
अभिरामः सुशरण्यः सुब्रह्मण्यः सुधापतिः ॥ ६३ ॥
मधुमान्कौशिको गोमान्विरामः सर्वसाधनः ।
ललाटाक्षो विश्वदेहः सारः संसारचक्रभृत् ॥ ६४ ॥
अमोघदण्डो मध्यस्थो हिरण्यो ब्रह्मवर्चसी ।
परब्रह्मपदो हंसः शबरो व्याघ्रकोऽनलः ॥ ६५ ॥
रुचिर्वररुचिर्वन्द्यो वाचस्पतिरहर्पतिः ।
रविर्विरोचनः स्कन्दः शास्ता वैवस्वतोऽर्जुनः ॥ ६६ ॥
मुक्तिरुन्नतकीर्तिश्च शान्तरामः पुरंजयः ।
कैलासपतिः कामारिः सविता रविलोचनः ॥ ६७ ॥
विद्वत्तमो वीतभयो विश्वकर्माऽनिवारितः ।
नित्यो नियतकल्याणः पुण्यश्रवणकीर्तनः ॥ ६८ ॥
दूरश्रवा विश्वसहो ध्येयो दुःस्वप्ननाशनः ।
उत्तारको दुष्कृतिहा दुर्धर्षो दुःसहोऽभयः ॥ ६९ ॥
अनादिर्भूर्भुवो लक्ष्मीः किरीटी त्रिदशाधिपः ।
विश्वगोप्ता विश्वहर्ता सुवीरो रुचिराङ्गदी ॥ ७० ॥
जननो जनजन्मादिः प्रीतिमान्नीतिमानथ ॥ ५०२ ॥
वसिष्ठः कश्यपो भानुर्भीमो भीमपराक्रमः ॥ ७१ ॥
प्रणवः सत्पथाचारो महाकायो महाधनुः ।
जन्माधिपो महादेवः सकलागमपारगः ॥ ७२ ॥
तत्त्वं तत्त्वविदेकात्मा विभूतिर्भूतिभूषणः ।
ऋषिर्ब्राह्मणविद्विष्णुर्जन्ममृत्युजरातिगः ॥ ७३ ॥
यज्ञो यज्ञपतिर्यज्वा यज्ञान्तोऽमोघविक्रमः ।
महेन्द्रो दुर्भरः सेनी यज्ञाङ्गो यज्ञवाहनः ॥ ७४ ॥
पञ्चब्रह्मसमुत्पत्तिर्विश्वेशो विमलोदयः ।
आत्मयोनिरनाद्यन्तः षड्विंशो लोकभृत्कविः ॥ ७५ ॥

---

१ (क. ख. ग. ङ.) मघवान्कौ०। २ (क. ग. ङ.) ०कर्ताऽनि०। ३ (क. ख. ग.) षड्विंशः सप्तलोकभृत् ॥ ७५ ॥

*गायत्रीवल्लभः प्रांशुर्विश्वावासः सदाशिवः ।
शिशुर्गिरिरतः सम्राट् सुषेणः सुरशत्रुहा ॥ ७६ ॥
अमेयोऽरिष्टमथनो मुकुन्दो विगतज्वरः ।
स्वयंज्योतिरनुज्योतिरचलः परमेश्वरः ॥ ७७ ॥
पिङ्गलः कपिलश्मश्रुः शास्त्रनेत्रस्त्रयीतनुः ।
ज्ञानस्कन्धो महाज्ञानी वीरोत्पत्तिरुपप्लवी ॥ ७८ ॥
भगो विवस्वानादित्यो योगाचारो दिवस्पतिः ।
उदारकीर्तिरुद्योगी सद्योगी सदसन्मयः ॥ ७९ ॥
नक्षत्रमाली नाकेशः स्वाधिष्ठानषडाश्रयः ।
पवित्रपादः पापारिर्मणिपूरो नभोगतिः ॥ ८० ॥
हृत्पुण्डरीकमासीनः शुक्रांशानो वृषाकपिः ।
तुष्टो गृहपतिः कृष्णः समर्थोऽनर्थशासनः ॥ ८१ ॥
अधर्मशत्रुरक्षय्यः पुरुहूतः पुरुष्टुतः ।
बृहद्भुजो ब्रह्मगर्भो धर्मधेनुर्धनागमः ॥ ८२ ॥
जगद्धितैषी सुगतः कुमारः कुशलागमः ॥ ६०२ ॥
हिरण्यगर्भो ज्योतिष्मानुपेन्द्रस्तिमिरापहः ॥ ८३ ॥
अरोगस्तपनाध्यक्षो विश्वामित्रो द्विजेश्वरः ।
ब्रह्मज्योतिः सुबुद्धात्मा बृहज्ज्योतिरनुत्तमः ॥ ८४ ॥
मातामहो मातरिश्वा मनस्वी नागहारधृक् ।
पुलस्त्यः पुलहोऽगस्त्यो जातूकर्ण्यः पराशरः ॥ ८५ ॥
निरावरणविज्ञानो विरञ्चो विष्टरश्रवाः ।
आत्मभूरनिरुद्धोऽत्रिर्ज्ञानमूर्तिर्महायशाः ॥ ८६ ॥
लोकचूडामणिर्वीरश्चन्द्रः सत्यपराक्रमः ।
व्यालकल्पो महाकल्पः कल्पवृक्षः कलानिधिः ॥ ८७ ॥
अलङ्करिष्णुरचलो रोचिष्णुर्विक्रमोत्तमः ।
आशुः सप्तपतिर्वेगी प्लवनः शिखिसारथिः ॥ ८८ ॥
असंतुष्टोऽतिथिः शुक्रः प्रमाथी पापशासनः ।
वसुश्रवाः कव्यवाहः प्रतप्तो विश्वभोजनः ॥ ८९ ॥

* कसंज्ञितपुस्तकेऽयं श्लोको नास्ति ।

१ (क. ख. ग. ङ.) ०कर्ण्यपराशरौ ॥ ८५ ॥ २ (क. ख. ग. ङ.) शाक० । ३ (क. ख. ग. ङ.) ०क्षाधरः ॥ ८७ ॥

लयो जरारिशमनो लोहिताश्वस्तनूनपात् ।
पृषदश्वो नभोयोनिः सुप्रतीकस्तमिस्रहा ॥ ९० ॥
निदाघस्तपनो मेघः पक्षः परपुरंजयः ।
सुखी नीलः सुनिष्पन्नः सुरभिः शिशिरात्मकः ॥ ९१ ॥
वसन्तो माधवो ग्रीष्मो नभस्यो बीजवाहनः ।
मनो बुद्धिरहंकारः क्षेत्रज्ञः क्षेत्रपालकः ॥ ९२ ॥
जमदग्निर्जलनिधिर्विपाको विश्वकारकः ।
अधरोऽनुत्तरो ज्ञेयो ज्येष्ठो निःश्रेयसालयः ॥ ९३ ॥
शैलो नाम तरुर्दाहो दानवारिररिंदमः ॥ ७०० ॥
चामुण्डी जनकश्चारुर्निःशल्यो लोकशल्यहृत् ॥ ९४ ॥
चतुर्वेदश्चतुर्भावश्चतुरश्चत्वरप्रियः ।
आम्नायोऽथ समाम्नायस्तीर्थदेवः शिवालयः ॥ ९५ ॥
वेषरूपो महादेवः सर्वरूपश्चराचरः ।
न्यायनिर्वाहको न्यायो न्यायगम्यो निरञ्जनः ॥ ९६ ॥
सहस्रमूर्धा देवेन्द्रः सर्वशस्त्रप्रभञ्जनः ।
मुण्डो विरूपो विकृतो दण्डी दान्तो गुणोत्तरः ॥ ९७ ॥
पिङ्गलाक्षोऽथ हर्यश्वो नीलग्रीवो निरामयः ।
सहस्रबाहुः सर्वेशः शरण्यः सर्वलोकधृक् ॥ ९८ ॥
पद्मासनः परंज्योतिः परावरः परं फलम् ।
पद्मगर्भो महागर्भो विश्वगर्भो विलक्षणः ॥ ९९ ॥
यज्ञभुग्वरदो देवो वरेशश्च महास्वनः ।
देवासुरगुरुर्देवः शंकरो लोकसंभवः ॥ १०० ॥
सर्ववेदमयोऽचिन्त्यो देवतासत्यसंभवः ।
देवाधिदेवो देवर्षिर्देवासुरवरप्रदः ॥ १०१ ॥
देवासुरेश्वरो दिव्यो देवासुरमहेश्वरः ।
देवासुराणां वरदो देवासुरनमस्कृतः ॥ १०२ ॥
देवासुरमहामात्रो देवासुरमहाश्रयः ।
सर्वदेवमयोऽचिन्त्यो देवानामात्मसंभवः ॥ १०३ ॥

---

१ ( घ. ङ. ज. ) वस्त्ररू०। २ ( ख. ग. घ. ङ. ) ०हारूपः स०। ३ ( घ. ङ. ) ०यग्रामो नि०। ४ ( घ. ङ. छ. ) ०वेशास्त्र०। ५ ( क. ख. ग. ज. झ. ) ०ण्डी शान्तो। ६ ( क. ख. ग. झ. ) ०वरप०।

ईड्योऽनीशः सुरव्याघ्रो देवसिंहो दिवाकरः ।
विबुधाग्रवरः श्रेष्ठः सर्वदेवोत्तमोत्तमः ॥ १०४ ॥
शिवध्यानरतः श्रीमाञ्शिखी श्रीपर्वतप्रियः ।
वज्रहस्तः प्रतिष्टम्भी विश्वज्ञानी निशाकरः ॥ १०५ ॥
ब्रह्मचारी लोकचारी धर्मचारी धनाधिपः ।
नन्दी नन्दीश्वरो नग्नो नग्नव्रतधरः शुचिः ॥ १०६ ॥
लिङ्गाध्यक्षः सुराध्यक्षो धर्माध्यक्षो युगावहः ॥ ८०१ ॥
स्ववशः स्वर्गतः स्वर्गः सर्गः स्वरमयः स्वनः ॥ १०७ ॥
बीजाध्यक्षो बीजकर्ता धर्मकृद्धर्मवर्धनः ।
दम्भोऽदम्भो महादम्भः सर्वभूतमहेश्वरः ॥ १०८ ॥
श्मशाननिलयस्तिष्यः सेतुरप्रतिमाकृतिः ।
लोकोत्तरः स्फुटालोकस्त्र्यम्बको भक्तवत्सलः ॥ १०९ ॥
अन्धकारिर्मखद्वेषी विष्णुकन्धरपातनः ।
वीतदोषोऽक्षयगुणोऽन्तकारिः पूषदन्तभित् ॥ ११० ॥
धूर्जटिः खण्डपरशुः सकलो निष्कलोऽनघः ।
आकारः सकलाधारः पाण्डुरागो मृगो नटः ॥ १११ ॥
पूर्णः पूरयिता पुण्यः सुकुमारः सुलोचनः ।
सामगेयः प्रियः क्रूरः पुण्यकीर्तिरनामयः ॥ ११२ ॥
मनोजवस्तीर्थकरो जटिलो जीवितेश्वरः ।
जीवितान्तकरोऽनन्तो वसुरेता वसुप्रदः ॥ ११३ ॥
सद्गतिः सत्कृतिः शान्तः कालकण्ठः कलाधरः ।
मानी मन्तुर्महाकालः सद्भूतिः सत्परायणः ॥ ११४ ॥
चन्द्रसंजीवनः शास्ता लोकगूढो महाधिपः ।
लोकबन्धुर्लोकनाथः कृतज्ञः कृतभूषणः ॥ ११५ ॥
अनपायोऽक्षरः क्षान्तः सर्वशस्त्रभृतां वरः ।
तेजोमयो द्युतिधरो लोकमायोऽग्रणीरणुः ॥ ११६ ॥
सुविस्मितः प्रसन्नात्मा दुर्जयो दुरतिक्रमः ।
ज्योतिर्मयो निराकारो जगन्नाथो जलेश्वरः ॥ ११७ ॥

---

१ ( क. ख. ग. छ. झ. ) ०व्याघ्रो दे०। २ ( क. ख. ग. ज. झ. ) ०स्तः सुविष्ट०। ३ (घ. ङ. छ. ) ०र्मवादीध०। ४ (घ. ङ.) ०क्षः पुरा०। ५ ( क. ख. ग. ज. झ. ) ०कर्मा ध०। ६ ( घ. ङ. छ. ) ०पावनः । ७ ( क. ख. ग. ङ. छ. ज. झ. ) ०गेयप्रि०। ८ ( घ. ङ. छ. ) ०द्भूतः स०

तुम्बी वीणा महाशोको विशोकः शोकनाशनः ।
त्रिलोकेशस्त्रिलोकात्मा सिद्धिः शुद्धिरधोक्षजः ॥ ११८ ॥
अव्यक्तलक्षणो व्यक्तो व्यक्ताव्यक्तो विशांपतिः ।
वरशीलो वरगुणो गतो गव्ययनो मयः ॥ ११९ ॥
ब्रह्मा विष्णुः प्रजापालो हंसो हंसगतिर्मतः ।
वेधा विधाता स्रष्टा च कर्ता हर्ता चतुर्मुखः ॥ १२० ॥
कैलासशिखरावासी सर्वावासी सदागतिः ।
हिरण्यगर्भो गगनः पुरुषः पूर्वजः पिता ॥ १२१ ॥
भूतालयो भूतपतिर्भूतिदा भुवनेश्वरः ।
संयमो योगविद्ब्रष्टो ब्रह्मण्यो ब्राह्मणप्रियः ॥ १२२ ॥
देवप्रियो देवनाथो देवज्ञो देवचिन्तकः ।
विषमाक्षो विशालाक्षो वृषदो वृषवर्धनः ॥ १२३ ॥
निर्ममो निरहंकारो निर्मोहो निरुपप्लवः ।
दर्पहा दर्पणो दृप्तः सर्वर्तुपरिवर्तकः ॥ १२४ ॥
सप्तजिह्वः सहस्रार्चिः स्निग्धः प्रकृतिदक्षिणः ।
भूतभव्यभवन्नाथः प्रभवो भ्रान्तिनाशनः ॥ १२५ ॥
अर्थोऽनर्थो महाकोशः परकार्यैकपण्डितः ।
निष्कण्टकः कृतानन्दो निर्व्याजो व्याजदर्शनः ॥ १२६ ॥
सत्त्ववान्सात्त्विकः सत्यः कीर्तिस्तम्भः कृतागमः ।
अकम्पितो गुणग्राही नैकात्मा लोककर्मकृत् ॥ १२७ ॥
श्रीवल्लभः शिवारम्भः शान्तभद्रः समञ्जसः ।
भूशयो भूतिकृद्भूतिर्विभूतिर्भूतिवाहनः ॥ १२८ ॥
अकायो भूतकायस्थः कालज्ञानो महापटुः ।
सत्यव्रतो महात्याग इच्छाशान्तिपरायणः ॥ १२९ ॥
परार्थवृत्तिवरदो विविक्तः श्रुतिसागरः ॥ १००० ॥
अनिर्विण्णो गुणग्राही निष्कलङ्कः कलङ्कहा ॥ १३० ॥
स्वभावभद्रो मध्यस्थः शत्रुघ्नः शत्रुनाशनः ।
शिखण्डी कवची शूली जटी मुण्डी च कुण्डली ॥ १३१ ॥

१ ( घ. ङ. छ. ) ०वृतो म० । २ ( क. ख. ग. झ. ) ०ता धाता च त्वष्टा ह० । ( ज. ) ०ता त्वष्टा । ३ ( क. ख. ग. झ. ) गमनः । ४ ( घ. ङ. ) ०ष्टो ब्राह्मणो ब्राह्मणाधिपः ॥ २२ ॥ ५ ( ङ. ज. ) ०वतो दे० । ६ ( क. ख. ग. घ. ) ०र्मदो नि० । ७ ( ख. ग. ज. ) अकम्पनो गु० । ( क. झ. ) अकम्पीनो गु० ।

मेखली कञ्चुकी खड्गी माली संसारसारथिः ।
अमृत्युः सर्वजित्सिंहस्तेजोराशिर्महामणिः ॥ १३२ ॥
असंख्येयोऽप्रमेयात्मा वीर्यवान्कार्यकोविदः ।
वेद्यो वैद्यो वियद्गोप्ता सप्तावरमुनीश्वरः ॥ १३३ ॥
अनुत्तमो दुराधर्षो मधुरः प्रियदर्शनः ।
सुरेशः शरणं शर्म सर्वः शब्दवतां गतिः ॥ १३४ ॥
कालः पक्षः करङ्कारिः कङ्कणीकृतवासुकिः ।
महेष्वासो महीभर्ता निष्कलङ्को विशृङ्खलः ॥ १३५ ॥
द्युमणिस्तरणिर्धन्यः सिद्धिदः सिद्धिसाधनः ।
विवृतः संवृतः शिल्पी व्यूढोरस्को महाभुजः ॥ १३६ ॥
एकज्योतिर्निरातङ्को नरनारायणप्रियः ।
निर्लेपो निष्प्रपञ्चात्मा निर्व्यग्रो व्यग्रनाशनः ॥ १३७ ॥
स्तव्यः स्तवप्रियः स्तोता व्योममूर्तिरनाकुलः ।
निरवद्यपदोपायो विद्याराशिरकृत्रिमः ॥ १३८ ॥
प्रशान्तबुद्धिरक्षुद्रः क्षुद्रहा नित्यसुन्दरः ।
ध्येयोऽग्रधुर्यो धात्रीशः साकल्यः शर्वरीपतिः ॥ १३९ ॥
परमार्थगुरुर्व्यापी शुचिराश्रितवत्सलः ।
रसो रसज्ञः सारज्ञः सर्वसत्त्वावलम्बनः ॥ १४० ॥ १०९१ ॥
एवं नाम्नां सहस्रेण तुष्टाव गिरिजापतिम् ।
संपूज्य परया भक्त्या पुण्डरीकैर्द्विजोत्तमाः ॥ १४१ ॥
जिज्ञासार्थं हरेर्भक्त्या कमलेषु शिवः स्वयम् ।
तत्रैकं गोपयामास कमलं मुनिपुङ्गवाः ॥ १४२ ॥
हृते पुष्पे तदा विष्णुश्चिन्तयन्किमिदं त्विति ।
ज्ञात्वाऽऽत्मनोऽक्षिमुद्धृत्य पूजयामास शंकरम् ॥ १४३ ॥
अथ ज्ञात्वा महादेवो हरेर्भक्तिं सुनिश्चलाम् ।
प्रादुर्भूतो महादेवो मण्डलात्तिग्मदीधितेः ॥ १४४ ॥
सूर्यकोटिप्रतीकाशस्त्रिनेत्रश्चन्द्रशेखरः ।
शूलटङ्कगदाचक्रकुन्तपाशधरो विभुः ॥ १४५ ॥

१ (क. ख. ग. झ.) ०र्वः सदसतां । २ (घ. ङ. छ. ज.) ०रिः किङ्कणी० । ३ (घ. ङ. छ.) ०वद्यः प० । ४ (घ. ङ.) हरिभक्तिं । ५ (ख. ग.) ०निश्चिताम् । ६ (क. ख. ग. झ.) ०टभषणः । ञ० ।

वरदाभयपाणिश्च सर्वाभरणभूषितः ।
तं दृष्ट्वा देवदेवेशं भगवान्कमलेक्षणः ॥ १४६ ॥
पुनर्ननाम चरणौ दण्डवच्छूलपाणिनः ।
दृष्ट्वा शंभुं तदा देवा दुद्रुवुर्भयविह्वलाः ॥ १४७ ॥
चचाल ब्रह्मभुवनं चकम्पे च वसुंधरा ।
अधश्चोर्ध्वं ततः प्रीते ददाह शतयोजनम् ॥ १४८ ॥
शंभोर्भगवतस्तेजस्तद्दृष्ट्वा प्रहसञ्शिवः ।
अब्रवीच्छार्ङ्गिणं विप्राः कृताञ्जलिपुटं स्थितम् ॥ १४९ ॥
देवकार्यमिदं ज्ञातमिदानीं मधुसूदन ।
दिव्यं ददामि ते चक्रमद्भुतं तत्सुदर्शनम् ॥ १५० ॥
हितार्थं[1] सर्वदेवानां निर्मितं यन्मया[2] पुरा ।
गृहीत्वा तद्गणैर्दैत्याञ्जहि विष्णो ममाऽऽज्ञया ॥ १५१ ॥
एवमुक्त्वा ददौ चक्रं सूर्यायुतसमप्रभम् ।
लोकेषु पुण्डरीकाक्ष इति ख्यातिं गतो हरिः ॥ १५२ ॥
पुनस्तमब्रवीच्छंभुर्नारायणमनामयम् ।
वरानन्यान्सुरश्रेष्ठ वरयस्व यथेप्सितान् ॥ १५३ ॥
एवं शंभोर्निगदितं श्रुत्वा देवो जनार्दनः ।
अब्रवीत्खण्डपरशुं प्राञ्जलिः प्रणयान्वितः ॥ १५४ ॥

**श्रीविष्णुरुवाच***—भगवन्देवदेवेश परमात्मञ्शिवाव्यय ।
निश्चला त्वयि मे भक्तिर्भवत्विति वरो मम ॥ १५५ ॥

**ईश्वर उवाच**—भक्तिर्मयि दृढा विष्णो भविष्यति तवानघ ।
अजेयस्त्रिषु लोकेषु मत्प्रसादाद्भविष्यसि ॥ १५६ ॥

**सूत उवाच**—एवं दत्वा वरं शंभुर्विष्णवे प्रभविष्णवे ।
अन्तर्हितो द्विजश्रेष्ठा इति देवोऽब्रवीद्रविः ॥ १५७ ॥
नाम्नां सहस्रं यद्दिव्यं विष्णुना समुदीरितम् ।
यः पठेच्छृणुयाद्वाऽपि सर्वपापैः प्रमुच्यते ॥ १५८ ॥
अश्वमेधसहस्रस्य फलं प्राप्नोति निश्चितम् ।
पठतः सर्वभावेन विद्या वा महती भवेत् ॥ १५९ ॥

---

* अत्र घछसंज्ञितपुस्तकयोः कश्चित्क्षेपको दृश्यते । स यथा—भक्तिर्मन्याऽस्तु ते शंभो निश्चला त्वनपायिनी । वरमेतं वृणे देव नान्यं कंचन सुव्रत–इति ।

---

१ ( घ. ङ. ) °सन्निव । अ° । २ ( घ. ङ. च. छ. ) °र्थं देवदे° । ३ ( क. ख. ग. ज. झ. ) यत्पुरा प्रभो । पु° । ४ ( [illegible] ) [illegible]

जायते महदैश्वर्यं शिवस्य दयितो भवेत् ।
दुस्तरे जलसंघाते यज्जलं स्थलतां व्रजेत् ॥ १६० ॥
हारायन्ते महासर्पाः सिंहः क्रीडामृगायते ।
तस्मान्नाम्नां सहस्रेण स्तोतव्यो भगवाञ्शिवः ॥ १६१ ॥
प्रयच्छत्यखिलान्कामान्देहान्ते च परां गतिम् ॥६२॥२१३४॥

इति श्रीब्रह्मपुराणोपपुराणे श्रीसौरे सूतशौनकसंवादे विष्णुचक्रप्राप्तिकथनं नामैकचत्वारिंशोऽध्यायः ॥ ४१ ॥

**ऋषय ऊचुः**-श्रुतं शंभोर्यथा चक्रं प्राप्तवान्पुरुषोत्तमः ।
इदानीं श्रोतुमिच्छामः शिवपूजाविधिं शुभम् ॥ १ ॥

**सूत उवाच**-शिवपूजाविधिं वक्ष्ये संक्षेपेण द्विजोत्तमाः ।
वक्तुं वर्षशतेनापि न शक्यं विस्तरेण तु ॥ २ ॥
पुरा मेरुगिरेः शृङ्गे सिद्धगन्धर्वसेविते ।
उक्तं सनत्कुमाराय नन्दिना कुलनन्दिना ॥ ३ ॥
नन्दीश्वरं सुखासीनं सर्वज्ञं मरुतां पतिम् ।
उपसंगम्य विधिवद्दण्डवत्प्रणिपत्य च ॥ ४ ॥
सनत्कुमारः पप्रच्छ शिवपूजाविधिक्रमम् ।
सर्वेषां वरदं शान्तं गणकोटिभिरावृतम् ॥ ५ ॥

**सनत्कुमार उवाच**-नमस्तुभ्यं गणेशाय मार्तण्डायुतवर्चसे ।
शिवार्चनविधिं ब्रूहि मम त्रिदशपूजित ॥ ६ ॥

**नन्दिकेश्वर उवाच**-शिवपूजाविधिं वक्ष्ये शृणु ब्रह्मसुताद्य मे ।
सर्वात्मके महादेवे भक्तोऽसि त्वं यतो मुने ॥ ७ ॥
तत्राऽऽदौ विधिना स्नात्वा समाचम्य यथाविधि ।
पूजास्थानमनुप्राप्य उपविश्याथ बुद्धिमान् ॥ ८ ॥
प्राणायामत्रयं कृत्वा ध्यायेद्देवं सदाशिवम् ।
शरीरशोषणं कृत्वा दहनं प्लावनं ततः ॥ ९ ॥
शैवीं तनुं समास्थाय न्यासकर्म समाचरेत् ।
योऽयं सूत्रात्मको मन्त्रः सर्ववेदात्मकः परः ॥ १० ॥

---

१ (क. झ.) ०संपाते । २ (ज.) ०सुतोत्तम । स० । ३ (क. ख. ग. ज.) सुरात्म० । ४ (क. ख. ग. ज. झ.) तथा ॥ ९ ॥ ५ (क. ख. ग. झ.) ०यं तत्त्वात्म० । ६ (क. ख. ग.

तस्य वर्णांश्च विधिवन्न्यसेत्प्रणवपूर्वकान् ।
अस्त्राणि ततो विन्यस्य ततश्चन्दनवारिणा ॥ ११ ॥
पूजास्थानं सुसंप्रोक्ष्य द्रव्याणि च मुनीश्वर ।
क्षालनं प्रोक्षणं चैव प्रणवेन विधीयते ॥ १२ ॥
स्थापयेत्प्रोक्षणीपात्रं पाद्यपात्रं तथैव च ।
तथा ह्याचमनीयं च ह्यवगुण्ठ्य यथाविधि ॥ १३ ॥
आच्छाद्य दर्भैर्मतिमांस्तेनैवाभ्युक्ष्य वारिणा ।
जलं तेषु विनिक्षिप्य द्रव्याणि च ततः क्षिपेत् ॥ १४ ॥
उशीरं चन्दनं चैव पाद्ये तु परिकल्पयेत् ।
चूर्णयित्वा सकङ्कोलं कर्पूरं जातिकाफलम् ॥ १५ ॥
क्षिपेदाचमनीये तु प्रणवेन यथाक्रमम् ।
सर्वत्र चन्दनं दद्यादर्घ्यपात्रेऽमुना शृणु ॥ १६ ॥
व्रीहीन्यवांश्च पुष्पाणि कुशाग्राणि तथैव च ।
सिद्धार्थानक्षतांश्चैव साज्यं च भसितं तथा ॥ १७ ॥
कुशपुष्पयवव्रीहिबहुमूलतमालकान् ।
प्रक्षिपेत्प्रोक्षणीपात्रे प्रणवेन सुधीस्ततः ॥ १८ ॥
सूत्रेण भवगायत्र्या गायत्र्या च द्विजोत्तमः ।
प्रोक्षणीपात्रमादाय संप्रोक्ष्य द्वारपालकौ ॥ १९ ॥
पार्श्वतो मां चतुर्बाहुं सूर्यायुतसमप्रभम् ।
वानरास्यं त्रिनयनं पुष्पमालासुशोभितम् ॥ २० ॥
सर्वाभरणशोभाढ्यं नन्दीशं संप्रपूजयेत् ।
दक्षिणे तु महाकालं घोररूपं भयावहम् ॥ २१ ॥
दंष्ट्राकरालवदनं कालाग्निचयसंनिभम् ।
पश्चादन्तर्गृहं शंभोः प्रविश्य सुसमाहितः ॥ २२ ॥
पञ्चपुष्पाञ्जलिं दद्याद्ब्रह्मभिः पञ्चभिर्मुने ।
गन्धैः पुष्पैर्महादेवं भक्त्या संपूजयेद्बुधः ॥ २३ ॥
स्कन्दं विनायकं चैव लिङ्गशुद्धिमथाऽऽरभेत् ।
सूक्तैर्मन्त्रैश्च विधिवन्नमोन्तैः प्रणवादिकैः ॥ २४ ॥
आसनं कल्पयेत्पश्चादैश्वर्यदलपङ्कजे ।
अणिमा पूर्वपत्रं स्यात्सर्वज्ञत्वमथेश्वरम् ॥ २५ ॥

१ ( घ. ङ. च. छ. ) °नं शुभं प्रो°। २ ( क. ख. ग. घ. ) °माहृत्य सं°। ३ ( घ. ङ. [illegible]

कर्णिकायां न्यसेद्विप्र वह्नेर्वै मण्डलं ततः ।
सौरं सौम्यं च विन्यस्य धर्मादीन्वै विदिक्षु च ॥ २६ ॥
अधर्मादींस्ततो दिक्षु सोमस्यान्ते गुणत्रयम् ।
तत्त्वत्रयमथो विद्वांस्ततः शंभुं प्रपूजयेत् ॥ २७ ॥
स्नापयेद्विधिना देवं गन्धयुक्तेन वारिणा ।
पञ्चामृतं ततो मन्त्रैः साधितं विधिपूर्वकम् ॥ २८ ॥
स्नापयेत्प्रणवेनैव तत्राऽऽदौ पयसा मुने ।
आज्येन मधुना दध्ना तथा चेक्षुरसेन च ॥ २९ ॥
जलस्य शुद्धिं विधिवन्मन्त्रैः कुर्यादनेकशः ।
संछाद्य सितवस्त्रेण स्नापयेदिन्दुशेखरम् ॥ ३० ॥
कुशापामार्गकर्पूरजातीचम्पकपुष्पकैः ।
करवीरैः सितैश्चैव मल्लिकाकमलोत्पलैः ॥ ३१ ॥
आपूर्य पुष्पैः सुशुभैश्चन्दनाद्यैश्च तज्जलम् ।
सद्योजातादिकांस्तत्र विन्यसेद्ब्रह्मणः सुत ॥ ३२ ॥
सुवर्णकलशेनाथ तथा वै राजतेन च ।
शङ्खेन मृन्मयेनाथ शोभितेन शुभेन च ॥ ३३ ॥
सकूर्चेन सपुष्पेण स्नापयेन्मन्त्रपूर्वकम् ।
पवमानेन रुद्रेण तथा वामीयकेन च ॥ ३४ ॥
त्वरिताख्येन रुद्रेण नीलरुद्रेण वा पुनः ।
अथर्वशिरसा वाऽपि रुद्रेण च तथैव च ॥ ३५ ॥
रथन्तरेण पुण्येन श्रीसूक्तेनाथवा मुने ।
पौरुषेण च सूक्तेन ज्येष्ठसाम्ना च विष्णुना ॥ ३६ ॥
पञ्चभिर्ब्रह्मभिर्वाऽथ सूत्रेण प्रणवेन वा ।
स्नापयेद्देवदेवेशं सर्वयज्ञफलाप्तये ॥ ३७ ॥
वस्त्रं यज्ञोपवीते च तथा ह्याचमनीयकम् ।
मुकुटं च शुभं भद्रं तथा वै भूषणानि च ॥ ३८ ॥
मुखवासं च नैवेद्यं सर्वं वै प्रणवेन च ।
ततः स्फटिकसंकाशं देवं निष्कलमक्षरम् ॥ ३९ ॥

---

१ (क. ख. ग. ङ.) ०न्हेर्मण्डलकं त०। २ (घ. ङ. च. छ.) ०र्मादीन्विदिश्वेव सो०

कारणं सर्वलोकानां सर्वलोकमयं परम्।
ब्रह्मणा विष्णुरुद्राद्यैरपि देवैरगोचरम्॥ ४०॥
वेदविद्भिर्हि वेदान्तैरगोचरमिति श्रुतम्।
*आदिमध्यान्तरहितं भेषजं भवरोगिणाम्॥ ४१॥
शिवलिङ्गमिति ख्यातं शिवलिङ्गे व्यवस्थितम्।
प्रणवेनैव मन्त्रेण पूजयेल्लिङ्गमूर्धनि॥ ४२॥
स्तोत्रैः स्तुत्वा महादेवं प्रणिपत्य प्रदक्षिणम्।
पुनरर्घ्यं च वै दत्वा पुष्पाणि च विकीर्य वै॥ ४३॥
पादयोर्देवदेवस्य प्रणिपत्य विसर्जयेत्।
एवं संक्षिप्य कथितं ब्रह्मसूनो शिवार्चनम्॥ ४४॥
सर्ववेदेषु यद्गुह्यं यथा शंभोर्मया श्रुतम्॥ ४५॥

**सूत उवाच**–सनत्कुमारो भगवाञ्श्रुतवान्यच्छिवार्चनम्।
नन्दीश्वराद्भगवतस्तन्मया कथितं द्विजाः॥ ४६॥
यः पठेत्प्रयतो भक्त्या शिवार्चनविधिक्रमम्।
सर्वपापविनिर्मुक्तो ब्रह्मलोके महीयते॥ ४७॥ २१८१॥

इति श्रीब्रह्मपुराणोपपुराणे श्रीसौरे सूतशौनकसंवादे शिवपूजाविधिकथनं नाम द्विचत्वारिंशोऽध्यायः॥ ४२॥

†**सूत उवाच**–अन्यद्व्रतं पापहरं धर्मकामार्थमोक्षदम्।
उमामहेश्वरं नाम व्रतं त्रैलोक्यविश्रुतम्॥ १॥
पौर्णमास्याममावास्यां चतुर्दश्यष्टमी(?) तथा।
कार्यमेतासु तिथिषु नक्तमेतद्द्विजोत्तमाः॥ २॥
ब्रह्मचारी हविष्याशी सत्यवादी सुसंयमी।
वर्षान्ते प्रतिमा कार्या हेम्ना वा रजतेन च॥ ३॥
पञ्चामृतैस्तु संस्नाप्य पूजयेद्विधिवद्द्विजाः।
वस्त्रैः पुष्पैरलंकृत्य भक्ष्यैर्नानाविधैः शुभैः॥ ४॥
ध्वजैर्वितानैश्चमरैर्यथा शोभां प्रकल्पयेत्।
आचार्यं पूजयेद्भक्त्या वस्त्रालंकारभूषणैः॥ ५॥

---

* घङसंज्ञितपुस्तकयोरिदं श्लोकार्धं नास्ति।

† कखगङसंज्ञितपुस्तकेष्वयमेवाध्यायश्चतुर्दशाध्यायस्थाने संगृहीतः।

---

१ (क. ख. ग. ङ. ञ.) [illegible]

भक्त्या च दक्षिणां दद्याच्छिवभक्तांश्च भोजयेत् ।
*शैवमेकं तु संभोज्य शतभोज्यफलं लभेत् ॥ ६ ॥
सत्यं सत्यं पुनः सत्यं देवस्य वचनं यथा ।
प्रतिमां पूजितां पश्चात्ताम्रपात्रे सुनिर्मले ॥ ७ ॥
निधाय सितवस्त्रेण संछाद्य शिरसा नमेत् ।
शङ्खतूर्यादिनिर्घोषैः शिवस्याऽऽयतनं महत् ॥ ८ ॥
पुनर्वेद्यां सुसंस्थाप्य व्रतं शंभोर्निवेदयेत् ।
शिवं प्रदक्षिणीकृत्य पश्चाद्देवं क्षमापयेत् ॥ ९ ॥
श्रद्धया यः करोतीदं व्रतं त्रिदशपूजितम् ।
सूर्यायुतप्रतीकाशं विमानं सार्वकामिकम् ॥ १० ॥
आरुह्य स्त्रीसहस्रैश्च गणैर्नानाविधैर्वृतः ।
याति माहेश्वरं स्थानं यत्र गत्वा न शोचति ॥ ११ ॥
तत्र माहेश्वरान्भोगान्भुक्त्वा कल्पशतत्रयम् ।
तदन्ते वैष्णवान्भोगान्भुङ्क्ते विष्णोः समीपतः ॥ १२ ॥
पश्चाद्भोगसमायुक्तो ब्रह्मलोके महीयते ।
ब्रह्मलोकात्परिभ्रष्टः प्राजापत्यान्समश्नुते ॥ १३ ॥
तस्माल्लोकाच्च्युतः पश्चात्सर्वलोकनमस्कृतः ।
सोमलोकं समासाद्य भुक्त्वा भोगान्यथेप्सितान् ॥ १४ ॥
सोमादैवेन्द्रगन्धर्वयक्षलोकमनुत्तमम् ।
भुक्त्वा तत्र महाभोगांस्तदन्ते मेरुमूर्धनि ॥ १५ ॥
तदन्ते लोकपालानां लोकानासाद्य मोदते ।
ततः कर्मावशेषेण पृथिव्यामेकराड्भवेत् ॥ १६ ॥
उमामहेश्वरं नाम व्रतं सर्वसुखप्रदम् ।
शंकरेण पुरा गीतं पार्वत्याः षण्मुखस्य च ॥ १७ ॥
अगस्त्यः षण्मुखाल्लब्ध्वा प्राप्तवान्मे गुरुस्ततः ।
द्वैपायनान्मुनिवरात्प्राप्तवानहमुत्तमम् ॥ १८ ॥
अन्यच्छूलव्रतं नाम शृणुध्वं मुनिपुङ्गवाः ।
अमावास्यां निराहारो भवेदब्दं सुसंयमी ॥ १९ ॥
शूलं पिष्टमयं कृत्वा वर्षान्ते विनिवेदयेत् ।
शिवाय राजतं पद्मं सुवर्णं कृतकर्णिकम् ॥ २० ॥

---

* शैवमेकमित्यादि वचनं यथेत्यन्तं कखगघङजझसंज्ञितपुस्तकेषु नास्ति ।

---

१ ( क.ख.ग.ज )दत्त्वा शिव० । २ ( घ.ङ.च. ) ०प्राट्तत: ॥१६॥ ३ ( घ.ङ.च. ) ०संयतः ॥१९॥

भक्त्या तु विन्यसेन्मूर्ध्नि सर्वमन्यच्च पूर्ववत् ।
*ब्रह्महत्यादिभिः पापैर्मुक्तो याति परां गतिम् ॥ २१ ॥
लोकान्पूर्वोदितान्प्राप्य तदन्ते पृथिवीपतिः ।
पूर्णमास्याममावास्यामब्दमेकं दृढव्रतः ॥ २२ ॥
वर्षान्ते सर्वगन्धाढ्यां प्रतिमां विनिवेदयेत् ।
पूर्ववत्फलमाप्नोति व्रतेनानेन वै द्विजाः ॥ २३ ॥
अष्टम्यां च चतुर्दश्यामुपवासी जितेन्द्रियः ।
सर्वभोगसमायुक्तः शिवलोके महीयते ॥ २४ ॥
क्षमा सत्यं दया दानं शौचमिन्द्रियनिग्रहः ।
शिवपूजाऽग्निहवनं संतोषोऽस्तेयता तथा ॥ २५ ॥
सर्वव्रतेष्वयं धर्मः सामान्यो दशधा स्मृतः ॥ २६ ॥
अन्यद्व्रतं पापहरं शृणुध्वं मुनिपुङ्गवाः ।
षण्मुखस्य पुरा प्रोक्तं देवदेवेन शंभुना ॥ २७ ॥
कैलासशिखरासीनं देवदेवं जगद्गुरुम् ।
प्रणम्य विधिवद्भक्त्या पप्रच्छ गिरिजासुतः ॥ २८ ॥
स्कन्द उवाच—केन व्रतेन भगवन्सौभाग्यमतुलं भवेत् ।
पुत्रपौत्रधनैश्वर्यं मनुजः सुखमेधते ॥ २९ ॥
तन्मे वद महादेव व्रतानामुत्तमं व्रतम् ।
येन चीर्णेन देवेश नरो राज्यं च विन्दति ॥ ३० ॥
राज्ञीव जायते नारी अपि दासकुलोद्भवा ।
राजपुत्रो जयेच्छत्रून्गरुडः पन्नगानिव ॥ ३१ ॥
ब्राह्मणो ब्रह्मवर्चस्वं प्राप्य सर्वाधिको भवेत् ।
वर्णाश्रमविहीनोऽपि सोऽपि सिद्धिं च विन्दति ॥ ३२ ॥
ईश्वर उवाच—शृणु वत्स प्रवक्ष्यामि व्रतानामुत्तमं व्रतम् ।
अस्ति दूर्वागणपतेर्व्रतं त्रैलोक्यविश्रुतम् ॥ ३३ ॥
भगवत्यां पुरा चीर्णं पार्वत्या पद्मया सह ।
सरस्वत्या महेन्द्रेण विष्णुना धनदेन च ॥ ३४ ॥
अन्यैश्च देवैर्मुनिभिर्गन्धर्वैः किंनरैस्तथा ।

* ब्रह्महत्यादिभिरित्यादि प्रतिमां विनिवेदयेदित्यन्तं घङसंज्ञितपुस्तकयोर्नास्ति ।
† इदं श्लोकार्धं घङसंज्ञितपुस्तकयोर्नास्ति ।

१ (घ. ङ.) ०त्या व्रतं ची०।

चीर्णमेतद्व्रतं सर्वैः पुरा कल्पे षडानन ॥ ३५ ॥
*चतुर्थी या भवेच्छुक्ला नभोमासस्य पुण्यदा ।
तस्यां व्रतमिदं कुर्यात्कार्तिक्यां वा षडानन ॥ ३६ ॥
गजाननं चतुर्बाहुमेकदन्तं विपाटितम् ।
विधाय हेम्ना विघ्नेशं हेमपीठासनस्थितम् ॥ ३७ ॥
†तथा हेममयीं दूर्वां तदाधारे व्यवस्थिताम् ।
संस्थाप्य विघ्नहर्तारं कलशे ताम्रभाजने ॥ ३८ ॥
वेष्टितं रक्तवस्त्रेण सर्वतो भद्रमण्डले ।
पूजयेद्रक्तकुसुमैः पत्रिकाभिश्च पञ्चभिः ॥ ३९ ॥
बिल्वपत्रमपामार्गं शमी दूर्वा हरिप्रिया ? ।
अन्यैः सुगन्धिकुसुमैः पत्रिकाभिः सुगन्धिभिः ॥ ४० ॥
फलैश्च मोदकैः पश्चादुपहारं प्रकल्पयेत् ।
यथावदुपचारैस्तु ‡पूजयामि जगत्पते ॥ ४१ ॥
इत्युक्त्वा श्रद्धया नूनं पूजयेद्गिरिजासुतम् ।
एह्येहि देव हेरम्ब विघ्नराज गजानन ॥
उपविश्याऽऽसनं देव सर्वकामप्रदो भव॥४२॥इत्यावाहनासनमन्त्रः।
उमासुत नमस्तुभ्यं विश्वव्यापिन्सनातन ।
विघ्नौघं छिन्धि सकलमर्घ्यं पाद्यं ददामि ते॥४३॥इत्यर्घ्यपाद्यमन्त्रः।
गणेश्वराय देवाय उमापुत्रायवेधसे ।
पूजामथ प्रयच्छामि गृहाण भगवन्नमः ॥ ४४ ॥ इतिगन्धमन्त्रः॥
विनायकाय शूराय वरदाय गजानन ।
उमासुताय देवाय कुमारगुरवे नमः ॥ ४५ ॥
लम्बोदराय वीराय सर्वविघ्नौघहारिणे ॥४६॥ इतिपुष्पमन्त्रः ॥
उमाङ्गमलसंभूत दानवानां वधाय वै ।
अनुग्रहाय लोकानां स देवः पातु विश्वभुक् ॥४७॥ इतिधूपमन्त्रः॥
परं ज्योतिः प्रकाशाय सर्वसिद्धिप्रदाय च ।
तुभ्यं दीपं प्रदास्यामि महादेवात्मने नमः ॥४८॥ इतिदीपमन्त्रः॥

---

* घङजसंज्ञितपुस्तकेष्वयं श्लोको नास्ति ।

† घङजसंज्ञितपुस्तकेष्विदं श्लोकार्धं नास्ति ।

‡ चसंज्ञितपुस्तकं विना सर्वेष्वादर्शपुस्तकेषु पूजयामीत्यादि नूनमित्यन्तं शब्दजातं नास्ति ।

---

१ ( घ. ङ. ) विघ्नेश्वराय ।

गणानां त्वा गणपतिं हवामहे
कविं कवीनामुपमश्रवस्तमम् ।
ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पत
आ नः शृण्वन्नूतिभिः सीद सादनम् ॥४९॥ इत्युपहारमन्त्रः॥
गणेश्वर गणाध्यक्ष गौरीपुत्र गजानन ।
व्रतं संपूर्णतां यातु त्वत्प्रसादादिभानन॥५०॥ इतिप्रार्थनामन्त्रः॥
एवं संपूज्य विघ्नेशं यथा विभवविस्तरैः ।
सोपस्करं गणाध्यक्षमाचार्याय निवेदयेत् ॥ ५१ ॥
गृहाण भगवन्ब्रह्मन्गणराजं सदक्षिणम् ।
व्रतं त्वद्वचनादद्य संपूर्णं यातु सुव्रत ॥ ५२ ॥ इतिदानमन्त्रः॥
एवं यः पञ्च वर्षाणि कृत्वोद्यापनमाचरेत् ।
ईप्सिताँल्लभते कामान्देहान्ते शांकरं पदम् ॥ ५३ ॥
अथवा शुक्लपक्षस्य चतुर्थीं संयतेन्द्रियः ।
कुर्याद्वर्षत्रयं त्वेवं सर्वसिद्धिमवाप्नुयात् ॥ ५४ ॥
उद्यापनं विना यस्तु करोति व्रतमुत्तमम् ।
तेन शुक्लतिलैः कार्यं प्रातस्नानं षडानन ॥ ५५ ॥
हेम्ना वा रजतेनापि कृत्वा गणपतिं बुधः ।
पञ्चगव्यैश्च सुस्नाप्य दूर्वाभिः संप्रपूजयेत् ॥ ५६ ॥
मन्त्रैश्च दशभिर्भक्त्या दूर्वायुक्तैः शिखिध्वज ।
इत्येवं कथितं वत्स सर्वसिद्धिप्रदं शुभम् ॥
व्रतं दूर्वागणपतेः किमन्यच्छ्रोतुमर्हसि ॥ ५७ ॥ २२३८ ॥
इति श्रीब्रह्मपुराणोपपुराणे श्रीसौरे सूतशौनकसंवाद उमामहेश्वर-
दूर्वागणपतिव्रतकथनं नाम त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥
**ऋषय ऊचुः**—मृदादिरत्नपर्यन्तैर्द्रव्यैः कृत्वा शिवालयम् ।
यत्फलं लभते मर्त्यस्तन्नो वक्तुमिहार्हसि ॥ १ ॥
**सूत उवाच**—शृणुध्वमृषयः सर्वे प्रभावं परमेष्ठिनः ।
शिवालयस्य करणात्फलमानन्त्यमुच्यते ॥ २ ॥
अपि लोष्ठमयं वाऽपि यः करोति शिवालयम् ।
सर्वयत्नेन विप्रेन्द्रा धर्मकामार्थमुक्तये ॥ ३ ॥

---

१ (घ. ङ.) ०न्नन्ततरा०।

कैलासाख्यं च यः कुर्यात्प्रासादं परमेष्ठिनः ।
मेर्वाख्यं मन्दराख्यं वा तुहिनाद्रिमथापि वा ॥ ४ ॥
निषधाद्रिं च नीलाद्रिं महेन्द्राख्यं द्विजोत्तमाः ।
स तत्पर्वतसंकाशैर्विमानैः सार्वकामिकैः ॥ ५ ॥
गत्वा शिवपदं दिव्यं शिववन्मोदते चिरम् ।
महाप्रलयपर्यन्तं भुक्त्वा भोगान्यथेप्सितान् ॥ ६ ॥
तदन्ते विषयांस्त्यक्त्वा शिवसायुज्यमाप्नुयात् ।
पतितं खण्डितं वाऽपि जीर्णं वा स्फुटितं तथा ॥ ७ ॥
कारयेत्पूर्ववद्यस्तु सुधाद्यैः सुमनोहरैः ।
प्राकारं मण्डपं वाऽपि प्रासादं गोपुरं तथा ॥ ८ ॥
कर्तुरभ्यधिकं पुण्यं लभते नात्र संशयः ।
वृत्त्यर्थं वा प्रकुर्वीत नरः कर्म शिवालये ॥ ९ ॥
यः प्रयाति न संदेहः स्वर्गलोके सबान्धवः ।
यश्चाऽऽत्मभोगसिद्ध्यर्थमपि रुद्रालये सकृत् ॥ १० ॥
कर्म कुर्याद्यदि सुखं लब्ध्वा सोऽपि प्रमोदते ।
यदाऽशक्तो भवेन्मर्त्यः प्रासादं कर्तुमीश्वरे ॥ ११ ॥
संमार्जनादिभिर्वाऽपि सर्वान्कामानवाप्नुयात् ।
संमार्जनं तु यः कुर्यान्मार्जन्या मृदुसूक्ष्मया ॥ १२ ॥
चान्द्रायणसहस्रस्य फलं मासेन लभ्यते ।
शिवस्य पुरतो वह्निं संस्थाप्याभ्यर्च्य शंकरम् ॥ १३ ॥
जुहुयादात्मनो देहं यः स याति शिवं पदम् ।
शिवक्षेत्रे निराहारो भूत्वा प्राणान्परित्यजेत् ॥ १४ ॥
शिवसायुज्यमाप्नोति प्रसादात्परमेष्ठिनः ।
अथाऽऽत्मचरणौ छित्त्वा शिवक्षेत्रे वसेन्नरः ॥ १५ ॥
देहान्ते शिवसायुज्यं लभते नात्र संशयः ।
फलं यदश्वमेधस्य तदेव क्षेत्रदर्शनात् ॥ १६ ॥
शताधिकं प्रवेशाच्च द्विगुणं लिङ्गदर्शनात् ।
तस्माच्छतगुणा पूजा जलस्नानं ततोऽधिकम् ॥ १७ ॥

---

१ (ख. ग.) ०ध्याख्यं च । २ (घ. ङ. च. ज.) ०माः । तत्तु पर्व०। ३ (क. ख. ग. झ.) ०गान्मनोरमान् । ४ (क. ख. ग. झ.) नन्दते वि०। ५ (घ. ङ. ज.) ०हं स याति च शि०। ६ (क. झ.) ०रणे छि०। ७ (घ. ङ. च. ज.) ०न्ते परमं स्थानं ल०।

*जलस्नानाच्च विप्रेन्द्राः क्षीरस्नानं शताधिकम् ।
दध्ना सहस्रमाख्यातं मधुना तच्छताधिकम् ॥ १८ ॥
आनन्तं सर्पिषा स्नानं वाससा तच्छताधिकम् ।
तस्मात्कोटिगुणं पुण्यं पञ्चत्वं शंकरालये ॥ १९ ॥
तस्माच्छतगुणं पुण्यं नियमैर्यस्त्यजेत्तनुम् ।
प्रदक्षिणात्रयं कुर्याद्यः प्रसादं समन्ततः ॥ २० ॥
सव्यापसव्यव्याजेन मृदु गत्वा शुचिर्नरः ।
पदे पदेऽश्वमेधस्य यज्ञस्य फलमाप्नुयात् ॥ २१ ॥
दुर्लभा खलु या मुक्तिरनायासेनै देहिनाम् ।
जायते कर्मणा येन शृणुध्वं तद्द्विजोत्तमाः ॥ २२ ॥
गोचर्ममात्रं संलिप्य मण्डलं गोमयेन च ।
चतुरस्रं विधानेन चाद्भिरभ्युक्ष्य मन्त्रवित् ॥ २३ ॥
अलंकृत्य वितानाद्यैश्छत्रैर्वाऽपि मनोहरैः ।
बुद्बुदैरर्धचन्द्रैश्च स्वर्णैरश्वत्थपत्रकैः ॥ २४ ॥
†सितैर्विकसितैः पद्मै रक्तैर्नीलोत्पलैस्तथा ।
विमानेन विचित्रेण मुक्तादाम्ना द्विजोत्तमाः ॥ २५ ॥
सितमृत्पात्रकैश्चैव सुश्लक्ष्णैः पूर्णकुम्भकैः ।
फलपल्लवमालाभिर्वैजयन्तीभिरंशुकैः ॥ २६ ॥
पञ्चाशद्दीपमालाभिर्धूपैश्च विविधैस्तथा ।
पञ्चाशद्दलसंयुक्तं लिखित्वा पद्ममुत्तमम् ॥ २७ ॥
तद्वद्वर्णैस्तथा चूर्णैः श्वेतचूर्णैरथापि वा ।
एकहस्तप्रमाणेन कृत्वा पद्मं विधानतः ॥ २८ ॥
कर्णिकायां न्यसेद्देवं देव्या देवेश्वरं भवम् ।
पर्णानि विन्यसेद्वर्णै रुद्रैः प्रागाद्यनुक्रमात् ॥ २९ ॥
प्रणवादिनमोन्तानि सर्ववर्णानि सुव्रताः ।
संपूज्यैवं सुरश्रेष्ठं गन्धपुष्पादिभिः क्रमात् ॥ ३० ॥
ब्राह्मणान्भोजयेत्तत्र पञ्चाशद्विधिपूर्वकम् ।
अक्षमालोपवीतं च कुण्डले च कमण्डलुम् ॥ ३१ ॥

* घङसंज्ञितपुस्तकयोरयं श्लोको नास्ति ।

† घङचछजसंज्ञितपुस्तकेषु सितैरित्याद्यंशुकैरित्यन्तं शब्दजातं नास्ति ।

१ (घ. ङ.) ०णं प्रोक्तं नि०। २ (क. ख. ज.) ०न दाक्षिणात्। ३ (घ. ङ. च. छ. ज.) विमानेन याति चाभ्यु०। ४ (घ. ङ. च. छ. ज.) ०भोरमैः प्रु०। ५ (क. ख. ग. ज. झ.) ०वं मुनिश्रेष्ठा ग०

आसनं च तथा दण्डमुष्णीषं वस्त्रमेव च ।
दत्वा तेषां द्विजेन्द्राणां देवदेवाय शंभवे ॥ ३२ ॥
महाचरुं निवेद्यैवं कृष्णं गोमिथुनं तथा ।
अन्ते च देवदेवाय दत्वा तद्वर्णमण्डलम् ॥ ३३ ॥
योगोपयोगिद्रव्याणि शिवाय विनिवेदयेत् ।
ओंकाराद्यं जपेद्धीमान्प्रतिवर्णमनुक्रमात् ॥ ३४ ॥
एवमालिख्य यो भक्त्या वर्णमण्डलमुत्तमम् ।
यत्फलं लभते मर्त्यस्तद्वदामि समासतः ॥ ३५ ॥
साङ्गान्वेदान्यथान्यायमधीत्य विधिपूर्वकान् ।
इष्ट्वा यज्ञैर्यथान्यायं ज्योतिष्टोमादिभिः क्रमात् ॥ ३६ ॥
ततो विश्वजिता चेष्ट्वा पुत्रानुत्पाद्य मादृशान् ।
वानप्रस्थाश्रमं गत्वा सदारः साग्निरेव च ॥ ३७ ॥
चान्द्रायणादिकान्कृत्वा सर्वान्संन्यस्य वै द्विजाः ।
ब्रह्मविद्यामधीत्यैव ज्ञानमापाद्य यत्नतः ॥ ३८ ॥
ज्ञानेन ज्ञेयमालोक्य योगिवत्फलमाप्नुयात् ।
तत्फलं लभते सर्वं वर्णमण्डलदर्शनात् ॥ ३९ ॥
येन केनापि वाऽऽलिख्य प्रलिप्याऽऽयतनाश्रमम् ।
उत्तरे दक्षिणे वाऽपि पृष्ठतो वा द्विजोत्तमाः ॥ ४० ॥
चतुष्कोणेऽपि वा चूर्णैरलंकृत्य समन्ततः ।
विकीर्य गन्धकुसुमैर्धूपैर्दीपैश्चतुर्विधैः ॥ ४१ ॥
प्रार्थयेद्देवमीशानं शिवलोकं स गच्छति ॥ ४२ ॥
तत्र भुक्त्वा महान्भोगान्कल्पकोटिशतं नरः ।
स्वदेहगन्धैश्च शुभैः पूरयञ्शिवमन्दिरम् ॥ ४३ ॥
क्रमाद्गान्धर्वमासाद्य गन्धर्वैश्च सुपूजितः ।
क्रमादागत्य लोकेऽस्मिन्राजा भवति वीर्यवान् ॥ ४४ ॥
आपः पूता भवन्त्येता वस्त्रपूताः समुद्भवाः ।
अफेना मुनिशार्दूला नादेयाश्च विशेषतः ॥ ४५ ॥
तस्माद्वै सर्वकार्याणि वैदिकानि द्विजोत्तमाः ।
अद्भिः कार्याणि सततं पूताभिः सर्वसिद्धये ॥ ४६ ॥

---

१ (ख. ङ. च. ज.) तस्य वि०। २ (क. ख. ग. ज.) ०कान्सर्वान्कृत्वा संन्य०। ३ (घ. ङ. च. ज.) ०पि दृष्टितोऽपि द्वि०।

अहिंसा तु परो धर्मः सर्वेषां प्राणिनां यतः।
तस्मात्सर्वप्रयत्नेन वस्त्रपूतेन कारयेत् ॥ ४७ ॥
यद्दानमभयं पुण्यं सर्वदानोत्तमोत्तमम्।
तस्मात्सा परिहर्तव्या हिंसा सर्वत्र सर्वदा ॥ ४८ ॥
मनसा कर्मणा वाचा सर्वभूतहिते रताः।
सदा दर्शितपन्थानः शिवलोकं व्रजन्ति ते ॥ ४९ ॥
त्रैलोक्यमखिलं हत्वा यत्पापं जायते नृणाम्।
शिवालये निहत्यैकमपि तत्पापमाप्नुयात् ॥ ५० ॥
शिवार्थं सर्वदा कार्या पुष्पहिंसा द्विजोत्तमैः।
यज्ञार्थं पशुहिंसा च राज्ञा दुष्टस्य शासनम् ॥ ५१ ॥
न हन्तव्याः स्त्रियः सर्वा अत्रेश्च कुलसंभवाः।
ब्रह्महत्यासमं पापमात्रेय्या वधतो भवेत् ॥ ५२ ॥
स्त्रियः सर्वा न हन्तव्या सर्वैश्चैव द्विजातिभिः।
सर्वधर्मेषु विप्रेन्द्राः पापकर्मरता अपि ॥ ५३ ॥
तस्मादहिंसादियुतः शान्तः शिवजनप्रियः।
भक्तिं शिवे समास्थाय तस्मिञ्जन्मनि मुच्यते ॥ ५४ ॥
विश्वेश्वरे विरूपाक्षे विश्वव्यापिनि विश्वगे।
सर्वमन्यत्परित्यज्य भक्तिः कार्या मनीषिभिः ॥ ५५ ॥
पुत्रवित्तादिषु यथा सक्तं चित्तं सदा नृणाम्।
तथा सक्तं विरूपाक्षे दूरं किं शांकरं पदम् ॥ ५६ ॥
यजन्ते ये यथा शंभुं फलं तेषां तथाविधम्।
प्रयच्छति महादेवो भक्तिर्नैवास्ति निष्फला ॥ ५७ ॥
उच्छिष्टः पूजयेदीशं मोहान्धो यद्द्विजाधमः।
पैशाचलोके विपुलान्भोगान्भुङ्क्ते स मानवः ॥ ५८ ॥
क्रुद्धो राक्षसस्थानमभक्षी याक्षमाप्नुयात्।
गानशीलो हि गान्धर्वं नृत्यशीलस्तथैव च ॥ ५९ ॥
ख्यातिशीलस्तथैवैन्द्रमब्भक्षश्चान्द्रमाप्नुयात्।
गायत्र्या पूजयेदीशमब्दमेकं निरन्तरम् ॥ ६० ॥
प्राजापत्यमथाऽऽसाद्य सृष्टिकर्ता स्वयं भवेत्।
ब्राह्मं च प्रणवेनैव तेनैवाऽऽप्नोति वैष्णवम् ॥ ६१ ॥

१ (घ. ङ. च. ज.) भद्द०। २ (घ. ङ.) ०त्। यज्ञ च।

श्रद्धया सकृदेवापि समभ्यर्च्य महेश्वरम् ।
रुद्रलोकमनुप्राप्य रुद्रैः सार्धं प्रमोदते ॥ ६२ ॥
य इमं पठतेऽध्यायं श्रद्धया शिवसंनिधौ ।
सर्वपापविनिर्मुक्तो ब्रह्मलोके महीयते ॥ ६३ ॥ २३०१ ॥

इति श्रीब्रह्मपुराणोपपुराणे श्रीसौरे सूतशौनकसंवादे शिवालय-
करणादिफलकथनं नाम चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥

**ऋषय ऊचुः**—भूयोऽपि श्रोतुमिच्छामो माहात्म्यं परमेष्ठिनः ।
कथं सर्वात्मको रुद्रः कथं पाशुपतं व्रतम् ॥ १ ॥
ब्रूहि सूत महाभाग सर्वमेतदसंशयम् ।
कथं नो जायते प्रीतिः श्रोतुं शिवकथामृतम् ॥ २ ॥

**सूत उवाच**—पुरा ब्रह्मादयो देवा द्रष्टुकामा महेश्वरम् ।
मन्दरं प्रययुः सर्वे शंभोः प्रियतरं गिरिम् ॥ ३ ॥
स्तुत्वा प्राञ्जलयो देवा हरस्य पुरतः स्थिताः ।
तान्दृष्ट्वाऽथ महादेवो लीलया परमेश्वरः ॥ ४ ॥
तेषामपहृतं ज्ञानं ब्रह्मादीनां दिवौकसाम् ।
देवा ह्यपृच्छन्स्तं देवमात्मानं पुरतः स्थितम् ॥ ५ ॥
*आसंस्ते सकृदज्ञानात्तमाहुः को भवानिति ।
अब्रवीद्भगवानीशो ह्यहमेव पुरातनः ॥ ६ ॥
आसं प्रथममेवाहं वर्तामि(?) च सुरोत्तमाः ।
भविष्यामि च लोकेऽस्मिन्मत्तो नान्योऽस्ति कश्चन ॥ ७ ॥
व्यतिरिक्तं च मत्तोऽस्ति नान्यत्किंचित्सुरोत्तमाः ।
नित्यानित्योऽहमेवास्मि ब्रह्माऽहं ब्रह्मणस्पतिः ॥ ८ ॥
दिशश्च विदिशश्चैव प्रकृतिश्च पुमानहम् ।
त्रिष्टुब्जगत्यनुष्टुप्च पङ्क्तिश्छन्दस्त्रयीमयः ॥ ९ ॥
सत्योऽहं सर्वतः शान्तस्त्रेताग्निर्गौरहं गुरुः ।
गौर्यहं च हरश्चाहं द्यौरहं जगतां प्रभुः ॥ १० ॥
श्रेष्ठोऽहं सर्वतत्त्वानां वरिष्ठोऽहमपां पतिः ।
आपोऽहं भगवानीशस्तेजोऽहं वेदिरप्यहम् ॥ ११ ॥

* चछसंज्ञितपुस्तकयोरेवेदं श्लोकार्धं वर्तते ।

१ ( क. ख. ग. च. छ. ज. ) ०स्य नो । २ ( घ. ङ. च. ज. ) ०तुं त्वद्वचनामृ० । ३ ( क. ख. ग. घ. ङ. च. झ. ) ०ष्टुप्पङ्क्ति० । ४ ( क. ख. ग. झ. ) स्रष्टाऽहं । ५ ( घ. ङ. च. ज. ) ०हं च सुरोत्तमाः ॥ ११ ॥

ऋग्वेदोऽहं यजुर्वेदः सामवेदोऽहमात्मभूः ।
अथर्वणोऽथ मन्त्रोऽहं तथा चाङ्गिरसां वरः ॥ १२ ॥
इतिहासपुराणानि कल्पोऽहं कल्पना ह्यहम् ।
अक्षरं च क्षरं चाहं क्षान्तिः शान्तिरहं खगः ॥ १३ ॥
गुह्योऽहं सर्ववेदेषु आरण्योऽहमजोऽप्यहम् ।
पुष्करं च पवित्रं च मध्यं चाहं ततः परम् ॥ १४ ॥
बहिश्चाहं तथा चान्तः पुरस्तादहमव्ययः ।
ज्योतिश्चाहं तमश्चाहं ब्रह्मविष्णुमहेश्वराः ॥ १५ ॥
बुद्धिश्चाहमहंकारस्तन्मात्राणीन्द्रियाणि च ।
एवं सर्वं च मामेव यो वेद स सुरोत्तमः ॥ १६ ॥
स एव सर्ववित्सर्वः सर्वात्मा सर्वदर्शनः ।
गां गोभिर्ब्राह्मणान्सर्वान्ब्राह्मण्येन हवींषि च ॥ १७ ॥
हविषा यस्तथा सत्यं सत्येन च सुरोत्तमाः ।
धर्मं धर्मेण च तथा तर्पयामि स्वतेजसा ॥ १८ ॥
इत्यादि भगवानुक्त्वा तत्रैवान्तरधीयत ।
नापश्यंस्ते ततो देवं रुद्रं परमकारणम् ॥ १९ ॥
तं देवाः परमात्मानं रुद्रं ध्यायन्ति शंकरम् ।
सनारायणका देवाः सेन्द्राश्च मुनयस्तथा ॥ २० ॥
ततोर्ध्वबाहवो (?) देवा ह्यस्तुवञ्शंकरं तदा ।
**देवा ऊचुः**—य एष भगवान्रुद्रो ब्रह्मा विष्णुर्महेश्वरः ॥ २१ ॥
स्कन्दश्चाग्निस्तथा चन्द्रो भुवनानि चतुर्दश ।
भूतानि च तथा सूर्यः सोमाद्यष्टौ ग्रहास्तथा ॥ २२ ॥
प्राणः कालो यमो मृत्युरमृतं परमेश्वरः ।
भूतं भव्यं भविष्यं च वर्तमानं महेश्वरः ॥ २३ ॥
विश्वं कृत्स्नं जगत्सर्वं सत्यं तस्मै नमो नमः ।
ओमादौ च तथा मध्ये भूर्भुवःस्वस्तथैव च ॥ २४ ॥
अन्ते त्वं विश्वरूपोऽसि शीर्षं च जगतः सदा ।
ब्रह्मैकस्त्वं द्वित्रिधोर्ध्वमधस्तत्त्वं सुरेश्वरः ॥ २५ ॥

१ (क. ख. ग. अ. झ.) °थर्वाणो°। २ (घ. ङ.) °जो ह्यह°। ३ (क. ख. ग. स.) °त्तमम् ॥ १६ ॥ ४ (क. ख. ग. ज. झ.) °त्मा परमेश्वरः । गां । ५ (घ. ङ. च. ज.) आयुषा । ६ (घ. ङ. च. ज.) °न सुरसत्त°। ७ (घ.) ते दे°। ८ (घ. ङ. च. ज.) सोमश्चाष्टौ ।

*शान्तिश्च त्वं तथा पुष्टिस्तुष्टिश्चाप्यहुतं हुतम् ।
विश्वं चैव तथाऽविश्वं दत्तं चादत्तमीश्वरः ॥ २६ ॥
कृतं वाऽप्यथवा देव परमप्यपरं ध्रुवम् ।
परायणं सतां चैव असतामपि शंकर ॥ २७ ॥
अपाम सोममृता अभूमागन्म ज्योतिरविदाम देवान् ।
किं नूनमस्मान्कृणवदरातिः किमु धूर्तिरमृत मर्त्यस्य ॥ २८ ॥
एतज्जगद्धेदितव्यमक्षरं सूक्ष्ममव्ययम् ।
प्राजापत्यं पवित्रं वा सौम्यमग्राह्यमग्रियम् ॥ २९ ॥
आग्नेयेनापि चाऽऽग्नेयं वायव्येन समीरणम् ।
सौम्येन सौम्यं ग्रसते तेजसा स्वेन लीलया ॥ ३० ॥
तस्मै नमोऽपसंहर्त्रे महाग्रासाय शूलिने ।
हृदिस्था देवताः सर्वा हृदि प्राणाः प्रतिष्ठिताः ॥ ३१ ॥
हृदि त्वमसि योनिस्त्वं तिस्रो मात्राः परस्तु सः ।
शिरश्चोत्तरतस्तस्य पादो दक्षिणतस्तथा ॥ ३२ ॥
†स यो जीवोत्तरः साक्षात्स ओंकारः सनातनः ।
ओंकारो यः स वै देवः प्रणवो व्याप्य तिष्ठति ॥ ३३ ॥
अनन्ततारः सूक्ष्मश्च शुक्लं वैद्युतमेव च ।
परब्रह्म स ईशान एको रुद्रः स एव च ॥ ३४ ॥
भवान्महेश्वरः साक्षान्महादेवो न संशयः ।
ऊर्ध्वमुन्नामयत्येवं स ओंकारः प्रकीर्तितः ॥ ३५ ॥
प्राणान्नयति यत्तस्मात्प्रणवः परिभाषितः ।
सर्वं व्याप्नोति यत्तस्मात्सर्वव्यापी सनातनः ॥ ३६ ॥
ब्रह्मा हरिश्च भगवानाद्यन्तं नोपलब्धवान् ।
यथाऽन्ये च ततोऽनन्तो रुद्रः परमकारणम् ॥ ३७ ॥
यत्तारयति संसारात्तार इत्यभिधीयते ।
सूक्ष्मो भूत्वा शरीराणि सर्वदा ह्यधितिष्ठति ॥ ३८ ॥
तस्मात्सूक्ष्मः सदा ख्यातो भगवान्नीललोहितः ।
नीलश्च लोहितश्चैवं प्रधानपुरुषान्वयात् ॥ ३९ ॥

* घङसंज्ञितपुस्तकयोरयं श्लोको नास्ति ।
† ङसंज्ञितपुस्तकेऽयं श्लोको नास्ति ।

१ (क. ख. ग.) ०तं प्राप्य कृतं दे० । २ (क. ख. ग.) प्राप्य भ्रमति यत्तस्मा० ।
३ (घ. ङ. च.) ०भाषितः । ४ (क. ख. ग. ङ.) च यतां ।

स्कन्दतेऽस्य यतः शुक्रं ततः शुक्रमयीति च।
विद्योतयति यत्तस्माद्वैद्युतं परिगीयते ॥ ४० ॥
बृहत्त्वाद्बृंहणाद्ब्रह्म बृंहते च परात्परम्।
तस्माद्बृहति यत्तस्मात्परं ब्रह्मेति कीर्तितम् ॥ ४१ ॥
अद्वितीयोऽथ भगवांस्तुरीयः शिव ईशते (?)।
ईशानमस्य जगतः स्वर्दृशं बभ्रुमीश्वरम् ॥ ४२ ॥
ईशानमिन्द्र तस्थुषः सर्वेषामपि सर्वदा।
ईशानः सर्वविद्यानां यत्तदीशानमुच्यते ॥ ४३ ॥
यदीक्षते च भगवान्निरीक्षयति चान्यथा।
आत्मज्ञानं महादेवो योगो गमयति स्वयम् ॥ ४४ ॥
भगवांश्चोच्यते तेन देवदेवो महेश्वरः।
सर्वांल्लोकान्क्रमेणैव वो गृह्णाति महेश्वरः ॥
विसृजत्येष देवेशो वासयत्यपि लीलया ॥ ४५ ॥
एष हि देवः प्रदिशो नु सर्वाः पूर्वो हि जातः स उ गर्भे अन्तः।
स एव जातः स जनिष्यमाणः प्रत्यङ्जनास्तिष्ठति सर्वतोमुखः॥४६॥
उपासितव्यं यत्नेन तदेतत्सद्भिरग्रियम्।
यतो वाचो निवर्तन्त अप्राप्य मनसा सह ॥ ४७ ॥
तदग्रहणमेवेह यद्वाग्वदति यत्नतः।
अपरं च परं चेति परायणमिति स्वयम् ॥ ४८ ॥
वदन्ति वाचः सर्वज्ञं शंकरं नीललोहितम्।
एष सर्वो नमस्तस्मै पुरुषः पिङ्गलः शिवः ॥ ४९ ॥
स एकः स महारुद्रो विश्वं भूतं भविष्यति।
भुवनं बहुधा जातं जायमानमितस्ततः ॥ ५० ॥
हिरण्यबाहुर्भगवान्हिरण्यमपि चेश्वरः।
अम्बिकापतिरीशानो हेमरेता वृषध्वजः ॥ ५१ ॥
उमापतिर्विरूपाक्षो विश्वभुग्विश्ववाहनः।
ब्रह्माणं विदधे योऽसौ पुत्रमग्रे सनातनम् ॥ ५२ ॥
प्रहिणोति स्म तस्मै च ज्ञानमात्मप्रकाशकम्।
तमेकं पुरुषं रुद्रं पुरुहूतं पुरुष्टुतम् ॥ ५३ ॥

१ (घ. ङ. च.) ०त्वात्वर०। २ (ग. घ.) च भावान्वै निरी०। ३ (क. ख. ग. ङ.) ०र्वांल्कालान्क्र०। ४ (घ. च.) उ एव अ०। ५ (च.) ०रं चेति पा०। ६ (घ. ङ. छ.) ०र्वत्र शं०। ७ (घ. ङ. च.) एतत्सर्वं न०।

वालाग्रमात्रं हृदयस्य मध्ये विश्वदेवं वह्निरूपं वरेण्यम् ।
तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां शान्तिः शाश्वती नेतरेषाम् ॥ ५४ ॥
महतोऽपि महीयान्स अणोरप्यणुरव्ययः ।
गुहायां निहितश्चाऽऽत्मा जन्तोरस्य महेश्वरः ॥ ५५ ॥
विश्वं भूतं च विश्वस्य कमलं स्याद्धृदि स्वयम् ।
गह्वरं गगनान्तस्थं विश्वान्तश्चोर्ध्वतः स्थितम् ॥ ५६ ॥
तत्रापि शुभ्रं गगनमोंकारं परमेश्वरम् ।
वालाग्रमात्रं मध्यस्थमृतं परमकारणम् ॥ ५७ ॥
सत्यं ब्रह्म महादेवं पुरुषं कृष्णपिङ्गलम् ।
ऊर्ध्वरेतसमीशानं विरूपाक्षमजं ध्रुवम् ॥ ५८ ॥
अधितिष्ठति यो योनिं योनिश्चैव स ईश्वरः ।
[2]देहे पञ्चविधात्मानं तमीशानं पुरातनम् ॥ ५९ ॥
प्राणेऽप्यन्तर्मनसो लिङ्गमाहुर्यस्मिन्क्रोधो या च तृष्णा क्षमा च ।
तृष्णां छित्त्वा हेतुजा[3]तस्य मूलं भजस्व देवं हरमेव केवलम् ॥ ६० ॥
परात्परतरं चाऽऽहुः परात्परतरं ध्रुवम् ।
ब्रह्मणो जनकं विष्णोर्वह्नेर्वायोः सदाशिवम् ॥ ६१ ॥
ध्यात्वाऽग्निना च समग्निं विशोद्धाचः पृथक्पृथक् ।
पञ्च भूतानि संयम्य मात्रागुणविधिक्रमात् ॥ ६२ ॥
मात्राः पञ्च चतस्रश्च त्रिमात्रा द्विस्ततः परम् ।
एकमात्रममात्रं हि द्वादशान्तेष्ववस्थितम् ॥ ६३ ॥
स्थित्यां स्थाप्यामृतो(?) भूत्वा व्रतं पाशुपतं चरेत् ।
एतद्व्रतं पाशुपतं चरिष्यामः समासतः ॥ ६४ ॥
अग्निमाधाय विधिवदृग्यजुः सामसंभवैः ।
उपोषितः शुचिः स्नातः शुक्लाम्बरधरःस्वयम् ॥ ६५ ॥
शुक्लयज्ञोपवीती च शुक्लमाल्यानुलेपनः ।
जुहुयाद्विरजा विद्वान्विरजाः स भविष्यति ॥ ६६ ॥
वायवः पञ्च शुद्ध्यर्थं वाङ्मनश्चरणादयः ।
श्रोत्रे जिह्वा तथा घ्राणं मनो बुद्धिस्तथैव च ॥ ६७ ॥

---

१ ( घ. ङ. च. ज. ) विश्वेदे०। २ ( क. ख. ग. ङ. )०रः । देहं प०। ३ ( घ. ङ. ) ०जालं समू०। ( च. ज. ) ०जालस्य मू०।

*शिरः पाणिस्तथा पार्श्वं पृष्ठोदरमनन्तरम् ।
जङ्घे शश्वदुपस्थं च पायुं मेढ्रं तथैव च ॥ ६८ ॥
त्वक्च मांसं च रुधिरं मेदोऽस्थीनि तथैव च ।
शब्दं स्पर्शं च रूपं च रसो गन्धस्तथैव च ॥ ६९ ॥
भूतानि चैव शुध्यन्तां मद्देहे क्ष्मादयस्तथा ।
अन्तःप्राणमनोज्ञानं शुध्यतां मे शिवेच्छया ॥ ७० ॥
हुत्वा येन समिद्भिश्च वरुणाय यथाक्रमम् ।
उपसंहृत्य रुद्राग्निं गृहीत्वा भस्म यत्नतः ॥ ७१ ॥
अग्निरित्यादिना धीमान्विमृज्याङ्गानि संस्पृशेत् ।
एतत्पाशुपतं दिव्यं व्रतं पाशविमोक्षणम् ॥ ७२ ॥
ब्राह्मणानां सतां प्रोक्तं क्षत्रियाणां तथैव च ।
वैश्यानामपि योग्यानां यतीनां च विशेषतः ॥ ७३ ॥
वानप्रस्थाश्रमस्थानां गृहस्थानां सतामपि ।
विमुक्ति[2]र्विधिनाऽनेन दृष्टा वै ब्रह्मचारिणाम् ॥ ७४ ॥
अग्निरित्यादिना सम्यग्गृहीत्वा ह्यग्निहोत्रकम् ।
सोऽपि पाशुपतो विप्रो विमृज्याङ्गानि संस्पृशेत् ॥ ७५ ॥
भस्मच्छन्नो द्विजो विद्वान्महापातकसंभवैः ।
पापै[1]र्विमुच्यते सत्यं लिप्यते च न संशयः ॥ ७६ ॥
वीर्यमग्नेर्यतो भस्म वीर्यवान्भस्मसंमतः ।
भस्मस्नानरतो विप्रो भस्मशायी जितेन्द्रियः ॥ ७७ ॥
सर्वपापविनिर्मुक्तः शिवसायुज्यमाप्नुयात् ।
इत्युक्त्वा भगवान्ब्रह्मा स्तुत्वा देवं समप्रभुः ॥ ७८ ॥
भस्मच्छन्नः स्वयं कृत्स्नं विररामाम्बुजासनः ।
अथ तेषां प्रसादार्थं पशूनां पतिरीश्वरः ॥ ७९ ॥
स गत्वा चोमया सार्धं सांनिध्यमकरोत्प्रभुः ।
अथ संनिहितं रुद्रं तुष्टुवुः सुरपुङ्गवाः ॥ ८० ॥
रुद्रं ध्यायेत्तु देवेशं देवदेवमुमापतिम् ।
देवोऽपि देवता लोकय(?) घृणया च वृषध्वजः ॥ ८१ ॥
तुष्टोऽस्मीत्याह देवेशो वरं दत्त्वा वरारिहा ।
क्षणादन्तर्हितः शंभुर्ब्रह्मादीनां प्रपश्यताम् ॥ ८२ ॥

* घसंज्ञितादर्शपुस्तके श्लोकोऽयं न विद्यते ।

१ (क. ख. ग. ङ.) पापविमु० । २ (घ. ङ.) ०र्विविधाऽने० ।

सूत उवाच–इमं यः पठतेऽध्यायं शुचिर्भूत्वा समाहितः ।
सर्वतीर्थफलं चैव सर्वयज्ञफलं तथा ॥ ८३ ॥
सर्वदेवव्रतफलं सर्वस्तोत्रफलं तथा ।
प्राप्नोति तत्फलं विप्राः श्रद्धया शिवसंनिधौ ॥ ८४ ॥
गाणपत्यमवाप्नोति देहान्ते मुनिपुङ्गवाः ॥ ८५ ॥ २३८६ ॥

इति श्रीब्रह्मपुराणोपपुराणे श्रीसौरे सूतशौनकसंवादे सर्वात्मक-
रुद्रपाशुपतव्रतकथनं नाम पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥

सूत उवाच–वक्ष्यामि शिवमाहात्म्यं शृणुध्वं मुनिपुङ्गवाः ।
बहुभिर्बहुधा शास्त्रैः कीर्तितं मुनिपुङ्गवैः ॥ १ ॥
सदसद्रूपमित्याहुः सदसद्यपि संस्थितम् ।
तं शिवं मुनयः केचित्तं प्रपश्यन्ति सूरयः ॥ २ ॥
भूतभावविकारेण द्वितीयेन सदुच्यते ।
अव्यक्तेन विहीनं स्यादव्यक्तमसदित्यपि ॥ ३ ॥
उभे ते शिवरूपेण शिवादन्यन्न विद्यते ।
तयोः पतित्वाच्च शिवः सदसत्पतिरुच्यते ॥ ४ ॥
क्षराक्षरात्मकं प्राहुः क्षराक्षरपरं तथा ।
शिवं महेश्वरं केचिन्मुनयस्तत्त्वचिन्तकाः ॥ ५ ॥
उक्तमक्षरमव्यक्तं व्यक्ताक्षरमुदाहृतम् ।
रूपे ते शंकरस्यैव तेनाम्ना परमुच्यते ॥ ६ ॥
तयोः परः शिवः शान्तः क्षराक्षरपरो बुधैः ।
उच्यते परमार्थेन महादेवो महेश्वरः ॥ ७ ॥
समष्टिव्यष्टिं यद्रूपं समष्टिव्यष्टिकारणम् ।
वदन्ति केचिदाचार्याः शिवं परमकारणम् ॥ ८ ॥
समष्टिमाहुरव्यक्तं व्यष्टिं व्यक्तिं मुनीश्वराः ।
रूपे ते गदिते शंभोर्नास्त्यन्यद्वस्तु किंचन ॥ ९ ॥
तयोः कारणभावेन शिवो हि परमेश्वरः ।
उच्यते योगशास्त्रज्ञैः समष्टिव्यष्टिकारणम् ॥ १० ॥
क्षेत्रं क्षेत्रज्ञरूपीति शिवः कैश्चिदुदाहृतम् ।
परमात्मा परं ज्योतिर्भगवान्परमेश्वरः ॥ ११ ॥

१ (ङ. च. ञ.) ०रेऽथ द्वि०। २ (च.) तन्नाऽऽत्मा प०। ३ (क. ख. ध. ङ.) ०ष्टि-
सद्रू०। ४ (क. ख. ग. ङ.) ०र्याः परं शिवम०।

चतुर्विंशतितत्त्वानि क्षेत्रशब्देन सूरयः ।
प्राहुः क्षेत्रज्ञशब्देन भोक्तारं परमेश्वरम् ॥ १२ ॥
न किंचिच्च शिवादन्यदिति प्राहुर्मनीषिणः ।
केचिदेवं प्रशंसन्ति महादेवं मुनीश्वरम् ॥ १३ ॥
वेदार्थतत्त्वविदुषः सम्यक्श्रुत्यनुसारतः ।
प्राणेन प्राणिति ह्यसावपानेन ह्यपानिति ॥ १४ ॥
व्यानेन व्यानिति तथा चोदानेन ह्युदानिति ।
समानिति समानेन मन्वीति मनसा द्विजाः ॥ १५ ॥
बुद्ध्या विचारयत्येष पर एव महेश्वरः ।
समस्तकरणैर्युक्तो वर्ततेऽसौ यदा तदा ॥ १६ ॥
जाग्रदित्युच्यते सद्भिरन्तर्यामी सनातनः ।
यदाऽन्तःकरणैर्युक्तः स्वेच्छया विचरत्यसौ ॥ १७ ॥
सुप्त इत्युच्यते ह्यात्मा स्वयं तापविवर्जितः ।
न बाह्यकरणैर्युक्तो न चान्तःकरणैस्तथा ॥ १८ ॥
सर्वोपाधिविनिर्मुक्तः पुण्यपापविवर्जितः ।
स स्वरूपे सदा ह्यास्ते सुषुप्त इति गीयते ॥ १९ ॥
स्वप्नान्तं चैव बुद्धान्तं विचरत्येष शंकरः ।
नदीतले यथा मत्स्यो गत्वाऽऽगत्य निवर्तते ॥ २० ॥
श्येनो वाऽथ सुपर्णो वा श्रान्तः पर्वतकन्दरे ।
शेते संहृत्य पक्षौ च प्रत्यगात्मा ह्ययं तथा ॥ २१ ॥
जाग्रत्स्वप्नगता भावास्तेषु शान्तो मुहुर्मुहुः ।
संप्रसादं ततः प्राप्य परानन्दमयो भवेत् ॥ २२ ॥
अविद्ययैव सर्वोऽयं व्यवहारः परात्मनः ।
गुणधर्मौ यदि स्यातां सुषुप्तौ रहितः कथम् ॥ २३ ॥
सत्यां निमित्तभूतायामविद्यायां द्विजोत्तमाः ।
बुद्धौ भ्रमन्त्यामात्माऽपि भ्रमतीति जना विदुः ॥ २४ ॥
नित्यः सर्वगतो ह्यात्मा बुद्धिसंनिधिवत्तया ।
यथा यथा भवेद्बुद्धिरात्मा तद्वदिहेष्यते ॥ २५ ॥
विद्याविद्यास्वरूपीति शंकरः कैश्चिदुच्यते ।
धाता विधाता लोकानामादिदेवो महेश्वरः ॥ २६ ॥

१ (क. ख. ग. ङ.) ०श्वराः ॥ १३ ॥ २ (घ. ङ. ज.) ०पापवि० । ३ (ख. ग. ङ.) सत्यः

भ्रान्तिविद्यापरश्चेति शिवरूपमनुत्तमम् ।
अवाप मनसा सोऽयं केचिदागमवेदिनः ॥ २७ ॥
अर्थेषु बहुरूपेषु विज्ञानं भ्रान्तिरुच्यते ।
आत्माकारेण संवित्तिर्बुद्धिर्विद्येति कीर्त्यते ॥ २८ ॥
विकल्परहितं तत्त्वं परमित्यभिधीयते ।
व्यक्ताव्यक्तज्ञरूपीति शिवः कैश्चिन्निगद्यते ॥ २९ ॥
धाता च सर्वलोकानां विधाता परमेश्वरः ।
तयोर्विंशतितत्त्वानि व्यक्तिशब्देन सूरयः ॥ ३० ॥
वदन्ति व्यक्तशब्देन प्रकृतिं च परां तथा ।
कथयन्ति ज्ञशब्देन पुरुषं गुणभोगिनम् ॥ ३१ ॥
तत्र यच्छांकरं रूपं नाव्यक्तं न च शंकरात् ।
यो हेतुस्त्रिगुणस्यापि सर्वस्य प्रकृतेः परः ॥ ३२ ॥
चतुर्विधश्च त्रिविधः स एव भगवाञ्शिवः ।
स एव सर्वभूतात्मा सर्वभूतभवोद्भवः ॥ ३३ ॥
*आस्ते सर्वगतो देवो न च सर्वत्र दृश्यते ।
योगिनामपि यो योगी कारणानां च कारणम् ॥ ३४ ॥
रुद्राणामपि यो रुद्रो देवतानां च देवता ।
ब्रह्माद्या अपि यं देवं न विदन्ति महेश्वरम् ॥ ३५ ॥
यं ज्ञात्वा न पुनर्जन्म मरणं वाऽपि विद्यते ॥ ३६ ॥
यदाऽऽपदो देहभृतां भवन्ति प्राणात्ययप्राप्तिकृतस्तदानीम् ।
विहाय देवं जगदेकबन्धुं शिवं न चान्यः परिहारहेतुः ॥ ३७ ॥
आस्ते शिशुर्वरान्सर्वान्सर्वेषां देहिनां सदा(?) ।
देहभृत्कथ्यते तस्मान्निर्गुणोऽपि महेश्वरः ॥ ३८ ॥
भूयानत्र गतः कालस्तत्रैकं जन्म गच्छतु ।
जिज्ञास्यतामियं तावन्मुक्तिरेकेन जन्मना ॥ ३९ ॥
भक्त्या भगवतः शंभोरिति देवोऽब्रवीद्रविः ।
सकृत्संस्मरणाच्छंभोर्नश्यन्ति क्लेशसंचयाः ॥ ४० ॥
मुक्तिं प्रयाति स्वर्गाप्तिस्तस्य विघ्नोऽनुमीयते ।
तस्मात्तडिल्लतालोलं मानुष्यं प्राप्य दुर्लभम् ॥ ४१ ॥

* कञसंज्ञितपुस्तकयोरयं श्लोको न विद्यते ।

१ (घ. ङ. च. ज.) ०णशोभन० । २ (घ. ङ.) ०तो रुद्रो न । ३ (क. ख. ग. ञ.) ०शुयदवरात्सर्वे० । (ज.) ०शुर्धदवरात्सर्वे० ।

शिवं संपूजयेन्नित्यं भक्तिमात्मोपलब्धये ।
मोहनिद्राप्रसुप्तेऽस्मिन्पशुपाशशताकुले ॥ ४२ ॥
पुरुषाः कृतकृत्यास्ते ये शिवं शरणं गताः ।
पुत्रदारगृहक्षेत्रधनधान्यर्द्धिमेदिनीम् ॥ ४३ ॥
लब्ध्वेमां मा कृथा दर्पं रे रमां क्षणभङ्गुराम् ।
त्यक्त्वा क्रोधं च कामं च लोभं मोहं मदं तथा ॥ ४४ ॥
जना यजध्वमीशानं समीहितफलप्रदम् ।
यावन्नाभ्येति मरणं यावन्नाभ्येति वै जरा ॥ ४५ ॥
यावन्नेन्द्रियवैकल्यं तावदेवार्चयेश्वरम् ।
ये यजन्ति न देवेशं विषयासवमोहिताः ॥ ४६ ॥
शोचन्ते हि मृताः पङ्कलग्ना वनगजा इव ।
कालः संनिहितापायः संपदः पदमापदाम् ॥ ४७ ॥
समागमाः सापगमाः सर्वमुत्पादितं गुरु ।
यजन्ति ये विदित्वैवं लिङ्गमूर्तिमहेश्वरम् ॥ ४८ ॥
लभन्ते विपुलान्कामानिह चामुत्र चाक्षयान् ।
आराधयध्वं विप्रेन्द्राः सर्वज्ञं विश्वतोमुखम् ॥ ४९ ॥
क्षिप्रं यास्यथ तेनैव सायुज्यं नात्र संशयः ।
भक्त्या भवं यजेद्यस्तु महापातकवानपि ॥ ५० ॥
सोऽपि याति परं स्थानं त्रिसप्तपुरुषान्वितः ।
अश्वमेधसहस्राणि राजसूयशतानि च ॥ ५१ ॥
महेशार्चनपुण्यस्य कलां नार्हन्ति षोडशीम् ।
क्रीडन्ति शिशवो यत्र लिङ्गं कृत्वा व्रजन्ति ये ॥ ५२ ॥
सैकतं मृन्मयं वाऽपि ते भवन्त्येव भूभुजः ।
आध्यात्मिकं चाऽऽधिदैवं दुःखं चैवाऽऽधिभौतिकम् ॥ ५३ ॥
देवादीनां विदित्वैवं मोक्षार्थी शिवमर्चयेत् ।
अपारतरपर्यन्ताद्घोरात्संसारसागरात् ॥
महामोहजलात्कामक्रोधग्राहात्सुखोर्मिणः ॥ ५४ ॥
प्राज्ञो वेदान्तविद्योगी निर्ममो निरहंकृतिः ।
एको योगी प्रशान्तात्मा स संतरति नेतरः ॥ ५५ ॥

---

१ ( ख. ग. ) ॰मूर्ति म॰। २ ( ग. ) ॰ज्ञं मर्वतो॰।

दान्तः सुसंयतो ध्यानं निराशो विगतस्पृहः ।
सर्वसङ्गविहीनश्च निर्द्वन्द्वो निरुपप्लवः ॥ ५६ ॥
सर्वकर्मफलत्यागी जडान्धबधिराकृतिः ।
मित्रारिषु समो मैत्रः समस्तेष्वेव जन्तुषु ॥ ५७ ॥
एवं सुदुर्लभो मोक्षो *न स्याद्योगीव तादृशः ।
सर्वे पृथिव्यां पाताले मुक्ताः प्रकृतिजैर्गुणैः ॥ ५८ ॥
एवं सुदुर्लभं ज्ञात्वा मोक्षं हि बहुसाधनम् ।
पूजयध्वं महादेवं कर्मयोगेन चान्यथा ॥ ५९ ॥
कर्म पूजा जपो होमः शंभोर्नामानुकीर्तनम् ।
कर्मयोगाः समाख्याता एतैः पूज्यो महेश्वरः ॥ ६० ॥
यं यं काममभिध्यायेत्तदर्पितमनाः शिवम् ।
संपूज्य तं तमाप्नोति सावित्र्याह यथा पुरा ॥ ६१ ॥
तन्नामजापी तत्कर्मरतिस्तद्गतमानसः ।
निष्कामः पुरुषो विप्राः स रुद्रपदमश्नुते ॥ ६२ ॥
यः सर्वदाऽर्चयेदीशं स रुद्र इव भूतले ।
पापहा सर्वमर्त्यानां दर्शनात्स्पर्शनादपि ॥ ६३ ॥ २४४९ ॥

इति श्रीब्रह्मपुराणोपपुराणे श्रीसौरे सूतशौनकसंवादे शिवमाहात्म्यकथनं नाम षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥

**ऋषय ऊचुः**—पतिव्रता महाभागा सावित्री वरवर्णिनी ।
यदाह तद्वदास्माकं सूत वाक्यविशारद ॥ १ ॥
**सूत उवाच**—स्वर्गे तां शोभनां दृष्ट्वा गुणैः सर्वैरलंकृताम् ।
अरुन्धत्युत्तमा स्त्रीणां पर्यपृच्छच्छुचिस्मिता ॥ २ ॥
शतशः सन्ति सावित्रि देवाः स्वर्गनिवासिनः ।
देवपत्न्यस्तथैवैताः सिद्धाः सिद्धाङ्गनास्तथा ॥ ३ ॥
न तेषामीदृशो गन्धो न कान्तिर्न सरूपता ।
नान्येषां विद्यते शोभा यथा ते पतिना सह ॥ ४ ॥
न चैवाऽऽकल्पजातानि भ्राजन्ते सुरयोषिताम् ।
यथा तव तथा पत्युर्भ्राजन्ते वरवर्णिनि ॥ ५ ॥
नास्ति कान्तिर्विमानानां शक्रादीनां दिवौकसाम् ।
विमानस्यापि ते कान्तिस्तरुणार्कायुतद्युतिः ॥ ६ ॥

* न स्यादित्यादि मोक्षं हीत्यन्तं शब्दजातं कखगङजसंज्ञितपुस्तकेषु नास्ति ।

१ (क. ख. ग. ङ.) ॰र्वकामफ॰। २ (घ.) ह्यत्र लोकम॰।

तपः प्रभावो दानं वा कर्म वा क्रतुविस्तरम्।
युवयोस्तन्ममाऽऽचक्ष्व यथावद्वरवर्णिनि ॥ ७ ॥

**सावित्र्युवाच**—शृणुष्वेतन्महाभागे यत्कृतं पूर्वजन्मनि।
भर्त्रा सह मया भद्रे शंभोरायतने शुभे ॥ ८ ॥
कृतं संमार्जनं भक्त्या गोमयेनोपलेपनम्।
स्वर्गप्राप्तिरियं तस्य कर्मणः फलमुत्तमम् ॥ ९ ॥
तीर्थोदकैः सुगन्धैश्च(?) स्नापितो यदुमापतिः।
तेन कान्तिरतीवैषा देहेऽभूत्रिदशेश्वरि ॥ १० ॥
मनःप्रसादं सौम्यत्वं शारीरी या च निर्वृतिः।
यत्प्रियत्वं च सर्वस्य तद्घृतस्नानजं फलम् ॥ ११ ॥
आह्लादः परमस्वास्थ्यमारोग्यं चारुवेगता।
प्राप्तिश्चाशेषकामानां दधिक्षीरफलं शुभे ॥ १२ ॥
सौगन्ध्यं यत्परं देहे धूपदानस्य यत्फलम्।
गीतैर्नृत्यैस्तथा जाप्यैर्नियमैश्च पृथग्विधैः ॥ १३ ॥
तोषितो भगवानीशस्तस्येयं पुष्टिरुत्तमा।
स्वर्गेप्सुना सत्यवता मया च शुभदर्शने ॥ १४ ॥
कृतमेतदतो न स्यादावयोर्भोगसंक्षयः।
ये निश्चिता नराः सम्यक्पूजयन्ति महेश्वरम् ॥ १५ ॥
तेषां ददाति विश्वेशो देवो मुक्तिं सुदुर्लभाम् ॥ १६ ॥

**सूत उवाच**—सैव मुक्ताऽथ सावित्र्या मुनीन्द्रा हृष्टमानसा।
ब्रह्मस्नुषा शिवेशानौ प्रणिपत्येदमब्रवीत् ॥ १७ ॥

**अरुन्धत्युवाच**—सा पूज्या सा नमस्कार्या सा साध्वी सा पतिव्रता।
या पूजयति सावित्रि सदा हैमवतीपतिम् ॥ १८ ॥
यमाराध्य दितिः पुत्राँल्लेभे शक्रपुरोगमान्।
दितिश्च दैत्यान्विविधान्विनता गरुडारुणौ ॥ १९ ॥
शच्युर्वशीमुखाश्चान्याः संपूज्योमापतिं पुरा।
प्रापुश्चाभिमतान्कामांस्तमीशं को न पूजयेत् ॥ २० ॥
अभिनन्द्याथ तां चैवं वसिष्ठार्धशरीरिणी।
जगाम स्वाश्रमं साध्वी सर्वदेवगणार्चिता ॥ २१ ॥

---

१ (क. ख. ग. ङ.) ०कार्याणां द०। २ (क. ङ.) ०त्रगुणान्विता। (ख. ग.) ०त्रगणान्विता।

एवं समर्च्य गौरीशं श्रद्दधानाश्च योषितः ।
लभन्तेऽभिमतान्भोगान्सावित्र्याह यथा द्विजाः ॥ २२ ॥
ये नराः सकृदप्यत्र पूजयन्ति त्रिलोचनम् ।
ते धन्यास्ते महात्मानस्ते कृतार्थाश्च पण्डिताः ॥ २३ ॥
धर्मार्थकाममोक्षाणां लिङ्गार्चा हेतुरुच्यते ।
सर्वेषां प्राणिनां विप्रा इन्द्रियाणां यथा मनः ॥ २४ ॥
हृत्पद्मकर्णिकावासं तेजोमूर्तिमसङ्गिनम् ।
निर्ममा निरहंकारा ध्यायन्ति ज्ञानिनः सदा ॥ २५ ॥
शैलजं बाणलिङ्गं वा पूजयेद्विधिवत्सदा ।
मृद्दारुघटितं वाऽपि रत्नजं वा गृहाश्रमी ॥ २६ ॥
साम्राज्यं मनुजैः कैश्चित्स्वाराज्यं च तथा परैः ।
तथा वैराज्यमन्यैश्च लिङ्गमिष्ट्वा तदैश्वरम् ॥ २७ ॥
शोचन्ते ते परं हीना अभाग्याश्च दिने दिने ।
प्रमादेनापि यैर्नोक्तं शिव इत्यक्षरद्वयम् ॥ २८ ॥
संपूज्ये सर्वसामान्ये स्वाराध्ये सर्वकामदे ।
भवेऽपि सति सीदन्ति भाविनो यत्तदद्भुतम् ॥ २९ ॥
उपसर्गाः क्षयं यान्ति च्छिद्यन्ते विघ्नपल्लवाः ।
मनः प्रसन्नतां याति पूज्यमाने महेश्वरे ॥ ३० ॥
पूजिते सर्वदेवेशे सर्वदेवनमस्कृते ।
पूजिताः सर्वदेवाः स्युर्यतोऽसौ सर्वगो विभुः ॥ ३१ ॥
शिवार्चनरतो नित्यं महापातकसंभवैः ।
दोषैर्न लिप्यते विद्वान्पद्मपत्रमिवाम्भसा ॥ ३२ ॥
किमत्र शास्त्रमालाभिः संक्षेपेणोपदिश्यते ।
व्यापारान्सकलांस्त्यक्त्वा पूजयध्वं महेश्वरम् ॥ ३३ ॥
निकटा एव दृश्यन्ते कृतान्तनगरद्रुमाः ।
शिवं स्मर शिवं ध्याय शिवं चिन्तय सर्वदा ॥ ३४ ॥
किं वेदैः किमु वा शास्त्रैः किं वा तीर्थादिसेवया ।
शिवः संपूज्यतां नित्यमुपदेशोऽयमुत्तमः ॥ ३५ ॥

---

१ ( क. ख. ग. ङ. ) एवमभ्यर्च्य । २ ( क. ख. ग. ङ. ) ०तान्कामान्सा० । ३ ( घ. ङ. ) ०द्विविधैः स्तवैः । ४ ( च. ) ०ष्ट्वा स्तवै० । ५ ( क. ख. ग. ङ. ) ०शे देवासुरन० । ६ ( घ. ङ. ) किंतु वा ।

अयमेव परोधर्मश्चीर्णमेतत्परं तपः ।
इदमेवाखिलं ज्ञानं पूजनं यन्महेशितुः ॥ ३६ ॥
शिवे दत्तं हुतं जप्तं बलिपूजानिवेदितम् ।
एकान्ततोऽत्यन्तफलं तद्भवेन्नात्र संशयः ॥ ३७ ॥
कर्मभूमौ हि मानुष्यं जन्मनां नियुतैरपि ।
स्वर्गापवर्गफलदं कदाचित्प्राप्यते नरैः ॥ ३८ ॥
तदीदृग्दुर्लभं प्राप्य नार्चयन्ति ह ये शिवम् ।
तेषां हि हस्ते मूर्खाणां विवेकः कुत्र तिष्ठति ॥ ३९ ॥
आराधितो हि यः पुंसामैहिकामुष्मिकं फलम् ।
ददाति भगवाञ्शंभुः कस्तं न प्रतिपूजयेत् ॥ ४० ॥
यो यमिच्छति विप्रेन्द्राः समाराध्य महेश्वरम् ।
निःसंशयं तमाप्नोति पुरा वैश्रवणो यथा ॥ ४१ ॥
दृष्टः संपूजितो ध्यातः संस्मृतो वा स्तुतोऽपि वा ।
यो ददाति नृणां मुक्तिं तस्मात्कैर्नार्च्यते शिवः ॥ ४२ ॥
श्वपचोऽपि मुनिश्रेष्ठाः शिवभक्तो द्विजाधिकः ।
शिवभक्तिविहीनस्तु द्विजोऽपि श्वपचाधमः ॥ ४३ ॥
यद्वा तद्वा शिवे कर्म पुमान्कृत्वा शिवालये ।
लोभात्सङ्गात्प्रमादाद्वा पृथिव्यामेकराड्भवेत् ॥ ४४ ॥

**ऋषय ऊचुः**—कथं वैश्रवणः पूर्वं समाराध्य महेश्वरम् ।
लब्धं तस्मात्कुबेरत्वं सूत तद्वक्तुमर्हसि ॥ ४५ ॥

**सूत उवाच**—शृणुध्वमृषयः सर्वे[1] यदुक्तं सप्तमेऽन्तरे ।
माहात्म्यसूचनकथा शिवस्य परमेष्ठिनः ॥ ४६ ॥
कश्चिदासीद्द्विजोऽवन्त्यां सोमशर्मेति[2] विश्रुतः ।
पुत्रक्षेत्रकलत्रादिव्यापारेषु रतः सदा ॥ ४७ ॥
विहायाथ स गार्हस्थ्यं धनार्थं लोभमोहितः ।
प्रचचार महीं सर्वां सग्रामपुरपत्तनाम् ॥ ४८ ॥
भार्या तस्य विशालाक्षी तस्मिन्गेहाद्विनिर्गते[3] ।
स्वच्छन्दचारिणी नित्यं बभूवानङ्गमोहिता ॥ ४९ ॥
तस्याः कदाचित्पुत्रस्तु शूद्राज्जातो विधेर्वशात् ।
दुरात्माऽतीव निर्गूढो नाम्ना दुःसह इत्युत ॥ ५० ॥

---

१ (घ.) ०णुध्वं मुनयः । २ (क. ख. ग. ङ.) ०ति वै श्रु० । ३ (च.) तस्माद्गेहाद्विनिर्गता ।

सोऽथ कालेन महता व्यसनोपप्लुतोऽभवत् ।
सर्वैर्बन्धुजनैस्त्यक्तः परिपन्थिपथे स्थितः ॥ ५१ ॥
पूजोपकरणद्रव्यं स कस्मिंश्चिच्छिवालये ।
रजन्यां प्रविवेशाथ व्यसनेन प्रपीडितः ॥ ५२ ॥
यावद्दीपो गतप्रायो वर्तिच्छेदोऽभवत्किल ।
तावत्तेन दशा दत्ता द्रव्यान्वेषणकारणात् ॥ ५३ ॥
प्रबुद्धश्चोच्छ्रितस्तत्र देवपूजाकरो नरः ।
कोऽयं कोऽयमिति प्रोच्चैर्व्याहरन्परिघायुधः ॥ ५४ ॥
स च प्राणभयान्नष्टो वित्रस्तश्चापि मूढधीः ।
न विन्दन्नात्मनो जन्म कर्म वाऽपि सुदुःखितः ॥ ५५ ॥
पुरपालैर्हतोऽवन्त्यां मृतः कालादभूत्ततः ।
गान्धारविषये राजा ख्यातो नाम्ना सुदुर्मुखः ॥ ५६ ॥
गीतवाद्यरतः स्तब्धो वेश्यापानरुचिर्भृशम् ।
प्रजोपद्रवकृन्मूर्खः सर्वधर्मबहिष्कृतः ॥ ५७ ॥
किं त्वर्चयत्यसौ नित्यं लिङ्गं राज्यक्रमागतम् ।
पुष्पधूपसुनैवेद्यगन्धादिभिरमन्त्रवित् ॥ ५८ ॥
स्मरन्वै पौर्विकं कर्म शिवस्याऽऽयतनेषु च ।
ददाति बहुशो दीपान्वर्तितैलसमुज्ज्वलान् ॥ ५९ ॥
कदाचिन्मृगयासक्तो ममाराथ स वीर्यवान् ।
पूर्वारिभिर्हतो युद्ध ऐरावत्यास्तटे शुभे ॥ ६० ॥
शिवपूजाप्रभावेन विध्वस्ताशेषकिल्बिषः ।
पुत्रो विश्रवसश्चाभूत्सर्वयक्षाधिपो बली ॥ ६१ ॥
कुबेर इति धर्मात्मा श्रुतिशास्त्रसमन्वितः ।
संपूज्याथ स चेशानं विधिवत्स्वर्धुनीतटे ॥
स्तोत्रेणानेन तुष्टाव भक्त्या तं सर्वकामदम् ॥ ६२ ॥

**कुबेर उवाच**—नमाम्यहं देवमजं पुराणमुपेन्द्रवेधोमरराजजुष्टम् ।
शशाङ्कसूर्याग्निसमाननेत्रं वृषेन्द्रचिह्नं विलयादिहेतुम् ॥ ६३ ॥
सर्वेश्वरैकं त्रिदशैकबन्धुं ध्यानाधिगम्यं जगतोऽधिवासम् ।
तं वाङ्मयाधारमनन्तशक्तिं ज्ञानार्णवं स्थैर्यगुणाकरं च ॥ ६४ ॥

---

१ (घ.) ०ङ्गो भवेत्कि०। २ (ङ.) ०न्मूढः स०। ३ (घ. ङ.) ततः शिवप्र०। ४ (क. ख. ग. झ.) श्रुतशीलस०।

पिनाकपाशाङ्कुशशूलहस्तं कपर्दिनं मेघसहस्रघोषम् ।
सकालकूटं स्फटिकावभासं नमामि शंभुं भुवनैकनाथम् ॥ ६५ ॥
कपालिनं मालिनमादिदेवं जटाधरं भीमभुजंगहारम् ।
प्रशासितारं च सहस्रमूर्तिं सहस्रशीर्षं पुरुषं वरिष्ठम् ॥ ६६ ॥
येमक्षरं निर्गुणमप्रमेयं तं ज्योतिरेकं प्रवदन्ति सन्तः ।
दूरंगमं वेदविदां च वन्द्यं सर्वस्य हृत्स्थं परमं पवित्रम् ॥६७॥
तेजोनिधिं बालमृगाङ्कमौलिं नमामि रुद्रं स्फुरदुग्रवक्त्रम् ।
कालेन्धनं कामदमस्तसङ्गं धर्मासनस्थं प्रकृतिद्वयस्थम् ॥ ६८ ॥
अतीन्द्रियं विश्वभुजं जितारिं गुणत्रयातीतमजं निरीहम् ।
मनोमयं वेदमयं च हंसं प्रजापतीशं पुरुहूतमिन्द्रम् ॥ ६९ ॥
अनाहतैकध्वनिरूपमाद्यं ध्यायन्ति यं योगविदो यतीन्द्राः ।
संसारपाशच्छिदुरं विमुक्त्यै पुनः पुनस्तं प्रणमामि नित्यम् ॥७०॥
न यस्य रूपं न बलप्रभावो न च स्वभावः परमस्य पुंसः ।
विज्ञायते विष्णुपितामहाद्यैस्तं वामदेवं प्रणमाम्यचिन्त्यम् ॥७१॥
शिवं समाराध्य यमुग्रमूर्तिं पपौ समुद्रं भगवानगस्त्यः ।
लेभे दिलीपोऽप्यखिलां स चोर्वीं तं विश्वयोनिं शरणं प्रपद्ये ॥७२॥
संपूजयन्तो दिवि देवसंघा ब्रह्मेन्द्रमुख्या विविधांश्च कामान् ।
तं स्तौमि नौमीह जपामि शर्वं वन्देऽभिवन्द्यं शरणं प्रपद्ये ॥ ७३ ॥
स्तुत्वैवमीशं विरराम यावत्तावत्सहस्रार्कसमानतेजाः ।
ददौ स तस्मै वरदोऽन्धकारिर्वरत्रयं वैश्रवणाय देवः ॥ ७४ ॥
कृत्वाऽधिराजं च ततस्त्रिनेत्रो यशस्विनं गुह्यकराजमत्र ।
ब्रह्माच्युतेन्द्रादिनताङ्घ्रिपद्मो जगाम कैलासममोघवाक्यः ॥ ७५ ॥
सख्यं च दिक्पालपदं चतुर्थं धनाधिपत्यं च दिवौकसां सः ।
तथाऽधिकं चैतदनिन्द्यकीर्तिः सुखी बभूवाप्रतिमप्रभावः ॥ ७६ ॥
दोषाचरेन्द्रश्च तथा दशास्यः संपूज्य दोषाकरचारुमौलिम् ।
दोषाकरश्चाप्यजितेन्द्रियश्च मुक्तिं स लेभेऽस्तसमस्तदोषः ॥ ७७ ॥
स्वर्गस्य मार्गा बहवः प्रदिष्टास्ते कृच्छ्रसाध्या बहवः सविघ्नाः ।
निमेषमात्रेण महाफलोऽयमृजुश्च पन्थाः स्मरणं पुरारेः ॥ ७८ ॥
दृष्टं तदेवाद्भुतमत्र मर्त्या माहात्म्यमैशं ससुरासुराश्च ।
त्यक्त्वाऽऽत्मयोगं च मखक्रियाश्च यजन्त्यतस्त्र्यम्बकमेव सर्वे ॥ ७९ ॥

१ (ङ. ज.) यदक्ष०। २ (ङ. ज.) ०यं तज्ज्योति०। ३ (च.) ०जोमयं बा०। ४ (घ. ङ. च. छ. ज.) ०धिकां वै त०। ५ (ज.) ०प्रतापः ॥ ७६ ॥ ६ (घ. ङ. ज.) मखं क्रि०।

गायन्ति देवाः किल गीतकानि धन्यास्तु ये भारतभूमिभागे ।
स्वर्गापवर्गास्पदमार्गभूते भवन्ति भूयः पुरुषाः सुरत्वात् ॥ ८० ॥
कर्माण्यसंकल्पिततत्फलानि संन्यस्य रुद्रे परमात्मरूपे ।
अवाप्य ते कर्ममहीमनन्ते तस्मिँल्लयं ये त्वमलाः प्रयान्ति ॥ ८१ ॥
जानीय(?) नैतद्धि कदा विलीने शुभप्रदे कर्मणि देहबन्धः ।
प्रासाम खण्डे किल भारताख्ये कुलेऽकलङ्के शिवधर्मनिष्ठाः ॥ ८२ ॥
स्तोत्रेण येऽपि क्वचिदत्र भक्ताः प्रसंस्तुवन्ति प्रमथैकनाथम् ।
प्रयान्ति ते लोकमिहान्धकारेः पुरंदरोद्गीतमहाप्रभावाः ॥८३॥

**सूत उवाच**–एवं वैश्रवणो जातो महादेवप्रसादतः ।
सर्वमेतदशेषेण कथितं मुनिपुङ्गवाः ॥ ८४ ॥
*यः पठेच्छृणुयाद्वाऽपि सर्वपापैः प्रमुच्यते ।
ब्रह्मलोके वसेत्कल्पमिति देवोऽब्रवीद्रविः ॥ ८५ ॥ २५३४ ॥

इति श्रीब्रह्मपुराणोपपुराणे श्रीसौरे सूतशौनकसंवादेऽरुन्धती-सावित्रीसंवादादिकथनं नाम सप्तचत्वारिंशोऽध्यायः ॥४७॥

**सूत उवाच**–पुनर्वक्ष्यामि माहात्म्यं देवदेवस्य शूलिनः ।
पठतां शृण्वतां सद्योऽघानि हन्ति बहून्यपि ॥ १ ॥
जितारीन्द्रियषड्वर्गा योगिनोऽप्यनहंकृताः ।
यजन्ति ज्ञानयोगेन शिवमात्मस्वरूपिणम् ॥ २ ॥
तीर्थोदकैर्विशुद्धा ये दानयज्ञतपोव्रतैः ।
ते यजन्ति महेशानं कर्मयोगेन साधवः ॥ ३ ॥
लुब्धा व्यसनिनोऽज्ञाश्च न यजन्ति जगत्पतिम् ।
अजरामरवन्मूढास्तिष्ठन्ति नरकीटकाः ॥ ४ ॥
शिवधर्मरताः शान्ताः शिवशास्त्ररताः सदा ।
दैवात्केऽपीह जायन्ते पृथिव्यां पुरुषोत्तमाः ॥ ५ ॥
रूपं न शक्यते तस्य संस्थानं वा कदाचन ।
निर्देष्टुं प्राणिभिः कैश्चिद्द्रष्टुं वाऽप्यकृतात्मभिः ॥ ६ ॥
क्रियतां मद्वचः कर्णे शिवे त्वात्मा नियुज्यताम् ।
आदीप्ते भवने कूपं खनितुं नैव शक्यते ॥ ७ ॥

* घङचसंज्ञितपुस्तकेष्वयं श्लोको न विद्यते ।

१ ( घ. ङ. च. ) ०यं ते त्व०। २ ( घ. ) क्रिमु भा०। ३ ( च. ) भक्त्या प्र०। ( घ. ङ. च. ) ०का भव्रं स्तु०। ४ ( घ. ङ. च. ज. ) प्रथमैक०। ५ ( क. ख. ग. घ. ज. झ. ) ०कवरेऽन्धप०

सत्यं वच्मि हितं वच्मि सारं वच्मि पुनः पुनः।
असारे दग्धसंसारे सारं यच्छिवपूजनम् ॥ ८ ॥
तदस्य दग्धसंसारग्रन्थेरत्यन्तदुर्भिदः।
परं निर्मूलविच्छेदि क्रियतां तद्भवार्चनम् ॥ ९ ॥
मनस्तद्विद्धि कर्मज्ञं शंकरे यत्प्रवर्तते।
सा वाणी वाक्पतिं शंभुं या स्तौत्यच्युतमच्युता ॥ १० ॥
श्रवणौ तौ श्रुतौ याभ्यां श्रूयन्ते तत्कथाः शुभाः।
पादौ तौ सफलौ पुंसां शिवायतनगामिनौ ॥ ११ ॥
ते च नेत्रे शुभायालं याभ्यां संदृश्यते शिवः।
सफलौ तौ स्मृतौ विप्रास्तत्पूजाकारिणौ करौ ॥ १२ ॥
*तदेव सफलं कर्म शिवमुद्दिश्य यत्कृतम्।
सेयं लक्ष्मीः परा पुंसां सेयं भक्तिः समीहिता ॥ १३ ॥
श्रेयाञ्श्रेयस्करी[१] भक्तिर्मुक्तेर्या गिरिजापतेः।
रिपवस्तं न हिंसन्ति न च खादन्ति राक्षसाः ॥ १४ ॥
न दंशन्ति च नागेन्द्रा नरं रुद्रपरायणम्।
विपाक[४]कटुकान्रम्यान्विषयान्विषसंनिभान् ॥
संत्यज्याऽऽराधयेद्देवं शंकरं लोकशंकरम् ॥ १५ ॥
अहिंसा सत्यमस्तेयं दया भूतेष्वनुग्रहः।
यस्यैतानि सदा विप्रास्तस्य तुष्यति शंकरः ॥ १६ ॥
[५]दृष्ट्वा संपूजितं लिङ्गं भक्त्या यश्चाभिनन्दति।
तूर्यत्रिकं वा यः कुर्यात्तस्य तुष्यति शंकरः ॥ १७ ॥
†वाङ्मनःकायकर्मेच्छा यस्य भक्तिर्महेश्वरे।
व्यसनोपहतस्यापि तस्य तुष्यति शंकरः ॥ १८ ॥
यथा द्विजा हस्तिपदे पदानि संलीयन्ते सर्वसत्त्वोद्भवानि।
एवं धर्माः शिवधर्मे[२] तु सर्वे संलीयन्ते नात्र चित्रं मुनीन्द्राः ॥ १९ ॥
अल्पाश्रयानल्पफलांस्त्वरांश्च धर्मानन्यान्प्राहुरिह द्विजेन्द्राः।
महाश्रयं बहुकल्याणरूपं वदन्ति सन्तः शिवधर्ममेकम् ॥ २० ॥

---

*घङचसंज्ञितपुस्तकेष्वयं श्लोको न विद्यते।
† घङचसंज्ञितपुस्तकेष्वयं श्लोको न विद्यते।

---

१ (क. ख. ग. झ.) यच्छंभुपू०। २ (घ. ङ. च. ज.) ०द्धिधर्मे०। ३ (क. ख. ग. ज.) ०री मुक्तिभक्तिर्या गिरिजापतौ ४ (घ. ङ.) ०पाके क०। ५ (घ. ङ. च. ज.) दृष्ट्वा।

सर्वे वर्णा देवदेवस्य शंभोः पूजां कृत्वा सत्यवाक्यानि चोक्त्वा ।
त्यक्त्वा धर्मं दारुणं मृत्युलोके यान्ति स्वर्गं नात्र कार्यो विचारः ॥२१॥
ये वामदेवं हि यजन्ति नित्यं सद्वृत्तशीलाः किल लिङ्गमूर्तिम् ।
ते ध्वस्तदोषा हि भवन्ति मर्त्या भवाम्बुराशिं विषमं तरन्ति ते ॥२२॥
तैरिष्टं विविधैर्यज्ञैर्देवर्षिपितृमानवाः ।
तर्पिताः स्युर्जगद्धेतुर्यैरिष्टो भगवान्भवः ॥ २३ ॥
पर्वतान्दश यद्दत्वा महादानानि षोडश ।
धेनूश्च दश यद्दत्वा तद्दृष्ट्वा लिङ्गमाप्नुयात् ॥ २४ ॥
शिवभक्तो न यो राजा भक्तोऽन्येषु सुरेषु सः ।
स्वपत्नीं युवतीं त्यक्त्वा यथैवान्यासु रज्यते ॥ २५ ॥
व्याजेनापि हि ये कुर्युः किंचित्कर्म शिवालये ।
न ते यान्तीह नरकं पापात्मानोऽपि मानवाः ॥ २६ ॥
संमार्जनादिकर्तारो मार्गशोभाकराश्च ये ।
तेऽवश्यं पृथिवीपाला भवन्ति त्रिदशोपमाः ॥ २७ ॥
अस्मिन्नर्थे पुरा वृत्तं तच्छृणुध्वं द्विजोत्तमाः ।
यच्छ्रुत्वा प्राणिनः प्रायो न मोहमुपयान्ति ते ॥ २८ ॥
स्वायंभुवेऽन्तरे त्वासीद्राजा परमधार्मिकः ।
पञ्चालविषये विप्रा नरवर्मेति विश्रुतः ॥ २९ ॥
दैवमन्त्रविदुत्साहशक्तियुक्तः प्रतापवान् ।
षाड्गुण्यविन्महासत्त्वः स्मितपूर्वाभिभाषितः ॥ ३० ॥
तस्य भार्यासहस्राणां दर्शनीयतमाकृतिः ।
दशानामग्रमहिषी सुदेवीत्यभिविश्रुता ॥ ३१ ॥
सर्वलक्षणसंपन्ना शचीव वरवर्णिनी ।
भर्तुश्चापि प्रिया साध्वी चन्द्रकान्तिसमप्रभा ॥ ३२ ॥
*करोति प्रत्यहं राज्ञी भूमिसंमार्जनादिभिः ।
द्वारशोभां मार्गशोभां शिवस्याऽऽयतने शुभे ॥ ३३ ॥

---

* घङच्छसंज्ञितपुस्तकेष्वयं श्लोको नास्ति ।

---

१ (घ. ङ. च.) ०णं सत्यलो० । (ज.) णं मर्त्यलो० । २ (क. ख. ग. ज. झ.) ०स्तदुःख हि । ३ (क. ख. ग. झ.) ०पु यः ।

तां तथाऽभिरतां दृष्ट्वा तस्य राज्ञः पुरोहितः ।
पप्रच्छेदं स तन्वङ्गीं गालवो रहसि स्थिताम् ॥ ३४ ॥
ब्रूहि सुभ्रु महाभागे किमर्थं हरमन्दिरे ।
संमार्जनरता नित्यमन्यकर्मपराङ्मुखी ॥ ३५ ॥
सैवमुक्ता तदा तेन मुनिना विनयान्विता ।
प्रहस्याऽऽह विशालाक्षी मुनीन्द्रं गालवं प्रति ॥ ३६ ॥
न मेऽन्यत्र परा भक्तिर्यथा संमार्जनादिषु ।
तवाहं कथयिष्यामि पुरा कर्म कृतं मया ॥ ३७ ॥
पूर्वमासमहं गृध्री पक्षिणी व्योमचारिणी ।
कदाचिद्भ्रममाणा तु गता किष्किन्धपर्वतम् ॥ ३८ ॥
सिद्धविद्याधराकीर्णं हेमकूटमिवापरम् ।
आश्चर्यवन्निराबाधं खलिङ्गं यत्र तिष्ठति ॥ ३९ ॥
यस्य संदर्शनादेव स्वर्गं यान्ति मनीषिणः ।
संपूज्याथ तमेवेशं पुष्पैर्धूपाक्षतादिभिः ॥ ४० ॥
न्यस्तं केनापि तत्पार्श्वे नैवेद्यं यत्तदैव हि ।
तदादातुं समागत्य लिङ्गं कृत्वा प्रदक्षिणम् ॥ ४१ ॥
क्षुधार्ताऽहं महाभाग नैवेद्ये तु कृतोद्यमा ।
क्रमात्तन्नाग्रहीद्विप्र पक्षाभ्यां पांशुमार्जनम् ॥ ४२ ॥
कृतं देवस्य पुरतो दैवयोगात्क्षणात्ततः ।
तावत्तत्र समायातस्तस्य देवस्य पूजकः ॥ ४३ ॥
उद्गताऽहं ततः कालान्मृता जाता वसोर्गृहे ।
नृवर्मणे च तेनाहं प्रदत्ता प्रथमा वधूः ॥ ४४ ॥
दशराज्ञीसहस्राणामुत्तमा तत्प्रभावतः ।
मान्या च दयिता राज्ञः पुत्रपौत्रसमन्विता ॥ ४५ ॥
अकामादीश्वरागारे कृत्वैवं पांशुमार्जनम् ।
दुहिताऽहं वसोर्जाता राज्ञो जातिस्मरा तथा ॥ ४६ ॥
कामात्संमार्जनं कृत्वा भविष्यामि न वेद्मि बत् ।
एवमुक्तस्तया राज्या प्रहृष्टस्तामथाब्रवीत् ॥ ४७ ॥
समाराध्य सुरेशानं सर्वदं त्रिपुरान्तकम् ।
किमाश्चर्यं गुणावासे यदेतत्प्राप्तवत्यसि ॥ ४८ ॥

---

१ (घ. ङ. च.) °न्विद्रम°।

चक्षुषा प्रेक्षणं चैव नमनं च प्रदक्षिणम् ।
लिङ्गमूर्तेः शिवस्यैव राज्यावाप्तिकरं स्मृतम् ॥ ४९ ॥
जातिस्मरत्वमैश्वर्यं विद्याज्ञानं प्रजासुखम् ।
अज्ञानाद्वा भयाद्वाऽपि दृष्ट्वैवेह महेश्वरम् ॥ ५० ॥
नाम्नाऽपि नरकच्छेदः स्मरणाद्वैबुधं पदम् ।
पूजनाद्यस्य निर्वाणं तमीशं को न संश्रयेत् ॥ ५१ ॥
फलं प्रसादाज्जायेत ध्रुवं कालेन देहिनाम् ।
अर्थिनां त्वखिलान्कामान्सद्यः फलति शंकरः ॥ ५२ ॥
शाठ्येनापि नरा नित्यं ये स्मरन्ति महेश्वरम् ।
तेऽपि यान्ति तनुं त्यक्त्वा शिवलोकमनामयम् ॥ ५३ ॥
चराचरगुरोरस्य शंभोरमिततेजसः ।
न कृता यैर्दृढा भक्तिर्वञ्चितास्ते स्फुटं जनाः ॥ ५४ ॥
प्रमादेनापि यैः क्वापि प्रणामः शूलिनः कृतः ।
कल्पान्तेऽपि भवग्रन्थिर्न तेषां जायते पुनः ॥ ५५ ॥
तावद्भ्रमन्ति संसारे शोकमोहपरायणाः ।
नार्चयन्ति विरूपाक्षं यावदेव शरीरिणः ॥ ५६ ॥
इतिहासपुराणादिशिवपुस्तकवाचनम् ।
ये कुर्युः सकृदप्येवं भक्त्या शृण्वन्ति ये नराः ॥ ५७ ॥
व्रतोपवासदानेषु तीर्थस्नानेषु यत्फलम् ।
तत्तेषां स्यान्न संदेह इत्याह परमेश्वरः ॥ ५८ ॥
विनष्टलोभा विषयेषु निस्पृहाः प्रसन्नचित्ताश्च शिवार्चनोद्यताः ।
व्रजन्ति शंभोः परमं सनातनं निरामयं यत्प्रवदन्ति सूरयः ॥ ५९ ॥
कुलं पवित्रं पितरः समुद्धृता वसुंधरा तेन च पाविता द्विजाः ।
सनातनोऽनादिरनन्तविग्रहो हृदि स्थितो यस्य सदैव शंकरः ॥६०॥२५९४॥

इति श्रीब्रह्मपुराणोपपुराणे श्रीसौरे सूतशौनकसंवादे सुदेष्णुपाख्यानं नामाष्टाचत्वारिंशोऽध्यायः ॥ ४८ ॥

**ऋषय ऊचुः**–पार्वत्याः श्रोतुमिच्छामो माहात्म्यं रोमहर्षण ।
जघान सा यथा दैत्यान्रक्तासुरपुरोगमान् ॥ १ ॥
**सूत उवाच**–प्रणिपत्य महादेवीं शंकरार्धशरीरिणीम् ।
महेन्द्राणीश्वरनुतां भक्तानुग्रहकारिणीम् ॥ २ ॥

१ (क. ख. ग. ङ.) ०पि कल्मषच्छे०। २ (च. ज.) ०रोर्यस्य। ३ (क. ख. ग. ङ.)

एकाक्षरीति विख्याता ब्राह्मी दाक्षायणीति या ।
उमा हैमवती दुर्गा सती माता महेश्वरी ॥ ३ ॥
आर्याऽम्बिका मृडानी च चण्डी नारायणी शिवा ।
महालक्ष्मीर्जगन्माता कालिका मेनकात्मजा ॥ ४ ॥
नानारूपधरा सैवमवतीर्यैव पार्वती ।
धर्मसंस्थापनार्थाय निघ्नन्ती दैत्यदानवान् ॥ ५ ॥
परमात्मा यथा रुद्र एकोऽपि बहुधा स्थितः ।
प्रयोजनवशाद्देवी सैकाऽपि बहुधा भवेत् ॥ ६ ॥
आसीद्रक्तासुरो नाम महिषस्य सुतो बली ।
महामायो महाबाहुर्हिरण्याक्ष इवापरः ॥ ७ ॥
स विजित्य सुरान्सर्वान्विष्ण्वन्द्राग्निपुरोगमान् ।
त्रैलोक्येऽस्मिन्निरातङ्कश्चक्रे राज्यं प्रतापवान् ॥ ८ ॥
तस्यैते मन्त्रिणश्चासन्रुद्रात्मानो मदोत्कटाः ।
*त्रयस्त्रिंशद्द्विजश्रेष्ठाः सहस्राक्षौहिणीयुताः ॥ ९ ॥
सिंहस्कन्धा महाकाया दुरात्मानो महाबलाः ।
धूम्राक्षो भीमदंष्ट्रश्च कालपाशो महाहनुः ॥ १० ॥
ब्रह्मघ्नो यज्ञकोपश्च स्त्रीघ्नो बालघ्न एव च ।
†विद्युन्माली च बन्धूकः शङ्कुकर्णो विभावसुः ॥ ११ ॥
देवान्तको विधर्मश्च दुर्भिक्षः क्रूर एव च ।
हयग्रीवोऽश्वकर्णश्च केतुमान्वृषभो गजः ॥ १२ ॥
शलभः शरभो व्याघ्रो निकुम्भो मणिको बकः ।
सूर्यको विक्षुरो माली कालो दण्डश्च केरलः ॥ १३ ॥
स कदाचित्समासीनो दैत्यकोटिसमावृतः ।
सदस्यथाब्रवीद्दैत्यान्दानवान्सनरांस्तथा ॥ १४ ॥
मां यजध्वं स्तुवध्वं च पूज्योऽहं भवतां सदा ।
यस्तु देवान्समातिष्ठेत्स गच्छेद्वध्यतां मम ॥ १५ ॥

* घङसंज्ञितपुस्तकयोर्मध्ये त्रयस्त्रिंशादित्यारभ्य महाबला इत्यन्तं शब्दजातं नास्ति ।

† झसंज्ञितपुस्तके विद्युन्मालीत्यारभ्य एव चेत्यन्तं शब्दजातं नास्ति ।

१ (च. ज.) ०धाऽभवत् ॥ ६ ॥ २ (घ. ङ. च. ज.) केवलः ॥ १३ ॥

दानयज्ञोपवासांश्च त्यक्त्वा देवर्षिदर्शितान् ।
प्रत्यक्षसौख्यान्भुञ्जीध्वं यथेष्टं सुरयोषितः ॥ १६ ॥
इति दैत्येन्द्रवाक्येन नष्टा यज्ञक्रियास्ततः ।
नाधीयन्ते तदा [1]वेदा न पूज्यन्ते च देवताः ॥ १७ ॥
उत्सवा न प्रवर्तन्ते सर्वमासीत्तदाऽऽसुरम् ।
धर्महीनस्ततो लोको म्लेच्छाकुल इवाभवत् ॥ १८ ॥
धर्मनाशात्सुरेन्द्रस्य बलहानिरजायत ।
ज्ञात्वा हीनबलं शक्रं दानवास्तं समाद्रवन् ॥ १९ ॥
सोऽभिभूतोऽसुरैर्गाढं त्यक्त्वा राज्यं च देवराट् ।
बृहस्पतिमुपागम्य वाक्यमेतदुवाच ह ॥ २० ॥
रक्तासुराभ्यनुज्ञाता दैत्याः कोटिसहस्रशः ।
आबाधन्ते स्म सर्वत्र मद्वधार्थं न संशयः ॥ २१ ॥
न स्थातुमत्र शक्नोमि न गन्तुं तैस्त्वभिद्रुतः ।
सर्वथा योद्धुमिच्छामि यद्भाव्यं तद्भविष्यति ॥ २२ ॥
नश्यतो युध्यतो वाऽपि तावद्भवति जीवितम् ।
यावत्प्रमार्ष्टि न विधिर्भालेऽस्य लिखिताक्षरम् ॥ २३ ॥
जयमाशंस मे ब्रह्मन्योत्स्येऽहमरिभिः सह ।
मुहूर्तं ज्वलितं श्रेयो न तु धूमायितं चिरम् ॥ २४ ॥
धिक्तस्य जीवितं पुंसः शत्रूणामाततायिनाम् ।
अपकर्तुमशक्तो यो जीवामीत्यधिगच्छति ॥ २५ ॥
कर्मायत्तं किलैश्वर्यं ममायत्तं च पौरुषम् ।
तस्माद्युद्धं करिष्यामि ध्रुवं श्रेयो भविष्यति ॥ २६ ॥
श्रुत्वैवं मघवद्वाक्यं वाचस्पतिरथाब्रवीत् ।
न कालो विग्रहस्याद्य किं कोपेन शचीपते ॥ २७ ॥
न च खेदस्त्वया कार्यः कार्याणां गतिरीदृशी ।
दैवाद्भवन्ति भूतानां संपदो विपदोऽपि वा ॥ २८ ॥
स्वशक्तिं परशक्तिं च षाड्गुण्यविदुदारधीः ।
देशकालैर्बलोपेयाञ्ज्ञात्वा विग्रहमाचरेत् ॥ २९ ॥
देशकालविहीनानि कर्माणि विपरीतवत् ।
क्रियमाणानि दुष्यन्ति हविरप्रयतेष्विव ॥ ३० ॥

१ ( क. ख. ग. झ. ) वेदाः पूज्यन्ते न च । २ ( क. ख. ग. ज. झ. ) °धाग्राधुना विभो ॥ २१ ॥ ३ ( घ. ङ. च. ज. ) °लवयोर्विद्वाञ्ज्ञा° ।

सम्यग्विज्ञातशास्त्रार्थो राजा विजयमाचरेत्।
सप्ताङ्गराज्यत्राणं च बुद्ध्वा वाऽरिविनिग्रहम्॥ ३१॥
कुर्यादेवान्यथा नाशमुपयाति शचीपते।
विश्वासयति भूतानि न च विश्वसते क्वचित्॥ ३२॥
छिद्रेषु योऽन्वियाच्छत्रुं स राज्यं महदश्नुते।
सांप्रतं बद्धमूलोऽसौ त्वं दैवानवलोकितः॥ ३३॥
अतो युद्धावकाशं ते न पश्यामि शतक्रतो।
मत्सहायाश्च ये शूराः शक्तिमन्तो निरुत्सुकाः॥ ३४॥
दुर्धर्षानपि ते शत्रूञ्जयन्त्येव सदा नृपाः।
पुरोधसैवमुक्तस्तु पुनराह पुरंदरः॥ ३५॥
अभिभूतो भृशं दैत्यैर्नाहं जीवितुमुत्सहे।
शत्रुभिर्वर्तमानस्य मूर्खस्य स्त्रीजितस्य च॥ ३६॥
व्याधितस्य दरिद्रस्य श्रेयो मृत्युर्न जीवितम्।
किमत्र बहुनोक्तेन योत्स्येऽहं दानवैः सह॥ ३७॥
नृणां कर्मसमारम्भे श्रेयसी ह्येकचित्तता।
गुणदोषावुभावेतावेकीकृत्य विचक्षणः॥ ३८॥
कार्यमारभते यस्तु तस्य दोषाः पराङ्मुखाः।
तावद्भयस्य भेतव्यं यावद्भयमनागतम्॥ ३९॥
आगतं तु भयं दृष्ट्वा योद्धव्यं वाऽप्यभीरुवत्।
मृतस्य जीवतो वाऽपि नरस्येह प्रयुध्यतः॥ ४०॥
श्रेय एव महर्द्धिः स्यात्तस्माद्योत्स्याम्यहं परैः।
तयोः संवदतोरेवं ब्रह्माऽऽगत्येदमब्रवीत्॥ ४१॥
मा विषादं कृथाः शक्र शरणं व्रज पार्वतीम्।
या जघ्ने महिषं दैत्यं रुरुं चित्रासुरं तथा॥ ४२॥
सद्यो रक्तासुरं हत्वा स्वं राज्यं ते प्रदास्यति।
एवमुक्त्वा हरिं ब्रह्मा तत्रैवान्तरधीयत॥ ४३॥
शक्रोऽपि त्रिदशैः सार्धं जगाम हिमवद्गिरिम्।
स तत्र गत्वा शर्वाणीं निर्भयो विगतज्वरः॥ ४४॥

---

१ (घ. ङ. च. ज.) ०णं तं बु०। २ (क. ख. ग. झ.) त्वं च देवाव०। ३ (घ. ङ. च. छ. ज.) ०त्यैर्नाहं जी०। ४ (घ. ङ. च.) ०सते। ए०।

स्तोत्रेणानेन तुष्टाव शिवां शंकरवल्लभाम् ।
**शक्र उवाच**-जयाक्षरे जयानन्ते जयाव्यक्ते निरामये ॥ ४५ ॥
जय देवि महामाये जय त्रिदशवन्दिते ।
जय भद्रे विदेहस्थे जयाऽऽद्ये त्रिगुणात्मिके ॥ ४६ ॥
जय विश्वंभरे गङ्गे जय सर्वार्थसिद्धिदे ।
जय ब्रह्माणि कौमारि जय नारायणीश्वरि ॥ ४७ ॥
जय वाराहि चामुण्डे जयेन्द्राणि महेश्वरि ।
जय मातर्महालक्ष्मि जय पार्वति सर्वगे ॥ ४८ ॥
जय देवि जगज्ज्येष्ठे जयैरावति भारति ।
मृगावति जयानन्ते तेजोवति जयामले ॥ ४९ ॥
जयेशानि शिवे सर्वे जय नित्ये जयार्चिते[1] ।
मोक्षदे जय सर्वज्ञे जय धर्मार्थकामदे ॥ ५० ॥
जय गायत्रि कल्याणि जय संध्ये विभावरि ।
जय दुर्गे महाकालि शिवदूति जयाजये ॥ ५१ ॥
जय दण्डमहामुण्डे जय नन्दे शिवप्रिये ।
जय क्षेमंकरि शिवे जय भ्रामणि रेवति ॥ ५२ ॥
जयोमे साध्वि मङ्गल्ये हरसिद्धे नमोऽस्तु ते ।
जयाऽऽनन्दे महावर्णे महिषासुरघातिनि ॥ ५३ ॥
जयानघे विशालाक्षि जयानङ्गे सरस्वति ।
जयाशेषगुणावासे जय वृत्रासुरान्तके ॥ ५४ ॥
जय योगेशि संकल्पे जय त्रैलोक्यसुन्दरि ।
जय शुम्भनिशुम्भघ्ने जय पद्मेन्दुसंभवे ॥ ५५ ॥
जय कौशिकि कौमारि जय वारुणि कामदे ।
नमो नमस्ते शर्वाणि भूयो भूयो जयाम्बिके ॥ ५६ ॥
त्राहि नस्त्राहि नो देवि[6] शरणागतवत्सले ।
य इमां कीर्तयिष्यन्ति जयमालां भवानि ते ॥ ५७ ॥
त्रिविधैरपि दुःखौघैर्मुच्यन्ते परमेश्वरि ।
सर्वपापविनिर्मुक्ताः सर्वैश्वर्यसमन्विताः ॥ ५८ ॥

---

१ ( घ. ङ. च. ) °याजये ज°। २ (क. ख. ग. झ.) °गच्छ्रेष्ठे । ३ ( घ. ङ. च. ज. ) °ते । साक्षिदे । ४ ( घ. ङ. च. ज. ) हारिसि°। ५ ( घ. ङ. च. ) °नन्दे वि°। ६ ( क. ख. ग. ज. झ. ) °वि शरण्ये शरणागतान् । य ।

भान्ति लोके तथाऽऽदित्याः सर्वरोगविवर्जिताः।
देहावसाने तेऽवश्यं पश्यन्त्येव हि पार्वतीम्॥ ५९॥
नेन्द्रियाणां विकलता यथाऽन्येषां भवेन्नृणाम्।
देवीलोकं गमिष्यन्ति स्कन्दलोकोपरि स्थितम्॥ ६०॥
पुनरावृत्तिरहितं स्तोत्रजाप्यान्न संशयः।
**सूत उवाच**–सैवं स्तुता भगवती महेन्द्रेणाथ पार्वती।
आत्मानं दर्शयामास सर्वालंकरणान्वितम्॥ ६१॥
नमस्कृत्याथ तामूचुः सुरास्ते भयनाशनीम्।
हत्वा रक्तासुरं दैत्यं पाहि नो महतो भयात्॥ ६२॥
तेषां तद्वचनं श्रुत्वा दत्वा तेभ्योऽभयं ततः।
बभूवाद्भुतरूपा सा त्रिनेत्रा चन्द्रशेखरा॥ ६३॥
सिंहारूढा महादेवी नानाशस्त्रास्त्रधारिणी।
सुवक्त्रा विंशतिभुजा स्फूर्जा विद्युल्लतोपमा॥ ६४॥
ततोऽम्बिका ननादोच्चैः साट्टहासं मुहुर्मुहुः।
तस्या नादेन घोरेण कृत्स्नमापूरितं जगत्॥ ६५॥
प्रकम्पिताऽखिला चोर्वी[2] तदा वारिधिमेखला।
शैलोत्तुङ्गस्तनी रम्या[3] प्रमदेव भयातुरा॥ ६६॥
तेऽपि तत्रासुराः प्राप्ताश्चतुरङ्गबलोत्कटाः।
सम्यग्विदितवृत्तान्ताः कालान्तकयमोपमाः॥ ६७॥
रक्षोदानवदैत्याश्च पातालेष्वपि ये स्थिताः।
ते सर्व एव दैत्येन्द्रं कोटिशस्तमुपागताः॥ ६८॥
देवारयस्तदा सर्वे संनद्धाश्चोच्छ्रितध्वजाः।
पालिता दानवेन्द्रेण नानाशस्त्रास्त्रपाणयः॥ ६९॥
तमालालिकुलाभासा जीमूतध्वनिनिःस्वनाः।
युगान्तमिव कुर्वाणा नानालंकारभूषिताः॥ ७०॥
गजघण्टारवैश्चोग्रैर्हयानामथ हेषितैः।
सिंहनादैश्च शूराणां शस्त्राणां क्वणितेन च॥ ७१॥
रथनेमिनिनादैश्च कम्पयन्तो वसुंधराम्।
ततस्ते दानवाः सर्वे देवीं दृष्ट्वा प्रहर्षिताः॥ ७२॥

---

१ (क. ख. ग. ङ.) ०स भाभांसितदिगन्तरा॥ ६१॥ २ (क. ख. ग. ङ.) ०र्वी सरिद्वारि०। ३ (घ. ङ. च.) ०म्या तदैव च भ०।

आस्फोटयन्तः पटहान्भेरीजर्जरिणीमुखान् ।
अनेकान्वादयन्तोऽन्ये शङ्खडमरुडिण्डिमान् ॥ ७३ ॥
मनोजवैर्हयैर्जात्यैर्गजैश्चाचलसंनिभैः ।
अन्यैर्विचित्रैरारूढा विरेजुर्दैत्यपुङ्गवाः ॥ ७४ ॥
एवंविधे समाजे तां भवानीं त्रिदशारयः ।
सर्व एव समाजघ्नुः शर्वाणीं सर्वतोमुखीम् ॥ ७५ ॥
बाणैर्नानाविधैर्घोरैर्यमदण्डोपमैः सितैः ।
कुठारचक्रपरशुमुसलाङ्कुशलाङ्गलैः ॥ ७६ ॥
पाशतोमरशूलैश्च दण्डपट्टिशमुद्गरैः ।
परिघप्रासशक्त्यर्ष्टिशतघ्नीकणपोपलैः ॥ ७७ ॥
आयोगुडैर्भृशुण्डीभिश्चक्रकुन्तगदादिभिः ।
छादयन्तो महादेवीं सिंहनादान्विनेदिरे ॥ ७८ ॥
सा हन्यमाना रोषेण जज्वाल समरेऽम्बिका ।
अग्रसत्साऽथ शर्वाणी शस्त्रास्त्राणि सुरद्विषाम् ॥ ७९ ॥
शैलेन्द्रतनया देवी स्तूयमाना सुरर्षिभिः ।
युयुधे दानवैः सार्धं महासमरदुर्दिने ॥ ८० ॥
ते हन्यमानाः पार्वत्या तामेवाभिप्रदुद्रुवुः ।
परिपूर्णे यथाकाले शलभा जातवेदसम् ॥ ८१ ॥
सैका प्रद्रवती तेषां बहूनामाततायिनाम् ।
दधार वेगं सर्वेषां मरुतामिव पर्वतः ॥ ८२ ॥
पार्वतीशस्त्रनिर्भिन्ना दैत्यास्ते क्षतजेक्षणाः ।
आलिङ्ग्य शेरते क्षोणीं रते कान्तामिव प्रियाम् ॥ ८३ ॥
मण्डलीकृतकोदण्डां ददृशुश्चाम्बिकां तदा ।
मृत्युजिह्वोदिताकारां प्राणकर्षणतत्पराम् ॥ ८४ ॥
जघ्नुस्ते कोटिशो दैत्याः पार्वतीं समराङ्गणे ।
हुंकारेण निनादेन पातयन्ती सहस्रशः ॥ ८५ ॥
प्रचिच्छेद रणेऽरीणां शिरांसि निशितैः शरैः ।
देवीकार्मुकनिर्मुक्तैर्दिव्यैर्नानाविधैः शरैः ॥ ८६ ॥
दह्यन्तेऽसुरसैन्यानि तृणानीव दवाग्निना ।
सिंहवेगानिलोद्धूतांश्चूर्णयन्ती महारथान् ॥ ८७ ॥

१ (क. ख. ग. ङ.) ॰शरानि॰। २ (च.) क्षमितक्षणाः।

ववर्ष शरवर्षाणि युगान्ताम्बुदसंनिभान्।
गजवाजिरथानां च द्रवतां पततां तथा ॥ ८८ ॥
दैत्येन्द्राणां च भारेण [1]श्वसतीव वसुंधरा।
समुत्थितं रजो घोरं संस्पृष्टाऽर्केन्दुमण्डलम् ॥ ८९ ॥
गजाश्वदैत्यरक्तौघैः प्रशान्तिमगमत्ततः।
प्रावर्तत नदी तत्र शोणितोदतरङ्गिणी ॥ ९० ॥
हयमत्स्या गजग्राहा चर्मकूर्मास्थिसंकुला।
महारथमहावर्ता पताकाछत्रफेनिला ॥ ९१ ॥
वहन्ती यमलोकान्तं दैत्यासुरतटद्रुमान्।
तद्बलं च बभौ शीघ्रं शस्त्रास्त्रक्षतकंधरम् ॥ ९२ ॥
गलद्रुधिरफेनौघं घूर्णितार्णवसंनिभम्।
वध्यमानं स्वकं सैन्यं दृष्ट्वा देव्याश्च विक्रमम् ॥ ९३ ॥
रक्तासुरोऽभ्युवाचेदं सैनिकाञ्जातविस्मयः।
हन्यतां हन्यतां शीघ्रं भवानी कालसंनिभा ॥ ९४ ॥
परिवृत्य रथैर्नागैर्हयैश्चैव पदातिभिः।
दानवेश्वरवाक्येन ततस्ते तस्य सैनिकाः ॥ ९५ ॥
त्यक्त्वाऽऽत्मानं महात्मानो देवीमापु[2]र्बलान्विताः।
धूम्राक्षप्रमुखा धीराः षोडशैव महारथाः ॥ ९६ ॥
शरशक्तिगदाशूलैस्ताडयन्तोऽम्बिकां रणे।
श्वसन्त इव नागेन्द्राः प्रज्वलन्त इवाग्नयः ॥ ९७ ॥
[3]जृम्भन्त इव शार्दूला गर्जन्त इव तोयदाः।
युयुधुस्ते स्थिरीभूता विविधायुधयोधिनः ॥ ९८ ॥
नृत्यन्तीव च रुद्राणी नूनं भाति महाहवे।
पार्वती चण्डकोदण्डनादापूरितदिङ्मुखा ॥ ९९ ॥
पट्टिशाभिहतान्कांश्चिन्मुसलोन्मथितांस्तथा।
सारोहान्पातयामास गजानश्वांश्च कोटिशः ॥ १०० ॥
कालपाशशिरश्छित्त्वा सार्धचन्द्रेण भासुरम्।
गदया प्रममाथाऽऽशु देवान्तकमहाहनुम् ॥ १०१ ॥

---

१ (क. ख. ग. झ.) श्वसिती०। २ (क. ख. ग. झ.) ०पुरसंभ्रमाः। श्व०। ३ (ख. ग.) जृम्भ०।

ब्रह्मघ्नस्यासिना कायात्पातयामास चाम्बिका ।
धूम्राक्षं कालदण्डेन वज्रेण क्रूरमेव च ॥ १०२ ॥
यज्ञदंष्ट्रं यज्ञकोपं विधर्मं च चमूपतिम् ।
रौद्रानन्यांस्त्रिशूलेन जघान परमेश्वरी ॥ १०३ ॥
संशङ्कुकर्णदुर्भिक्षविद्युन्मालिविभावसून् ।
दुर्वारपौरुषांश्चक्रे चक्रेणोत्कृत्तमस्तकान् ॥ १०४ ॥
रक्तासुरानुजौ चोभौ महाबलपराक्रमौ ।
कूष्माण्डशुभकाक्षौ तु जघ्नतुर्मुशलाश्मभिः ॥ १०५ ॥
महाबलौ महाकायौ घोरौ तत्र महासुरौ ।
शरैराशीविषाकारैर्जघानाथ तदा द्विजाः ॥ १०६ ॥
ततः स्त्रीघ्नोऽभ्यधावत्तां दृष्ट्वा तौ विनिपातितौ ।
तमप्यपातयद्भूमौ खड्गेनाभिहतं रुषा ॥ १०७ ॥
घण्टकश्चाथ दैत्येन्द्रो गिरीन्द्रसदृशो बली ।
परिघेणाऽऽयसेनाऽऽजौ देवीं क्रुद्धोऽभ्यताडयत् ॥ १०८ ॥
ततः सपरिघश्चासौ देव्याः करतलाहतः ।
स पपात तदा भूमौ वज्राहत इवाचलः ॥ १०९ ॥
प्रापञ्चिको महाबाहुश्चक्रीकृतशरासनः ।
शक्त्या दग्धतनुत्राणो जगामान्तकमन्दिरम् ॥ ११० ॥
अष्टादशैवं दुर्धर्षान्निहत्यासुरसैनिकान् ।
सानन्दा विननादोच्चैः संवर्तकघनोपमा ॥ १११ ॥
जघान दानवानीकमेकाऽनेकस्वरूपिणी ।
विद्युत्संपातनिह्रादा विद्युत्संपातचञ्चला ॥ ११२ ॥
पातयन्ती चचाराऽऽजौ साऽसुरेन्द्रमहाचमूम् ।
तत्रातुलश्च तुमुलो नादो बाध्येषु शत्रुषु ॥ ११३ ॥
बभूव येन ब्रह्माण्डमकाण्डाकुलतां ययौ ।
जघानैवं चतुःसप्त त्रिदशैस्त्रिदशद्विषाम् ॥ ११४ ॥
अक्षौहिणीसहस्राणि त्रयस्त्रिंशत्सुरेश्वरी ।
एकत्रिंशत्सहस्राणि शतान्यष्टौ च सप्ततिः ॥ ११५ ॥
सानुगानां सयोधानां रथानां वातरंहसाम् ।
संख्यैवैषा गजेन्द्राणामक्षौहिण्यां महौजसाम् ॥ ११६ ॥

---

१ ( घ. ङ. च ज. ) स्वश०।

त्रिगुणं चतुरङ्गाणां पञ्च चैव पदातिनाम् ।
क्वचिद्रथस्थिता सैव विविधायुधधारिणी ॥ ११७ ॥
जघानासुरसैन्यानि हयहस्तिगता क्वचित् ।
क्वचिच्च महिषारूढा वृषभे च स्थिता क्वचित् ॥ ११८ ॥
वेतालैः प्रेतभूतैश्च स्वेच्छासृष्टैर्वृताऽद्भुतैः ॥ ११९ ॥
कबन्धनृत्यसंकुले ह्यसृग्वसास्थिकर्दमे
रणाजिरे निशाचरास्ततो विरेजुरूर्जिताः ।
शृगालगृध्रवायसाः परं प्रपानमादधुः
क्वचित्परेतशावकाः प्रतीतशोणिता बभुः ॥ १२० ॥
क्वचित्पिनाकपाणयः पिशाचयक्षराक्षसाः
प्रतर्प्य चासृजा पितॄन्समर्चयंस्तथाऽऽमिषैः ।
गजान्नरांस्तुरङ्गमान्प्रभक्षयन्ति निर्घृणा-
स्तदोडुपैस्तथाऽपरे तरन्ति शोणितापगाम् ॥ १२१ ॥
इति प्रगाढसंगरे सुरारिसंघसंकुले-
विराजतेऽम्बिका धनुःशरासिशूलधारिणी ।
गजेन्द्रवृन्दमर्दिनी तुरङ्गयूथपोथिनी
महारथौघघातिनी सुरारिसैन्यनाशनी ॥ १२२ ॥
ततश्चण्डिकाचण्डकोदण्डमुक्तैर्दिवाहारिणां कोट्योऽष्टौ तथाऽष्टौ ।
हताः पट्टिशै राक्षसानां च लक्षास्त्रयस्त्रिंशदष्टादशैवात्र कोट्यः॥ १२३ ॥
ततो दानवेन्द्रं रणे तर्जयन्ती विलासोल्लसद्बाहुविन्यस्तशस्त्रा ।
ननर्ताप्रमेयप्रभावा भवानी महेन्द्रादिदेवान्मुदा हर्षयन्ती ॥१२४॥
हयग्रीवमुख्याः पुनर्दैत्यसंघा दशैवावशिष्टा महारौद्ररूपाः ।
नमस्कृत्य रक्तासुरं तेऽभ्यधावन्रणे पार्वतीं ताडयन्तोऽस्त्रपूगैः ॥१२५॥
समुद्धृत्य नेत्राणि किंचिद्धसन्ती द्विषत्सैन्यसंघानि सा संहरन्ती ।
न्यमुञ्चत्ततोऽस्त्राणि दिव्यानि देवी नदन्सार्पतूर्येषु खेऽनन्तसत्त्वा॥१२६॥
ततो गिरीन्द्रजाऽरीणां चक्रे सैन्यानि भस्मसात् ।
रक्तासुरमथाभ्येत्य शस्त्रास्त्रधृतपाणिनम् ॥ १२७ ॥
पादाक्रान्त्यानतभुवं संक्षोभितजगत्त्रयम् ।
मण्डलीकृतकोदण्डं गर्जन्तं कालमेघवत् ॥ १२८ ॥
शरवर्षाणि मुञ्चन्तं पार्वती तमुवाच ह ।
कृत्वोपतापं देवानां जीवन्क्वाद्य गमिष्यसि ॥ १२९ ॥

दुष्टेत्युक्त्वाऽथ सा देवी शूलेनाभिहनद्धृदि ।
संभिन्नहृदयो दैत्यो मूर्तिं चक्रे सुदारुणाम् ॥ १३० ॥
रक्तबिन्दुसमो दैत्यो देवीं व्यामोहयन्निव ।
जगामानेकरूपोऽसौ निहतोऽम्बिकया रणे ॥ १३१ ॥
रक्तासुरोऽपि निधनं गत्वा त्रिदशकण्टकः ।
पपात मुनिशार्दूलाः प्रज्वलज्ज्वलनोपमः ॥ १३२ ॥
हाहाकारं प्रकुर्वाणा दैत्यास्तेऽथ प्रदुद्रुवुः ।
केचिच्छिष्टा भयत्रस्ता विसृष्टायुधजीविताः ॥ १३३ ॥
केचित्समुद्रं विविशुरद्रींकेचिच्च दानवाः ।
केचिल्लुञ्चितमूर्धानो नग्ना भूत्वा वनेऽवसन् ॥ १३४ ॥
दयाधर्मं ब्रुवाणाश्च निर्ग्रन्थव्रतमाश्रिताः ।
केचित्प्राणपरा भीताः पाखण्डव्रतमाश्रिताः ॥ १३५ ॥
हेतुवादपरा मूढा निःशौचा निरपेक्षकाः ।
आसुरस्य जनस्यैते क्षपणा इव लक्षिताः ॥ १३६ ॥
ते चाद्यापीह दृश्यन्ते लोके क्षपणकाः किल ।
अर्हन्तश्च तथैवान्ये शिवशास्त्रबहिष्कृताः ॥ १३७ ॥
मन्त्रौषधप्रयोगैश्च जनवञ्चनकारकाः ।
समुत्पत्स्यन्ति दैत्याश्च घोरेऽस्मिन्वै कलौ युगे ॥ १३८ ॥
शिवोक्तं कर्मयोगं च द्विषन्तश्च कुयुक्तिभिः ।
देव्याः क्रोधाग्निना दग्धा वेदमार्गविनिन्दकाः ॥ १३९ ॥
शास्यन्ते नरकाग्नौ ते निःशेषाः पापकर्मिणः ।
न दृष्टा निष्कृतिस्तेषां शास्त्रेषु परमर्षिभिः ॥ १४० ॥
रराजाचिन्त्यमाहात्म्या चिद्रूपा परमेश्वरी ।
हत्वाऽरिं जगदैश्वर्यं दत्वा नमुचिशत्रवे ॥ १४१ ॥
जगामादर्शनं देवी व्यक्ताव्यक्तस्वरूपिणी ।
*शक्रोऽपि तां प्रणम्याथ सर्वज्ञां विश्वरूपिणीम् ॥ १४२ ॥

* कघसंज्ञितपुस्तकयोरिदं श्लोकार्धं न दृश्यते ।

१ (घ. ङ. च.) ०शबन्धनः । प० । २ (क. ख. घ.) ०मास्थिताः ॥ १३५ ॥ ३ (क. ख. ग. झ.) ०ऽस्मिंश्च क० ।

प्रययौ विबुधैः सार्धं स्वां पुरीममरावतीम् ॥ १४३ ॥ २७३७ ॥

इति श्रीब्रह्मपुराणोपपुराणे श्रीसौरे सूतशौनकसंवादे रक्तासुर-
वधकथनं नामैकोनपञ्चाशोऽध्यायः ॥ ४९ ॥

**सूत उवाच**–अथोपविश्य सुरराट् पूज्यमानो वरासने ।
अप्सरोगणगन्धर्वसिद्धविद्याधरोरगैः ॥ १ ॥
सहस्रानुचराणां च देवतानां महौजसाम् ।
निर्जराणां त्रयस्त्रिंशत्कोटिभिः परिवारितः ॥ २ ॥
सोऽभिषिक्तस्तदा सर्वैर्बृहस्पतिपुरोगमैः ।
त्रैलोक्येऽस्मिन्पुनः शक्रश्चक्रे राज्यमकण्टकम् ॥ ३ ॥
समाजग्मुस्तदा द्रष्टुं प्राप्तराज्यं सुराधिपम् ।
मुनयश्चाङ्गिरा दक्षवसिष्ठक्रतुगौतमाः ॥ ४ ॥
पुलस्त्यपुलहागस्त्यविश्वामित्रात्रिशौनकाः ।
जमदग्निभरद्वाजभृगुभागुरिगालवाः ॥ ५ ॥
ऋभुः शाण्डिल्यदुर्वासोगर्गजैमिनिनारदा[1]ः ।
दाल्पूहोद्दालबाभ्रव्यशरभङ्गनिशाकराः ॥ ६ ॥
मरीचिच्यवनोत्तङ्ककात्यायनपराशराः ।
संवर्तशङ्खलिखितदेवभागसु[3]षेणकाः ॥ ७ ॥
त्रितरैभ्ययवक्रीतश्वेतकेतूपमन्यवः ।
शाकटायनकौण्डिन्यकचगृत्समदासिताः ॥ ८ ॥
देवरातश्च जाबालिर्हारीतश्चैव कश्यपः ।
बृहदश्वाम्बिकौतथ्या जातूकर्ण्यः परा[4]शरः ॥ ९ ॥
*पैठीनसिर्व्याघ्रपादो वीतिहोत्राश्वलायनौ ।
शातातपो मधुच्छन्दा ऋचीकक्रतुदेवलाः ॥ १० ॥
वामदेवश्च मैत्रेयमार्कण्डेयपुरोगमाः ।
कृष्णाजिनोत्तरीयास्ते जटिला भस्मभूषिताः ॥ ११ ॥
रुद्रा इव महात्मानो वेदवेदाङ्गपारगाः ।
तानागतान्सुसंपूज्य कृतासनपरिग्रहान् ॥ १२ ॥

---

* घङचजसंज्ञितादर्शपुस्तकेष्वयं श्लोको न विद्यते ।

---

१ ( घ. ङ. च. ) ०च । तदोप० । २ ( क. ख. ग. झ. ) ०दाः । दाल्भ्योद्दालकबा० । ३ ( क. ख. ग. झ. ) ०सुबान्धवाः ॥ ७ ॥ ४ ( घ. ङ. च. ज. ) ०रावसुः ॥ ९ ॥

ब्रह्मकल्पानृषीन्सर्वान्पप्रच्छेदं पुरंदरः ।
कथमाराध्यते देवी वरदाऽचलकन्यका ॥ १३ ॥
ते धन्यास्ते कृतार्थास्ते यैः सम्यक्पूजिता शिवा ।
यस्याः प्रसादाद्भूयोऽपि राज्यं प्राप्तमिदं मया ॥ १४ ॥
भवान्याः सर्वमेवैतद्वक्तुमर्हथ सत्तमाः ।
ते चैवमुक्ताः शक्रेण मुनयो मुनिपुङ्गवाः ॥ १५ ॥
प्रत्यूचुस्तां नमस्कृत्य शर्वाणीं शिवरूपिणीम् ।
ते धन्यास्ते कृतार्थाश्च साधवस्ते शचीपते ॥ १६ ॥
भक्त्या यजन्ति ये नित्यं पार्वतीं परमेश्वरीम् ।
कुर्वन्तोऽपीह कर्माणि चण्डिकार्पितमानसाः ॥ १७ ॥
सूर्यांशव ईव जालैर्न बाध्यन्तेऽत्र किल्बिषैः ।
आयुरारोग्यसौख्यानि सौभाग्यं च वरस्त्रियः ॥ १८ ॥
भवन्ति तेषां ये नित्यं स्तुवन्ति परमेश्वरीम् ।
संवत्सरास्तथा मासा विफला दिवसाश्च ते ॥ १९ ॥
नराणां विषयान्धानां येषां गेहे न पार्वती ।
यत्र यत्रार्च्यते देवी वरदा परमेश्वरी ॥ २० ॥
तत्र तत्राक्षयं पुण्यं स्यादित्याह प्रजापतिः ।
नामोच्चारणमात्रेण यस्याः क्षीणाघसंचयः ॥ २१ ॥
भवंत्यवाप्तकल्याणः कस्तां नाऽऽराधयेच्छिवाम् ।
पशुभिस्त्विह तुल्यास्ते मूढैर्वा ते शवा इव ॥ २२ ॥
ये मूढा नार्चयन्त्यार्यां पार्वतीं परमेश्वरीम् ।
अचिन्त्यां सत्स्वरूपां तां शाश्वतीं विश्वतोमुखीम् ॥ २३ ॥
ये यजन्तीहं धन्यास्ते शिवां स्वर्गापवर्गदाम् ।
तपस्तीर्थप्रदानैश्च यज्ञैर्वा बहुदक्षिणैः ॥ २४ ॥
म तां गतिं लभन्तेऽत्र यां स्तुत्वाऽचलकन्यकाम् ।
सर्वान्कामानवाप्नोति यान्यानिच्छति मानवः ॥ २५ ॥
व्रतोपवासपूजाभिः समाराध्य महेश्वरीम् ।
व्रतेन येन देवेन्द्र प्रसीदत्याशु पार्वती ॥ २६ ॥

१ ( क. ख. ग. स. ) ०र्णीं विश्वरू०। २ ( क. ख. ग. घ. ङ. ज. झ. ) इवाजा०। ३ ( क. ख. ग. झ. ) ०चयाः ॥ २१ ॥ ४ ( क. ख. ग. झ. ) भवन्त्यवाप्तकल्याणाः क०। ५. ( घ. ङ. च. ज. ) ते शिवा । ६ ( घ. ङ. च. ज. । ०ह ते धन्याः शि०।

यश्चोल्कानवमीसंज्ञं शृणु सर्वफलप्रदम्।
तस्यां नवम्यां शर्वाणी महिषादीन्महासुरान् ॥ २७ ॥
जघान समरे[1] शक्र तेन सा नवमी प्रिया।
अश्वयुक्शुक्लपक्षस्य नवम्यां प्रयतात्मवान् ॥ २८ ॥
स्नात्वाऽभ्यर्च्य पितॄन्देवान्मनुष्यांश्च यथाक्रमम्।
यजेत्पश्चान्महादेवीं महिषासुरघातिनीम् ॥ २९ ॥
पुष्पैर्धूपैश्च नैवेद्यैः पयोदधिफलादि[2]भिः।
भक्त्या संपूजयित्वैवं स्तुत्वा संप्रार्थयेत्ततः ॥ ३० ॥
मन्त्रेणानेन वृत्रारे श्रद्धावान्प्रयतो व्रती।
महिषघ्नि महामाये चामुण्डे मुण्ड[3]घातिनि ॥ ३१ ॥
द्रव्यमारोग्यविजयं देहि देवि न[4]मोऽस्तु ते।
भूतप्रेतपिशाचेभ्यो रक्षोभ्यश्च महेश्वरि ॥ ३२ ॥
देवेभ्यो मानुषेभ्यश्च भयेभ्यो रक्ष मां सदा।
सर्वमङ्गलमाङ्गल्ये शिवे सर्वार्थसाधिके ॥ ३३ ॥
उमे ब्रह्माणि कौमारि विश्वरूपे प्रसीद मे।
कुमारीर्भोजयित्वा वा कुर्यादाच्छादनादिभिः ॥ ३४ ॥
यथावर्णं कुमारीश्च भोजयित्वा क्षमापयेत्।
नव सप्ताथ एकां वा चित्तवित्तानुसारतः ॥ ३५ ॥
श्रद्धया प्रीतिमाप्नोति देवी भगवती शिवा।
अनेन विधिना वर्षं मासि मासि समाचरेत् ॥ ३६ ॥
ततः संवत्सरस्यान्ते भोजयित्वा कुमारिकाः।
वस्त्रै[5]राभरणैः पूज्याः प्रणिपत्य विसर्जयेत् ॥ ३७ ॥
*सरुक्मशृङ्गां गां दद्यात्सुविप्राय सुशोभनाम्।
नरो वा यदि वा नारी व्रतमेतत्करोति च ॥ ३८ ॥
उल्कावत्सा सपत्नीनां तेजसा भाति भूतले।
श्रीमहानवमीत्येषा ख्याता सुरपतेऽधुना ॥ ३९ ॥

---

* घङचसंज्ञितपुस्तकेष्वयं श्लोको न विद्यते।

---

१ (क. ख. ग. ङ.) ०रे तत्र ते०। २ (क. ख. ग. ङ.) ०दिकैः। भ०। ३ (क. ख. ग. ज. ङ.) ०ण्डमालिनि। ४ (घ. ङ. च. ज.) ०मो नमः। भू०। ५ (क. ख. ग. ङ.) ०वर्णैः कु०।

सर्वसिद्धिकरी पुण्या सर्वोपद्रवनाशिनी[1] ।
नाऽऽध्यात्मिकं तस्य भयं दैवं स्यान्नाऽऽधिभौतिकम् ॥ ४० ॥
रक्षत्येव सदा शक्र सर्वापत्सु च चण्डिका ।
शान्तिपुष्टिकरी[2] पुण्या पुत्रारोग्यार्थलाभदा ॥
अनुष्ठेया सदा पुंभिश्चतुर्वर्गफलार्थिभिः ॥ ४१ ॥
यश्छद्मनाऽपि कुरुते व्रतमेतदित्थं
चण्डीप्रियं सुरपते मुनिसिद्धजुष्टम् ।
रुद्राङ्गनाकुलवराकुलितं विमानमारुह्य[3]
याति स सुखेन शिवस्य लोकम् ॥ ४२ ॥
शूलाग्रभिन्नमहिषासुरपादपीठा-
मुत्खातखड्गरुचिराङ्गदबाहुदण्डाम् ।
येऽभ्यर्चयन्ति हि तु नक्तभुजो नवम्यां
दुर्गार्तिदुर्गगहनं न विशन्ति मर्त्याः ॥ ४३ ॥
अन्यच्चदाह कपिलो भगवान्महात्मा
मेरौ च दैत्यगुरवे भृगुनन्दनाय ।
तत्त्वं शृणुष्व सुमना मघवन्महान्त-
माराधनं कियदपि त्रिजगज्जनन्याः ॥ ४४ ॥
या कामधेनुसदृशी किल भक्तिभाजां
या कल्पपादपसमा सुकृतार्थिनां च ।
चिन्तामणीत्यवगता धनलिप्सुभिर्वा
कस्मान्न तां भृगुसुतात्र यजन्ति गौरीम् ॥ ४५ ॥
ये तां स्मरन्ति निगडैरपि बद्धपादा
व्याघ्राहिचौरनृपवह्निभयेषु[4] दुर्गाम् ।
तेषां न किंचिदपि शत्रुभयं नृणां स्या-
द्बद्धास्तु मुक्तिमुपलभ्य सुखं लभन्ते ॥ ४६ ॥
हे भार्गवार्य गिरिजाप्रणतिप्रसादे
दैवं निरुद्धमपि न प्रभवत्यवश्यम् ।
आसन्नमेघसमयां वनराजिमुच्चै-
र्ग्रीष्मोऽपि पल्लवचयोपचितां करोति ॥ ४७ ॥

---

१ ( क. ख. ग. झ. ) ०नाशनी । २ ( क. ख. ग. ज. झ. ) ०री धन्या पु० । ३ ( ङ. च. ) ०मानं संरु० । ४ ( घ. ङ. ज ) ०ये च दु० ।

धात्रा स्वहस्तलिखितानि ललाटपट्टे
　दैवाक्षराणि दुरितैकनिबन्धनानि ।
गौरीप्रसादजनितेन जनः समस्त-
　स्तान्येकतः स परिमार्जयतीति चित्रम् ॥ ४८ ॥
ते संमता जनपदेषु धनानि तेषां
　तेषां यशांसि न च सीदति बन्धुवर्गः ।
धन्यास्त एव निभृतात्मजभृत्यदारा
　येषां सदाऽभ्युदयदा गिरिजा प्रसन्ना ॥ ४९ ॥
यः कारयेद्वरपताकसिताभ्रगौरं
　तद्गोपुरं च सुधयाऽऽयतनं भवान्याः ।
चन्द्रावदातभवने विपुले च सौख्यं
　राज्यं श्रियं च भुवि काममुपैति सत्यम् ॥ ५० ॥
ये कारयन्ति भवनं भृगुनन्दनाऽऽर्याः
　शक्त्या सुवर्णरजतायसताम्रशैलम् ।
सामन्तमौलिमणिरश्मिसमुज्ज्वले ते
　सिंहासनेऽङ्गदकिरीटभृतो रमन्ते ॥ ५१ ॥
ये मेरुमूर्ध्नि सुरसंघकृताभिषेकां
　पञ्चामृतैर्गिरिसुतामभिषेचयन्ति ।
ते दिव्यकल्पमनुभूय सुरेन्द्रराज्यं
　राज्याभिषेकमतुलं पुनराप्नुवन्ति ॥ ५२ ॥
ये देवदारुमलयोद्भवचन्दनेन
　ये कुङ्कुमेन च शिवामुपलेपयन्ति ।
ते दिव्यगन्धपटवाससुगन्धदेहा
　नन्दन्ति नन्दनवनेषु सहाप्सरोभिः ॥ ५३ ॥
दिव्यैश्च पद्मकरवीरकजातिपुष्पै-
　र्गौरीं शुभैरनुदिनं ननु येऽर्चयन्ति ।
ते भूतले नरपतित्वमवाप्य योगा-
　द्यास्यन्ति सौख्यमचिरेण परां च सिद्धिम् ॥ ५४ ॥
आमोदिभिर्मरुकपुष्पसुगन्धधूपैर्ये
　लोकनाथदयितामिह धूपयन्ति ।

१ ( क. ख. ग. ङ. ) ०ति सत्यम् । २ ( घ. ङ. च. ) राज्यांश्र०। ३ ( च. छ. ) नाऽऽर्या भक्त्या । ४ ( क. ख. ग. ङ. ) ०न्धपुष्पैर्ये ।

कर्पूरसारसमगन्धवराः सुरामा
आलिङ्गयन्ति दयिताः सुरराजलोके ॥ ५५ ॥
दोधूयते कनकदण्डविराजितैश्च
सच्चामरैः प्रचलकुण्डलसुन्दरीभिः ।
दिव्याम्बरस्रगनुलेपनभूषिताङ्गः
कृत्वा मृडानिभवने वरवस्त्रपूजाम् ॥ ५६ ॥
देदीप्यते स कनकोज्ज्वलपद्मराग-
रत्नप्रभाभरणहेममये विमाने ।
दिव्याङ्गनापरिवृतो मनसोऽभिरामः
प्रज्वाल्य दीपममलं भवने भवान्याः ॥ ५७ ॥
यो जागरं गिरिसुताभवने ददाति
चैत्रोत्सवादिदिवसेऽभ्यधि तूर्यनादम् ।
वीणामृदङ्गमधुरस्वरभाषिणीभिः
संगीयते स हि कृशोदरिकिंनरीभिः ॥ ५८ ॥
कुर्वन्ति ये सदुपलेपनवासचित्रं
संमार्जनं गिरिसुतायतनेऽनुरक्ताः ।
मुक्ताकलापमणिकाञ्चनभित्तिचित्रै-
र्वैडूर्यकुट्टिमतले भवने वसन्ति ॥ ५९ ॥
दद्याच्च यः परमभक्तियुतो भवान्या
घण्टावितानमथ चामरमातपत्रम् ।
केयूरहारमणिकुण्डलमण्डितोऽसौ
रत्नाधिपो भवति भूतलचक्रवर्ती ॥ ६० ॥
अभ्यर्चयन्ति विधिवद्विविधोपचारै-
र्गन्धर्वसिद्धविबुधस्तुतपादपद्माम् ।
भक्त्या प्रहृष्टमनसः प्रणमन्ति देवीं
ते भूर्भुवःस्वमहिमाप्तफला (?) भवन्ति ॥ ६१ ॥
गायन्ति ये गिरिसुतां च विलोकयन्ति
ध्यायन्ति वाऽमलधियश्च शिवां स्मरन्ति ।
गौरीमुमां भगवतीं जगदेकदेवीं
ते वै प्रयान्ति परमं पदमिन्दुमौलेः ॥ ६२ ॥

---

१ (क. ख. ग. ज. झ.) ०ल भूषितो०। २ (घ. ङ. च. छ. ञ.) ०प्त फला०।

देवीं समस्तभुवनादिविचित्रदेहां
सूर्याग्निचन्द्रनयनामिह कालवक्त्राम् ।
दीर्घाष्टदिग्भुजचयां मृदुभावहासां
येऽभ्यर्चयन्ति हृदि हन्त त एव धन्याः ॥ ६३ ॥

इक्ष्वाकुपूरुपृथुराघवधुन्धुमार-
मांधातृहैहयययात्यजमीढमुख्यैः ।
आरोग्यसंततिधराजयसौख्यलुब्धैः
संपूजिता भगवती मनुजैर्भवानी ॥ ६४ ॥

योगेश्वरीं वेदवतीं[1] भवानीं ब्राह्मीं कुमारीं सुभगां च वाणीम् ।
नारायणीं हैमवतीमनन्तां विश्वादिभूतां भज भार्गवाऽऽर्याम् ॥ ६५ ॥

यशांसि विद्याः सुखमर्थमायुर्विभूतयः पुष्टिरनर्थहानिः ।
तद्भक्तिभाजां भविनां विमुक्तये भवन्ति योगानुगताः समाधयः ॥ ६६ ॥

नीचोऽपि मन्दमतिरल्पकुलोद्भवोऽपि
भीरुः शठोऽपि[4] चपलोऽपि निरुद्यमोऽपि ।
गौरीपदाब्जयजनार्थमिहोद्यतश्च
संदृश्यते ननु सुरैरपि गौरवेण ॥ ६७ ॥

तावत्कृताकृतमपि प्रतिघातमेति
कर्मार्जितेन विधिनाऽपि कृतोद्यमेन ।
आर्यापदाम्बुजरजो विरजः प्रणम्य
यावन्न वत्स शिरसा ध्रियते जनेन ॥ ६८ ॥

विद्या तपः कुलजनिर्विविधं च शिल्पं
शौर्यं मतिश्च विनयस्तु विदग्धता च ।
एते गुणा गुणवतां परेमे[5] च भद्रा
गौरीप्रसादरहितस्य[6] तृणीभवन्ति ॥ ६९ ॥

तावन्न सिध्यति रसो न रसायनानि
मन्त्रा महोदयफला विलसत्प्रवादाः ।
क्लिश्यन्ति साधकजना भुवि[7] वर्तिकाश्च
यावन्न तुष्यति कवे वरदा भवानी ॥ ७० ॥

---

१ (क. ख. ग. झ.) ०तिजयाक्षय । २ (क. ख. ग. घ. जं. झ.) योगीश्व० । ३ (क. ख. ग. ज. झ.) ०तीं मृडानीं । ४ (क. ख. ङ. च. झ.) शत्रोऽपि । ५ (च.) ०रमं च भद्रं । गौ० । ६ (घ.) ०स्य न ते भ० । ७ (क. ख. ग. झ.) ०विवार्ति० ।

गोब्राह्मणार्चनपराश्च रताः स्वधर्मे
ये मद्यमांसविमुखाः शुचयश्च शैवाः ।
सत्यप्रियाः सकलभूतहिते रताश्च
तेषां च तुष्यति सदा सुमते मृडानी ॥ ७१ ॥
भूतादिभूतां विषयेन्द्रियाणां परां तथाऽन्तःकरणात्मरूपाम् ।
सदाऽक्षयां कायमनोवचोभिः संचिन्तयाऽऽर्यां सकलार्थदात्रीम् ॥ ७२ ॥
अजामेकां लोहितशुक्लवर्णां बह्वीः प्रजाः सृज्यमानां सुरूपाम् ।
अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः ॥ ७३ ॥
प्रभावमेतं त्रिजगज्जनन्यास्तवोदितं भार्गव वेदगुह्यम् ।
श्रोतुं यदिच्छा तदुदीरयस्व विप्रेषु किं वाऽकथनीयमस्ति ॥ ७४ ॥
शृण्वन्ति ये वाऽथ पठन्ति मर्त्याः स्तवान्विताख्यानमिदं भवान्याः ।
भुक्त्वाऽक्षयान्कामसुखांश्च तेऽत्र प्रयान्ति शंभोः परमं पदं च ॥ ७५ ॥
**सूत उवाच**–एवं मुनीनां गदितं भवान्याश्चरितं शुभम् ।
श्रुत्वा पुरंदरः श्रीमान्भक्त्या परमया द्विजाः ॥ ७६ ॥
आराधयामास तदा पार्वतीं परमेश्वरीम् ।
वरांश्च विविधाल्लँब्ध्वा चक्रे राज्यमकण्टकम् ॥ ७७ ॥ २८१४ ॥
इति श्रीब्रह्मपुराणोपपुराणे श्रीसौरे सूतशौनकसंवादे पार्वती-
प्रभावकथनं नाम पञ्चाशोऽध्यायः ॥ ५० ॥
**ऋषय ऊचुः**–तिथीनां निर्णयं सूत प्रायश्चित्तविधिं तथा ।
वक्तुमर्हसि चास्माकं व्यासशिष्य महामते ॥ १ ॥
**सूत उवाच**–शृणुध्वमृषयः सर्वे तिथीनां निर्णयं परम् ।
अनिर्णीतासु तिथिषु न किंचित्कर्म सिध्यति ॥ २ ॥
श्रौतं स्मार्तं व्रतं दानं यच्चान्यत्कर्म वैदिकम् ।
निर्णीतासु तिथिष्वेव कर्म कुर्वीत नान्यथा ॥ ३ ॥
प्रायः प्रान्तमुपोष्यं स्यात्तिथेर्दैवफलेप्सुभिः ।
मूलं हि पितृतुष्ट्यर्थं पित्र्यं चोक्तं महर्षिभिः ॥ ४ ॥
यां प्राप्यास्तमुपैत्यर्कः सा चेत्स्यात्त्रिमुहूर्तिका ।
धर्मकृत्येषु सर्वेषु संपूर्णां तां विदुस्तिथिम् ॥ ५ ॥
क्षये पूर्वा प्रकर्तव्या वृद्धौ कार्या तथोत्तरा ।
तिथेस्तस्यास्त्रिक्षणायाः क्षयवृद्धित्वकारणम् ॥ ६ ॥

१ (क. ख. ग. ङ.) ये ब्रा०। २ (क. ख. ग. ङ.) ०विरताः शु०। ३ (क. ङ.) स्यात्तीर्थे देव०। ४ (ङ.) ०तिकी। ध०।

अष्टम्येकादशी षष्ठी तृतीया च चतुर्दशी।
कर्तव्याः परसंयुक्ता अपराः पूर्वमिश्रिताः॥ ७॥
*बृहत्तल्पा तथा रम्भा सावित्री वटपैतृकी।
कृष्णाष्टमी च भूता च कर्तव्या संमुखी तिथिः॥ ८॥
शुक्ले द्वे द्वे तथा कृष्णे युगादी कवयो विदुः।
शुक्ले पूर्वाह्णिके कार्ये कृष्णे चैवापराह्णिके॥ ९॥
नागविद्धा तु या षष्ठी शिवविद्धा तु सप्तमी।
दशम्येकादशीविद्धा नोपोष्यैव कथंचन॥ १०॥
ज्ञात्वैवं सूर्यचन्द्राभ्यां तिथिं स्फुटतरं व्रती।
एकादशीं तृतीयां च षष्ठीं चोपवसेत्सदा॥ ११॥
फलमेकादशी हन्ति विहितं दशमीयुता।
पारणं तु त्रयोदश्यामुल्लङ्घ्य द्वादशीव्रतम्॥ १२॥
पारणाहे न लभ्येत द्वादशी सकलाऽपि चेत्।
तदानीं दशमीविद्धा ह्युपोष्यैकादशी तिथिः॥ १३॥
शुक्ले वा यदि वा कृष्णे भवेदेकादशीद्वयम्।
उत्तरां तु यतिः कुर्यात्पूर्वामेव सदा गृही॥ १४॥
दर्शं च पौर्णमासं च सप्तमीं पितृवासरम्।
पूर्वविद्धमकुर्वाणो नरकं प्रतिपद्यते॥ १५॥
सिनीवाली द्विजैर्ग्राह्या साग्निकैः श्राद्धकर्मणि।
कुहूः स्त्रीभिस्तथा शूद्रैरपि चान्यैरनग्निकैः॥ १६॥
पारणे मरणे नृणां तिथिस्तात्कालिकी स्मृता।
निशाव्रतेषु च ग्राह्या प्रदोषव्यापिनी सदा॥ १७॥
उपोषितव्यं नक्षत्रं येनास्तं याति भास्करः।
यश्च वा युज्यते विप्राः प्रदोषे हिमरश्मिना॥ १८॥
अर्वाक्षोडश नाड्यस्तु परतश्चैव षोडश।
पुण्यकालोऽर्कसंक्रान्तौ स्नानदानजपादिषु॥ १९॥

* घसंज्ञितपुस्तक एष श्लोको नास्ति।

१ (क. ख. ग. झ.) ०हत्तुला त०। २ (क. ख. ग. झ.) द्वे शुक्ले द्वे त०। ३ (क. ख. ग. झ.) ०तरां व्र०। ४ (ख.) ०रणां तु। ५ (घ. ङ. च. ज.) ०णं च त्र। ६ (क. ख. ग. झ.) ०मासीं च। ७ (क. ख. ग. झ.) ०हूः शूद्रैस्तथा स्त्रीभिर०। ८ (घ. ङ. च.) ०नी तिथिः॥ १७॥ ९ (ग.) ०ड्यः श्च प०। १० (क. ख. ग. झ.) ०क्रान्तेः स्ना०।

आसन्नसंक्रमं पुण्यं दिनार्धं स्नानदानयोः ।
रात्रौ संक्रमणे भानोर्विषुवत्ययने दिने ॥ २० ॥
सूर्येन्दुग्रहणं यावत्तावत्कुर्याज्जपादिकम् ।
न स्वप्यान्न च भुञ्जीत स्नात्वा भुञ्जीत मुक्तयोः ॥ २१ ॥
आदित्यशीतकिरणौ ग्रस्तावस्तं गतौ यदा ।
दृष्ट्वा तदाऽन्यदिवसे स्नात्वा भुञ्जीत वाग्यतः ॥ २२ ॥
सूतके मृतके वाऽपि नोपवासं त्यजेद्व्रती ।
यस्माद्भग्नव्रतोऽतीव गर्हितो वेदवादिभिः ॥ २३ ॥
तस्मात्प्रमादद्दुःखे वा सूतके व्यसनेऽपि च ।
स्नात्वा कार्यं व्रतं विप्रा अन्यथा व्रतलोपभाक् ॥ २४ ॥
देवार्चनादिकं कर्म कार्यं दीक्षान्वितैः सदा ।
नास्ति[1] शावं यतस्तेषां सूतकं च यदात्मनाम् ॥ २५ ॥
शिवे[2] देवार्चनं यस्य यस्य वाऽग्निपरिग्रहः ।
ब्रह्मचारियतीनां च शरीरे नास्ति सूतकम् ॥ २६ ॥
महच्छब्दप्रयुक्ता या या च सोपपदा तिथिः ।
साऽमावास्यासमा ज्ञेया दानाध्ययनकर्मसु ॥ २७ ॥
मार्गा ह्यपरपक्षे तु पूर्वमध्या तु शब्दिता ।
स्युश्चतुरष्टकास्तिस्रः सप्तम्यादिष्वनुक्रमात् ॥ २८ ॥
माघे पञ्चदशी कृष्णा नभ[3]स्ये[4] च त्रयोदशी ।
तृतीया माधवे शुक्ला नवमी कार्तिके सिता ॥ २९ ॥
एता युगादय[5]ः प्रोक्ताः सर्वाश्चाक्षयपुण्यदाः ।
सिंहवृश्चिकयोः कुम्भसंक्रान्तिषु(?) भवन्[6]त्युत ॥ ३० ॥
क्रमात्कृतयुगादीनां युगान्ताश्च महर्षयः ।
श्राद्धपक्षे त्रयोदश्यां मघास्विन्दुः करे रविः ॥ ३१ ॥
यदा तदा गजच्छाया श्राद्धे पुण्यैरवाप्यते ।
धनुस्त्रीमीनयुग्माङ्काः षडशीतिमुखाः स्मृताः ॥ ३२ ॥
अश्वयुक्शुक्लनवमी द्वादशी कार्तिके सिता ।
तृतीया चैत्रमासस्य तथा भाद्रपदस्य च ॥ ३३ ॥

---

१ ( घ. ङ. च. ज. ) ०स्ति पापं य०।२ ( क. ख. ग. झ. ) शैवे०। ३ ( क. ख. ज. झ. ०भस्य तु त्र०। ४( ग. )०स्ये तु त्र०। ५ ( घ. ) ०यः पञ्च स०। ६(क.ख.ग.घ.झ.)०वन्त्यतः॥३०

फाल्गुनस्य त्वमावास्या पौषस्यैकादशी तथा।
आषाढस्यापि दशमी माघमासस्य सप्तमी ॥ ३४ ॥
श्रावणस्याष्टमी कृष्णा तथाऽऽषाढी च पौर्णिमा।
कार्तिकी फाल्गुनी चैव ज्येष्ठे पञ्चदशी सिता ॥ ३५ ॥
मन्वन्तरादयश्चैता दत्तस्याक्षयकारिकाः।
संक्रान्तयस्तथा पुण्या भास्वतो द्वादशैव हि ॥ ३६ ॥
पर्वस्वेतेषु दानानि धेनुशैलादिकानि च।
प्रयच्छन्ति द्विजेन्द्रेभ्यो लभन्ते चाक्षयां गतिम् ॥ ३७ ॥
पानीयमप्येषु तिलैर्विमिश्रं दद्यात्पितृभ्यः प्रयतो मनुष्यः।
श्राद्धं कृतं तेन समासहस्रं रहस्यमेतत्पितरो वदन्ति ॥ ३८ ॥ २८५२॥

इति श्रीब्रह्मपुराणोपपुराणे श्रीसौरे सूतशौनकसंवादे तिथिनिर्णयादि-
कथनं नामैकपञ्चाशोऽध्यायः ॥ ५१ ॥

**सूत उवाच**-प्रायश्चित्तं प्रवक्ष्यामि शृणुध्वं मुनिपुङ्गवाः[1]।
सर्वेषामेव वर्णानां शुद्धिमाह यथा रविः ॥ १ ॥
द्विविधं पापमित्युक्तं प्रकटं गुप्तमेव च।
प्रकटं प्रकटेनैव रहस्येन तथेतरत् ॥ २ ॥
वेदशास्त्रार्थविद्वांसो धर्मशास्त्रार्थपारगाः।
कामक्रोधविनिर्मुक्ताः शान्तात्मानो जितेन्द्रियाः ॥ ३ ॥
समाः शत्रौ च मित्रे च हिंसालोभविवर्जिताः।
एकविंशतिसंख्याकाः सप्त पञ्च त्रयोऽथ वा[3] ॥ ४ ॥
यं ब्रूयुरुक्तसंख्याकाः स धर्मः स्यादिति श्रुतिः।
ब्रह्महा मद्यपः स्तेयी गुरुतल्पग एव च ॥ ५ ॥
महापातकिनश्चैते यश्च तैः सह संवसेत्।
यस्तु संवत्सरं त्वेभिः पतितैः सह संवसेत् ॥ ६ ॥
यानशय्यासनैर्नित्यं जानन्वै पतितो भवेत्।
ब्रह्महा द्वादशाब्दानि नियतात्मा वने वसेत् ॥ ७ ॥
भिक्षाहारेण सततं धृत्वा शवशिरोध्वजम्।
एककालं चरेद्भैक्षं दोषं विख्यापयन्नृणाम् ॥ ८ ॥
पूर्णे तु द्वादशे वर्षे ब्रह्महत्यां व्यपोहति।
अकामस्य स्मृता शुद्धिः कामतो मरणान्तिकी ॥ ९ ॥

---

१ (ङ. च.) ०नि वा। २ (ज.) ०निसत्तमाः। ञ्र०। ३ (घ.) ०यो ऽपि वा ॥ ४ ॥

ज्वलन्तं प्रविशेदग्निं भृगोः पतनमेव च ।
कुर्यादनशनं वाऽपि ब्राह्मणार्थे त्यजेदसून् ॥ १० ॥
गुर्वर्थे वा त्यजेत्प्राणान्ब्रह्महत्यां व्यपोहति ।
गत्वा वाराणसीं वाऽपि कालात्तत्र त्यजेदसून् ॥ ११ ॥
सर्वपापविनिर्मुक्तो याति शैवं परं पदम् ।
सुरापस्तु सुरां तप्तामग्निवर्णां पिबेत्ततः ॥ १२ ॥
शुद्धो भवति निर्दग्धस्तद्वर्णं वा पयः पिबेत् ।
गोमूत्रं वा घृतं वाऽपि[1] तत्पापान्मुच्यते द्विजः ॥ १३ ॥
ब्रह्महत्याव्रतं चापि चरेत्तत्पापशान्तये ।
अभिगम्य तु राजानं सुवर्णस्तेयवान्द्विजाः ॥ १४ ॥
स्वकर्म ख्यापयन्ब्रूयात्त्वं मां हन्तुमिहार्हसि ।
गृहीत्वा मुशलं राजा सकृद्धन्यात्तु तं स्वयम् ॥ १५ ॥
वधे तु मुच्यते तेन कृच्छ्रैर्वा विविधैर्द्विजाः ।
*अवगूहेत्स्त्रियं तप्तामायसीं गुरुतल्पगः ॥ १६ ॥
यस्य यस्य च संपर्कात्तत्संयोगी भवेद्द्विजाः ।
तस्य तस्य व्रतं कुर्यात्तत्तत्पापापनुत्तये ॥ १७ ॥
स्नात्वाऽश्वमेधावभृथे सर्वे पातकिनो द्विजाः ।
शुध्येरंस्तत्क्षणादेव रविरित्यब्रवीत्स्वयम् ॥ १८[3] ॥
†मातृष्वसां मातुलानीं तथैव च पितृष्वसाम् ।
भागीनेयीं समारुह्य कुर्यात्कृच्छ्रातिकृच्छ्रकौ ॥ १९ ॥
चान्द्रायणं वा कुर्वीत तस्य पापापनुत्तये ।
भ्रातृभार्यां भागिनेयीं तस्य पापापनुत्तये॥ २० ॥
चान्द्रायणानि चत्वारि पञ्च वा कथितानि वै ।
मातुलस्य सुतां गत्वा सखिभार्यां तथैव च ॥ २१ ॥
अहोरात्रोषितो भूत्वा तप्तकृच्छ्रं समाचरेत् ।
उदक्या गमने चैव त्रिरात्रेण विशुध्यति ॥ २२ ॥

---

* घङचजसंज्ञितपुस्तकेष्विदं श्लोकार्धं नास्ति ।

† ङसंज्ञितपुस्तकेऽयं श्लोको नास्ति ।

---

१ ( घ. ङ. ज. ) ०नं क्वापि । २ ( ङ. च. ज. ) ०पि स तस्मान्मुच्यते द्विजाः ॥ १३
३ ( घ. ) ०वीद्रवः ॥ १८ ॥

ब्राह्मणो ब्राह्मणीं गत्वा कृच्छ्रमेकं समाचरेत् ।
कन्यकागमने चैव चरेच्चान्द्रायणव्रतम् ॥ २३ ॥
रेतः सिक्त्वा जले यस्तु कृच्छ्रं सांतपनं चरेत् ।
वेश्याया गमने[1] चैव प्राजापत्यं समाचरेत् ॥ २४ ॥
नान्यासां निष्कृतिर्दृष्टा शास्त्रेषु परमर्षिभिः ।
संवत्सरस्य चाभ्यासाद्गुरुतल्पव्रतं स्मृतम् ॥ २५ ॥
यदि तत्र प्रजोत्पत्तिर्निष्कृतिर्न विधीयते ।
शूद्रा भवति चेदूढा ब्राह्मणस्य यदा तदा ॥ २६ ॥
न तस्या गमने पापं प्रजोत्पत्तौ तथैव च ।
रण्डाया गमने चैव चरेत्सांतपनं व्रतम् ॥ २७ ॥
संवत्सरेण भवति गुरुतल्पसमो हि सः ।
नटीं शैलूषिकीं चैव रजकीं वेणुजीवनीम् ॥ २८ ॥
गत्वा चान्द्रायणं कुर्यात्तथा चर्मोपजीवनीम् ।
दीक्षितं क्षत्रियं हत्वा चरेद्ब्रह्महणो व्रतम् ॥ २९ ॥
अदीक्षितस्य हनने षडब्दं कृच्छ्रमाचरेत् ।
वैश्यं तु कामतो हत्वा त्र्यब्दकृच्छ्रं समाचरेत् ॥ ३० ॥
निहत्य ब्राह्मणीं विप्रस्त्वष्टवर्षं व्रतं चरेत् ।
वर्षषट्कं तु राजन्यां वैश्यां संवत्सरत्रयम् ॥ ३१ ॥
[2]वत्सरेण विशुद्धः स्याच्छूद्रस्त्रीवध एव च ।
वेश्यां हत्वा प्रमादेन किंचिद्दानमिहोचितम् ॥ ३२ ॥
मर्कटं नकुलं काकं वराहं मूषकं तथा ।
मार्जारं वाऽथ मण्डूकं श्वानं वै कुक्कुटं खरम् ॥ ३३ ॥
पादकृच्छ्रं चरेद्धत्वा कृच्छ्रमश्ववधे स्मृतम् ।
तप्तकृच्छ्रं हस्तिवधे पाराकं गोवधे स्मृतम् ॥ ३४ ॥
कामतो गोवधे नैव शुद्धिर्दृष्टा मनीषिभिः ।
भक्ष्यभोज्यापहरणे यानशय्यासनस्य च ॥ ३५ ॥
पुष्पमूलफलानां च पञ्चगव्यं विशोधनम् ।
तृणकाष्ठद्रुमाणां च शुष्कान्नस्य गुडस्य च ॥ ३६ ॥
चैलचर्मामिषाणां च त्रिरात्रं स्यादभोजनम् ।
हंसं कारण्डवं चैव चक्रवाकं च टिट्टिभम् ॥ ३७ ॥

---

१ (क. ख. ग. ङ.) °ने विप्रः प्रा०। २ (क. ख. ग. ङ.) संवत्सरेण शुद्धिः स्या०।

शुकं च सारसं चैव उलूकं च कपोतकम् ।
चाषं च शिशुमारं च बलाकां च बकं तथा ॥ ३८ ॥
जग्ध्वा चैतान्द्विजः कुर्याद्द्वादशाहमभोजनम् ।
नालिकां तन्दुलीयं च जग्ध्वा कृच्छ्रं समाचरेत् ॥ ३९ ॥
*कामतोदुम्बरं जग्ध्वा तप्तकृच्छ्रं समाचरेत् ।
अलाबुं किंशुकं जग्ध्वा प्राजापत्यं समाचरेत् ॥ ४० ॥
यानि क्षीराण्यपेयानि तेषां पानाद्व्रतं त्विदम् ।
गोमूत्रयावकाहारो मासेनैकेन शुध्यति ॥ ४१ ॥
असुरा(?)मद्यपानेन कुर्याच्चान्द्रायणव्रतम् ।
प्राजापत्यं चरेत्सम्यग्प्रेतोविण्मूत्रभक्षणे ॥ ४२ ॥
विड्वराहखरोष्ट्राणां गोमायोः कपिकाकयोः ।
एतेषां भक्षणे चैव द्विजश्चान्द्रायणं चरेत् ॥ ४३ ॥
ब्राह्मणो ब्राह्मणोच्छिष्टं भुक्त्वा कृच्छ्रं समाचरेत् ।
क्षत्रिये तप्तकृच्छ्रं स्याद्वैश्ये चैवातिकृच्छ्रकम् ॥ ४४ ॥
शूद्रोच्छिष्टं द्विजो भुक्त्वा चरेच्चान्द्रायणव्रतम् ।
सुराभाण्डोदकं पीत्वा चरेच्चान्द्रायणव्रतम् ॥ ४५ ॥
महापातकिनं स्पृष्ट्वा वेदविक्रयिणं तथा ।
रजस्वलां च चाण्डालीमज्ञात्वा यदि भोजयेत्[3] ॥ ४६ ॥
त्रिरात्रोपोषितो भूत्वा पञ्चगव्येन शुध्यति ।
तैलाभ्यक्तो[4] द्विजो यस्तु कुर्यान्मूत्रपुरीषके ॥ ४७ ॥
अहोरात्रेण शुद्धिः स्याच्छ्मश्रुकर्मणि मैथुने ।
खरयानं समारुह्य तथा चैवोष्ट्रयानकम् ॥ ४८ ॥
नग्नो यस्तु विशेदापस्त्रिरात्रेण विशुध्यति ।
पापानामधिकं पापं देवतानां च निन्दनम् ॥ ४९ ॥
मोहाद्वै कुरुते यस्तु कृच्छ्रं चान्द्रायणं चरेत् ।
सकृद्यः कुरुते निन्दां शिवस्य परमेष्ठिनः ॥ ५० ॥
तस्य शुद्धिर्न दृष्टाऽस्ति पुराणे मुनिभिः कृता ।
कुर्याद्यदि गुरुः शुद्धिं कारुण्यात्परमेष्ठिनः ॥ ५१ ॥

---

* कजसंज्ञितपुस्तकयोरेष श्लोको न विद्यते ।

---

१ ( घ. ङ. च. )॰लाकानां पलं त॰। २ ( क. ख. ग. ज. झ. ) ॰ड्डालम॰। ३ (क. ख. ज. झ. ) जनम् ॥ ४६ ॥ ४ ( क. ख. ज. झ. ) ॰भ्यक्तो द्वि॰।

चान्द्रायणत्रयं ब्रूयान्नान्यथा शुद्धिरिष्यते ।
शृणोति गुरुनिन्दां यस्तस्य चान्द्रायणत्रयम् ॥ ५२ ॥
एकासनं चोपविशेद्गुरुणा सह मूढधीः ।
प्रायश्चित्तं न तस्यास्ति पापं गुरुतरं हि तत् ॥ ५३ ॥
प्रायश्चित्तमपीच्छन्ति केचिदज्ञानतः कृते ।
कुर्यात्सांतपनं चैव चान्द्रायणचतुष्टयम् ॥ ५४ ॥
योऽयं शुद्धिविधिः प्रोक्तो गुरोरङ्गीकृतेप्सया ।
वाग्दत्तस्याप्रदानेन ब्रह्महत्यासमं भवेत् ॥ ५५ ॥
प्रायश्चित्तं न तस्यास्ति दत्तैर्ग्रामशतैरपि ।
शिवद्रव्यापहरणं गुरोरप्यणुमात्रकम् ॥ ५६ ॥
कुत्सनं च तथा शंभोर्गुरोरपि तथैव च ।
तथा च शिवभक्तानां ज्ञानस्य च विदूषणम् ॥ ५७ ॥
गिरिजायाश्च विष्णोश्च स्कन्दस्येभमुखस्य च ।
योगिनां च तथा निन्दा निन्दिनोऽपि तथा द्विजाः ॥ ५८ ॥
पापान्येतानि सर्वाणि ब्रह्महत्यासमानि वै ।
तस्मान्न निन्देदेतांस्तु कर्मणा मनसा गिरा ॥ ५९ ॥
यदीच्छेच्छाश्वतं स्थानमिति देवोऽब्रवीद्रविः ।
प्रायश्चित्तस्य सर्वस्य पश्चात्तापो हि कारणम् ॥ ६० ॥
न तेन रहितं पापं गच्छतीति हि निश्चितम् ।
प्रायश्चित्ते कृते पश्चात्तस्मिन्पापे प्रवर्तते ॥ ६१ ॥
कृतं त्वकृतमेव स्यात्तत्पापं पूर्ववत्स्थितम् ।
स्थूलानि यानि पापानि सूक्ष्माणि विविधान्यपि ॥ ६२ ॥
तानि नाशयति क्षिप्रं मुहूर्तं शिवचिन्तनम् ।
सर्वपापापनोदार्थं प्रायश्चित्तं वदाम्यहम् ॥ ६३ ॥
समाहितो जले मग्नः शिवं ध्यायन्प्रसन्नधीः ।
अष्टकृत्वो हर इति जपन्पापैः प्रमुच्यते ॥ ६४ ॥
कार्तिक्यां शुक्लपक्षस्य या सा पुण्या चतुर्दशी ।
तस्यां संपूज्य देवेशं देवदेवमुमापतिम् ॥ ६५ ॥
जप्त्वाऽथर्वशिरो यस्तु ब्रह्महत्यां व्यपोहति ।
तस्यामेव नवम्यां च भगवन्तमुमापतिम् ॥ ६६ ॥

---

१ (क. ख. ग. ज. झ.) ०कृतोऽस्य हः । वा०।

उद्दिश्य दद्याद्यत्किंचित्सर्वपापैः प्रमुच्यते ।
पौर्णमास्याममावास्यां ग्रहणे चन्द्रसूर्ययोः ॥ ६७ ॥
पञ्चामृतैः सुसंस्नाप्य लिङ्गमूर्तिधरं हरम् ।
पूजयित्वा विधानेन सर्वपापैः प्रमुच्यते ॥ ६८ ॥
मन्दवारयुता पुण्या शुक्लपक्षे त्रयोदशी ।
तस्यामुपोष्य विधिना संपूज्य गिरिजापतिम् ॥ ६९ ॥
ब्रह्महत्यादिभिः पापैर्मुक्तो भवति मानवः ।
तृतीया या समाख्याता वैशाखेऽक्षयसंज्ञिता ॥ ७० ॥
तस्यां शिवाय यत्किंचिद्दद्याद्वा शिवयोगिने ।
सर्वपापविनिर्मुक्तः परां गतिमवाप्नुयात् ॥ ७१ ॥
ब्रह्महत्यादिभिः पापैर्युक्तो लोकविनिन्दितः ।
शंकरं शरणं गत्वा सर्वपापैः प्रमुच्यते ॥ ७२ ॥ २९२४ ॥

इति श्रीब्रह्मपुराणोपपुराणे श्रीसौरे सूतशौनकसंवादे प्रायश्चित-
विधिकथनं नाम द्विपञ्चाशोऽध्यायः ॥ ५२ ॥

**ऋषय ऊचुः**–श्रुतमस्माभिरखिलं ज्ञानं माहेश्वरं महत् ।
वर्णाश्रमविधिश्चैव प्रायश्चित्तमशेषतः
इदानीं श्रोतुमिच्छामो विवाहं गिरिजापतेः ॥ १ ॥

**सूत उवाच**–यदुवाच पुरा देवः पृष्टो मार्तण्डसूनुना ।
स्तुत्वा च स्तोत्रवर्येण तच्छृणुध्वं द्विजोत्तमाः ॥ २ ॥

**मनुरुवाच**–भगवन्यद्यथा पृष्टं तत्तथैव त्वयोदितम् ।
श्रुतं तदखिलं तात हृदि तच्च स्थिरीकृतम् ॥ ३ ॥
जानासि त्वं भगवतो माहात्म्यं पार्वतीपतेः ।
भवतो नापरः कश्चिद्वेत्ताऽस्तीत्यब्रवीच्छ्रुतिः ॥ ४ ॥
त्वमीशस्यापरा मूर्तिर्यतोऽसि परमेश्वरः ।
अतस्त्वमेव जानासि महिमानं महेशितुः ॥ ५ ॥
त्वामेव रुद्रं वरदं शिवं परमकारणम् ।
तपनं शरणं यामि सहस्राक्षं हिरण्मयम् ॥ ६ ॥
सूर्यं प्रभाकरं भानुं ज्योतिषां ज्योतिरव्ययम् ।
अम्बिकापतिमीशानं ज्योतिष्मन्तं दिवाकरम् ॥ ७ ॥
हिरण्यबाहुं जटिलमोंकाराख्यं प्रचेतसम् ।
ब्रूहि मे देवदेवेश विवाहं परमेष्ठिनः ॥ ८ ॥

---

१ ( क. ख. ग. ज. झ. ) °तेः । त्वामृते ना° । २ ( ग. ) °श्वर । अ° । ३ ( क. ख. ग. ज. झ. ) °तिष्मन्तं दिवाकरम् । ४ ( क. ख. ग. ज. झ. ) °तिषां ज्योतिरव्ययम् ।

सर्वपापक्षयकरं परं ब्रह्म सनातनम् ॥ १० ॥
नीलग्रीवो महादेवः शरण्यो गोपतिर्विराट् ।
प्रपद्ये त्वां महेशानमुग्रं शर्वं कपर्दिनम् ॥ ११ ॥
त्वां नमामि परं हंसं पशुभर्तारमीश्वरम् ।
सर्वेषां स्मरणादेव देहिनां मोक्षसाधनम् ॥ १२ ॥
य एतैर्नामभिः स्तौति प्रातः संप्रयतात्मवान् ।
तस्य पापं क्षयं याति लक्ष्मीश्चैव प्रवर्धते ॥ १३ ॥
सर्वरोगविनिर्मुक्तो जीवेद्वर्षशतं नरः ।
**सूत उवाच**–एवं मनोर्वचः श्रुत्वा यदुवाच दिवाकरः ॥ १४ ॥
तदहं संप्रवक्ष्यामि शृणुध्वं मुनिपुङ्गवाः ॥ १५ ॥
या सा दक्षसुता देवी सती त्रैलोक्यपूजिता ।
त्यक्त्वा दाक्षं शरीरं च बभूवाचलकन्यका ॥ १६ ॥
नाम्ना कालीति विख्याता विश्वरूपा महेश्वरी ।
जगच्चैतन्यरूपा च जगच्चैतन्यबोधिनी ॥ १७ ॥
अधिष्ठितस्तया काल्या हिमवान्पर्वतोत्तमः ।
पुण्यस्थानमभूद्विप्रा मोक्षदः सर्वदेहिनाम् ॥ १८ ॥
सिद्धानां च मुनीनां च गन्धर्वाणां दिवौकसाम् ।
आवासः किंनराणां च स्मरणात्पुण्यदो नृणाम् ॥ १९ ॥
शिवं भर्तारमिच्छन्ती तस्मिन्गिरिवरोत्तमे ।
तपस्तप्तुं गता काली शिवा पित्रोरनुज्ञया ॥ २० ॥
अथास्मिन्नन्तरे दैत्यस्तारको लोककण्टकः ।
जातो दैत्यकुले वीरो मृत्युरूपो दिवौकसाम् ॥ २१ ॥
ब्रह्माणं तपसाऽऽराध्य वरं तस्मादवाप ह ।
देवाः पलायितास्तेन तारकेण बलीयसा ॥ २२ ॥
देवानां योषितो याश्च बलादपहृताश्च ताः ।
दुःस्वामिना सुसंतप्ताः शक्राद्याः प्रथितौजसः ॥ २३ ॥

---

१ ( क. ख. ग. घ. ङ. च. झ. ) ०णुध्वं मुनिपुंगवाः । २ ( क. ख. ग. ज. झ. ) संनिय०। ३ ( घ. ङ. च. ) ०र्वपापवि०। ४ ( घ. ङ. च. छ. ) ०पा या ज०। ५ ( क. ख. ग. झ. ञ. ) ०वाप्य च । दे०। ६ ( घ. ङ. च. छ. ) ०तास्ततः । दु०।

गताः सशक्राः शरणं ब्रह्माणं त्रिदशेश्वरम् ।
आगतांश्च सुरान्दृष्ट्वा ततः प्रोवाच पद्मजः ॥ २४ ॥

**ब्रह्मोवाच**-कस्मात्त्रस्ताः सुरा यूयमागता वै ममान्तिके ।
ब्रूत तत्सकलं देवा उपायं वच्मि वः स्फुटम् ॥ २५ ॥

**देवा ऊचुः**-तारकाद्भयसंत्रस्ताः शरणं देवमागताः ।
यथा मृत्योर्भयं देव तस्मान्नस्त्रातुमर्हसि ॥ २६ ॥
अपि क्षणं सुरश्रेष्ठ न लभामो वयं सुखम् ।
त्रिंशद्वर्षसहस्राणि हरितारकयोस्तदा ॥ २७ ॥
अहर्निशमविश्रान्तं युद्धमासीत्सुदारुणम् ।
तथाऽपि न जितस्तेन देवदेवेन चक्रिणा ॥ २८ ॥
अवध्योऽयमिति ज्ञात्वा ययौ त्यक्त्वा महोदधिम् ।
भ्रान्तचित्तस्तदा शार्ङ्गी गतस्तूर्णं महाबलः[1] ॥ २९ ॥
वयमप्येवमेवं हि भीतास्त्वां शरणं[2] प्रभो ।
आगतास्त्राहि नस्तस्मात्सुखदो भव पद्मज ॥ ३० ॥

**ब्रह्मोवाच**-शृणुध्वं [3]मेऽमराः सर्वे युष्माकं सुखदं महत् ।
योऽसौ दृप्तस्तारकाख्यस्तताप परमं तपः ॥ ३१ ॥
तस्य दैत्यस्य तपसा दह्यमानं चराचरम् ।
दृष्ट्वा तद्वरदानार्थं गतोऽहं तारकान्तिकम् ॥ ३२ ॥
उक्तं मया वरं वत्स वरयेति महासुरः ।
अब्रवीद्दैत्यराजो मामभिवन्द्य कृताञ्जलिः ॥ ३३ ॥

**तारक उवाच**-अवध्योऽहं सुरैः सर्वैर्विष्ण्वाद्यैः पद्मसंभव ।
भवाम्यहं यथा देव तथा त्वं देहि मे वरम् ॥ ३४ ॥
एवमस्त्वित्यहं तस्मै वरं दत्वा सुरोत्तमाः ।
अन्यच्चोक्तं हितार्थं वः कस्माद्वध्योऽसि तद्वद ॥ ३५ ॥

**तारक उवाच**-*योऽयं देवाधिदेवेशः कपर्दी नीललोहितः ।
तस्य रेतः सुराः पीत्वा सगर्भा[4] विष्णुना सह ॥ ३६ ॥
भविष्यन्ति[5] ततो[6] जातान्मृत्युरिष्टो न वाऽपरः[7] ।
तथास्त्विति ततश्चोक्त्वा गतोऽहं मेरुमूर्धनि ॥ ३७ ॥

---

*कजसंज्ञितपुस्तकयोरयं श्लोको नास्ति ।

---

१ ( क. घ. ग. झ. ) ०बलम्० ॥ २९ ॥ २ ( क. ख. ग. ज. झ. ) ०गं विभो । ३ ( घ. ङ. च. छ. ) ०मे सुराः । ४ ( क. घ. ङ. च. छ. ज. झ. ) सभार्या वि०। ५ ( च. छ. ज. ) ०ध्याति त०। ६ ( च. छ. ) ०तो जन्म मृ०। ७ ( च. छ. झ. ) ०परम् । त०।

गच्छध्वं शरणं तस्माच्छरण्यं सर्वदेहिनाम् ।
विश्वेश्वरमुमाकान्तं शंकरं लोकशंकरम् ॥ ३८ ॥
मुक्त्वा हरात्मकं देवं त्रैलोक्ये सचराचरे ।
न तं पश्यामि भो देवास्तारकं यो वधिष्यति ॥ ३९ ॥
ब्रह्मणो वचनं श्रुत्वा सहस्राक्षः शचीपतिः ।
कथं भविष्यतीत्येवमालोक्य मनसा द्विजाः ॥ ४० ॥
गुरुणा दैवतैः सार्धं पुनरेव स देवराट् ।
हरस्यैव सुतोत्पत्तावुपायश्चिन्त्यतां सुराः ॥ ४१ ॥
इत्युक्त्वा प्रययुर्देवाः शक्राद्या ब्रह्मणा सह ।
मेरोरुत्तरतः शृङ्गं यत्र तिष्ठति माधवः ॥ ४२ ॥
*गुप्तस्तिष्ठत्यमेयात्मा तारकाद्भयपीडितः ।
सब्रह्मकान्सुरान्दृष्ट्वा हृष्टः प्रोवाच माधवः ॥ ४३ ॥

**माधव उवाच**–उपायश्चिन्तितः कोऽत्र वधार्थं तारकस्य हि ।
अस्ति चेदुच्यतां देवाः शर्म नो जायते यथा ॥ ४४ ॥

**सूत उवाच**–एवं विष्णोर्वचः श्रुत्वा ब्रह्माद्याः सुरसत्तमाः ।
यथोक्तं ब्रह्मणा तेभ्यस्तथोक्तं विष्णवे सुरैः ॥ ४५ ॥
किमिदानीं तु कर्तव्यमिति संचिन्त्य देवराट् ।
सोऽस्मरन्मनसा काममजेयमसुरैः सुरैः ॥ ४६ ॥
शक्रस्य चिन्तितं ज्ञात्वा कामो रतिपतिः स्वयम् ।
शचीपतिं समागम्य प्राह पुष्पधनुर्धरः ॥ ४७ ॥

**काम**[1] **उवाच**–किं कार्यं त्रिदशश्रेष्ठ कर्तव्यं किं मया प्रभो ।
तीव्रेण तपसा को हि स्थानमीहेत तावकम् ॥ ४८ ॥
किं वा काचित्तवाऽऽदेशं कर्तुं नेच्छति चाङ्गना ।
तां कामिनीं करोम्यद्य तव ध्यानपरायणाम् ॥ ४९ ॥
न कश्चिदस्ति मे शूरो न मानी[2] न च पण्डितः ।
व्यापयामि जगत्कृत्स्नं ब्रह्माद्यं स्तम्बगोचरम् ॥ ५० ॥

---

* कखगजझसंज्ञितपुस्तकेष्वयं श्लोको नास्ति०।

---

१ ( घ. ङ. च. छ. ) कंदर्प उ०। २ ( क. ख. ग. छ. झ. ) ०नी नापि प०।

अथ किं बहुनोक्तेन दुर्वासा वा महामुनिः ।
सोऽपि विद्धः पतत्याशु मद्बाणैर्मरुतां पते ॥ ५१ ॥

**इन्द्र उवाच**–जानाम्यहं रतेर्नाथ सामर्थ्यं पुष्पधन्विनः ।
नूनं हि सर्वकार्याणि त्वत्तः सिध्यन्ति नान्यथा ॥ ५२ ॥
गच्छ पार्श्वं महेशस्य सुराणां हितकाम्यया ।
चित्तं हरस्य संक्षोभ्य पार्वत्याः संगमं कुरु ॥ ५३ ॥
एतदेव हि मे कार्यमेष एव मनोरथः ।
एतस्मात्कारणात्त्वं हि स्मृतः पुष्पधनुर्धर ॥ ५४ ॥
एवं शक्रवचः श्रुत्वा बलवान्मकरध्वजः ।
मधोः सखा रतीयुक्तः पञ्चबाणो मनोभवः ॥ ५५ ॥
यत्राऽऽस्ते भगवाञ्शंभुर्ध्यानदृष्ट्या समाहितः ।
निष्कम्पः स्वात्मनाऽऽत्मानं चिन्तयानो महेश्वरः ॥ ५६ ॥
प्राप्य शंभोरायतनमपश्यन्मकरध्वजः ।
शैलादिं द्वारदेशे तु मेरुशृङ्गमिवोदितम् ॥ ५७ ॥
सर्वाभरणसंयुक्तं सहस्रादित्यवर्चसम् ।
शूलहस्तं त्रिनेत्रं च चन्द्रावयवभूषणम् ॥ ५८ ॥
वज्रपाणिं चतुर्बाहुं द्वितीयमिव शंकरम् ।
तं दृष्ट्वा मदनो विप्राश्चिन्ताक्रान्तस्तदाऽभवत् ॥ ५९ ॥
कथं प्रविश्य वक्ष्यामि शंभुं त्रिदशवन्दितम् ।
कथं कार्यं करिष्यामि सुराणां प्रीतिवर्धनम् ॥ ६० ॥
चिन्तयित्वा तु बहुधा वञ्चनार्थाय नन्दिनः ।
वायुरूपं ततः कृत्वा सुगन्धं मृदुशीतलम् ॥ ६१ ॥
प्रविवेश तदा कामो दक्षिणां दिशमाश्रयम् ।
तेन याम्यां दिशि गतो वायुर्वाति सुखावहः ॥ ६२ ॥
अद्यापि कारणात्सोऽयं सुगन्धो (?) मृदुशीतलः ।
अपश्यत्तत्र मदनः सूर्यकोटिमिवोदितम् ॥ ६३ ॥
सहस्रनयनं देवं सहस्रतनुमीश्वरम् ।
नीलकण्ठं सुधाभासं शुभ्रखण्डेन्दुधारिणम् ॥ ६४ ॥
जगदुत्पत्तिसंहारस्थित्यनुग्रहकारिणम् ।
शुद्धस्फटिकसंकाशं विधूममिव पावकम् ॥ ६५ ॥

---

१ ( क. ख. ग. झ. ) °मि देवानां प्री°।

रुण्डमालाचितं देवं सूर्पमालाविभूषितम्‌ ।
अनौपम्यमसादृश्यमप्रमेयमनाकुलम्‌ ॥ ६६ ॥
जगच्चक्षुर्जगद्बाहुं जगच्छीर्षं जगन्मयम्‌ ।
जगत्पादं जगच्छ्रोत्रं[2] सूक्ष्मस्थूलं परात्परम्‌ ॥ ६७ ॥
रुद्रं सर्वं पशुपतिमुग्रं भीमं भवं द्विजाः ।
महादेवं महेशानमष्टमूर्तिं जगत्पतिम्‌ ॥ ६८ ॥
व्यक्ताव्यक्तं त्रिलोकेशं पूजितं च सुरासुरैः ।
अथ दृष्ट्वा महादेवं प्रहृष्टो मकरध्वजः ॥ ६९ ॥
निकृष्य चापमापूर्य स्थितः पश्यन्भवोद्भवम्‌ ।
एवं स्थितस्य कामस्य सहस्राण्ययुतानि षट्‌ ॥ ७० ॥
गतानि तस्य वर्षाणि मुनीन्द्राश्चित्तजन्मनः ।
ततः स भगवान्देवो नेत्रे उन्मील्य शंकरः ॥ ७१ ॥
अपश्यद्गिरिजां देवीमग्रे विश्वेश्वरः शिवः ।
*गिरीन्द्रपुत्रीं तपसः प्रसक्तां लज्जयान्विताम्‌ ॥ ७२ ॥
दृष्ट्वा किमत्रेतिविकल्पबुद्ध्या कामोऽयमत्रेति विचिन्त्य शर्वः ।
ज्ञात्वा विलोक्य प्रविकृष्टचापं नेत्राग्निनाऽसौ मदनोऽपि दग्धः ॥ ७३ ॥ २९९७ ॥

इति श्रीब्रह्मपुराणोपपुराणे श्रीसौरे सूतशौनकसंवादे मदनदहनं नाम त्रिपञ्चाशोऽध्यायः ॥ ५३ ॥

**सूत उवाच**–दग्धे रतिपतौ शंभुरुवाचाचलकन्यकाम्‌ ।
किमहं तव देवेशि करोमि मनसि स्थितम्‌ ॥ १ ॥
वरं ब्रूहि महादेवि दास्याम्यद्य सुरेश्वरि ।
मयि प्रसन्ने देवेशि किं दुर्लभमिहास्ति ते ॥ २ ॥

**श्री[4] पार्वत्युवाच**–हते तु कामे वद नीलकण्ठ वरेण किं देव करोमि तेऽद्य ।
विनैव कामेन न चास्ति भावः स्त्रीपुंसयोर्भास्करकोटिकल्पः ॥ ३ ॥
भावस्य हानेः सुखसंनिकर्षः कथं भवेद्ब्रूहि सुरेशवन्द्य ।
उवाच भूयो मदनान्तकारी देहे न चाहं मदनं सुनेत्रे ॥
नेत्रस्य चैव ज्वलनात्मकस्य स्वरूपमेतद्वद किं करोमि ॥ ४ ॥

---

* कखगझसंज्ञितपुस्तकेषु गिरीन्द्रेत्यादिश्लोकार्धस्थान इदं श्लोकार्धमस्ति । तद्यथा-गिरीन्द्रपुत्रीं तपसः प्रसक्तां लज्जान्वितां पुष्पशरान्तकारी-इति ।

---

१ ( क. ख. ग. झ. ) ०लाञ्चितं । २ ( क. ख. ग. झ. ) ०त्रं स्थूलसूक्ष्मं प०। ३ ( घ. ङ. च. छ. ) ०माकृष्य स्थि०। ४ ( घ. ङ. च. छ. ज. ) देव्युवाच । ५ ( च. ) ०नेत्रम्‌ ॥ ४ ॥

देव्युवाच—बालेति मत्वा भव भूतनाथ व्यामोहसे किं त्वमनिन्द्यवर्य।
स्वतश्चवृत्तिर्यदि वा तवैषा तदा दहेर्मामपि चाग्रसंस्थाम् ॥ ५ ॥
यदि विश्वेश्वरो देवो ब्रह्मादीनां हरः शिवः ।
प्रतारणे प्रवृत्तश्चेत्को निवारयितुं क्षमः ॥ ६ ॥
नाहं प्रतार्या भगवंस्त्वामहं शरणं गता ।
गतिर्नान्यास्ति मे देव तस्मान्मां त्रातुमर्हसि ॥ ७ ॥
त्वमेव चक्षुर्जगतस्त्वमेव वचसां पतिः ।
त्वमेव धाता जगतो विधाता विश्वतोमुखः ॥ ८ ॥
नमाम्यहं देववरं पुराणमुपेन्द्रवेधोमरराजजुष्टम् ।
शशाङ्कसूर्याग्निमयं त्रिनेत्रं ध्यानाधिगम्यं जगतः प्रकाशम् ॥ ९ ॥
त्वां वाङ्मयाधारमनन्तवीर्यं ज्ञानार्णवं चैव गुणार्णवं च ।
परापरं धामनिधिं सुसूक्ष्ममनादिमध्यान्तविहीनरूपम् ॥ १० ॥
हिरण्यगर्भं जगतः प्रसूतिं नमामि देवं हरिणाङ्कचिह्नम् ।
पिनाकपाशाङ्कुशशूलहस्तं कपर्दिनं मेघसहस्रघोषम् ॥ ११ ॥
तमालकण्ठं स्फटिकावदातं नमामि शंभुं भुवनैकसिंहम् ।
*दशार्धवक्त्रं सुरसिन्धुशीर्षं शशाङ्कचिह्नं नरसिंहदारुणम् ॥ १२ ॥
त्वां नमामि शरभरूपधरोरगेन्द्रराजहारं चलद्वलयभूषणं हरम् ।
वरविबुधमुकुटार्चिताङ्घ्रिं नमामि हि हरिचर्मवसनं त्वाम् ॥ १३ ॥
यदक्षरं निर्गुणमप्रमेयं यज्ज्योतिरेकं प्रवदन्ति सन्तः ।
दूरंगमं देवमनन्तमूर्तिं नमामि सूक्ष्मं परमं पवित्रम् ॥ १४ ॥
नमामि रुद्रं प्रमथाधिनाथं धर्मासनस्थं प्रकृतिद्वयस्थम् ।
तेजोनिधिं बालशशाङ्कमौलिं कालेन्धनं वह्निरवीन्दुनेत्रम् ॥ १५ ॥
सूत उवाच—प्रसन्नोऽथाब्रवीद्देवीं कालीं त्रिपुरहा हरः ।
वरयस्व वरं देवि ददामि तव सुव्रते ॥ १६ ॥
देव्युवाच—जीवत्वयं महादेव कामो लोकप्रतापनः ।
विना कामेन भगवन्नाहं याचे कथंचन ॥ १७ ॥
ईश्वर उवाच—भवत्वनङ्गो मदनस्त्वत्प्रियार्थं सुलोचने ।
तेन रूपेण लोकस्य क्षोभणाय भवत्वलम् ॥ १८ ॥

* घङछसंज्ञितपुस्तकेषु दशार्धेत्यादिश्लोकार्धस्थाने भिन्नं श्लोकार्धं दृश्यते । तद्यथा—दशार्धवक्त्रं सुरसिंधुशीर्षं शशाङ्कचिन्हं नरसिंहदारुणम्—इति ।

१ (क. ख. ग. ङ. झ. )°द्वारच°।

ततोत्थितो वायुरिवाप्रमेयस्त्वनङ्गरूपो मकरध्वजश्च ।
हरस्य वाक्यादुमयेरितश्च सचापबाणः सरतिर्बभूव ॥ १९ ॥
इति प्रीत्या महेशानो वरं दत्वा हरः स्वयम् ।
स्मरस्य पञ्चबाणस्य तत्रैवान्तरधीयत ॥ २० ॥
यः पठेदिममध्यायं भक्त्या देवस्य संनिधौ ।
सर्वपापविनिर्मुक्तो ब्रह्मलोके महीयते ॥ २१ ॥ ३०१८ ॥

इति श्रीब्रह्मपुराणोपपुराणे श्रीसौरे सूतशौनकसंवादे महादेववरप्रदानं नाम चतुष्पञ्चाशोऽध्यायः ॥ ५४ ॥

**सूत उवाच**–शंकराच्च वरं लब्ध्वा देवी त्रैलोक्यपूजिता ।
उमा भगवती काली संप्राप्ता पितुर्मन्दिरम् ॥ १ ॥
अपश्यद्गिरिराजस्तां चन्द्रकान्तिनिभाननाम् ।
दीपयन्तीं जगत्सर्वं विद्युत्पुञ्जसमप्रभाम् ॥ २ ॥
अङ्के कालीं समाधाय शिरस्याघ्राय च द्विजाः ।
उवाच परया प्रीत्या विश्वेशीं पर्वतेश्वरः ॥ ३ ॥

**हिमालय उवाच**–तपसा तोषितः शंभुरमेयात्मा सनातनः ।
कीदृशश्च वरो लब्धस्त्वया देवान्महेश्वरात् ॥ ४ ॥

**देव्युवाच**–तपसाऽऽराध्य विश्वेशं गोपतिं शूलपाणिनम् ।
तमेवेशं पतिं लब्ध्वा कृतार्थाऽस्मीति मे वरः ॥ ५ ॥
भेदोऽस्ति तत्त्वतो राजन्न मे देवान्महेश्वरात् ।
सिद्धमेवाऽऽवयोरैक्यं वेदान्तार्थविचारणात् ॥ ६ ॥
यदेतदैश्वरं तेजस्तन्मां विद्धि नगेश्वर ।
सर्वभूतात्मकं शान्तं विश्वं यत्र प्रतिष्ठितम् ॥ ७ ॥
अहं सर्वान्तरा शक्तिर्माया मायी महेश्वरः ।
अहमेका परा शक्तिरेक एव महेश्वरः ॥ ८ ॥
नाऽऽवयोर्विद्यते राजन्भेदो वै परमार्थतः ।
एकाऽहं[2] विश्वगाऽनन्ता विश्वरूपा सनातनी ॥ ९ ॥
पिनाकपाणेर्दयिता नित्या गिरिवरोत्तम ।
ज्ञातुं न शक्ता ब्रह्माद्या मत्स्वरूपं हि तत्त्वतः ॥ १० ॥
इच्छाशक्तिरहं राजञ्ज्ञानशक्तिरहं पुनः ।
क्रियाशक्तिः प्राणशक्तिः शक्तिमान्भगनेत्रहा ॥ ११ ॥

१ (घ. ङ. च. छ. ज.) ०मण्डलम् । २ (क. ख. ग. ज. झ.) ०हं सर्वगा० ।

कूटस्थमचलं सूक्ष्मं सत्यं निर्गुणमव्ययम् ।
आनन्दमक्षरं ब्रह्म तात जानीहि मत्पदम् ॥ १२ ॥
तत्पदं ते प्रपश्यन्ति येषां भक्तिर्मयि स्थिरा ।
नान्यथा कर्मकाण्डैश्च तपोभिश्चापि दुष्करैः ॥ १३ ॥
शिवस्य परमा शक्तिर्नित्याऽऽनन्दमयी ह्यहम् ।
ब्रह्मणो वचनाद्राजन्नभवं दक्षकन्यका ॥ १४ ॥
शूलिनो देवदेवस्य निन्दकं परमेष्ठिनः ।
विनिन्द्य पितरं दक्षं जाताऽस्मि तव कन्यका ॥ १५ ॥
स्वेच्छयैवावतारो मे नैव चान्यवशात्पितः ।
तस्मान्मां परमां शक्तिमिति ज्ञात्वा सुखी भव ॥ १६ ॥
नाशयामि तवाज्ञानं भवबन्धनकारणम् ।
दिव्यं ददामि ते ज्ञानं दुःखत्रयविनाशकृत् ॥ १७ ॥
एवं देव्याः प्रसादेन हिमवान्पर्वतेश्वरः ।
लब्ध्वा माहेश्वरं ज्ञानं जीवन्मुक्तस्तदाऽभवत् ॥ १८ ॥
अपश्यदखिलं विश्वमुमामहेश्वरात्मकम् ।
नित्यानन्दं निर्विभागमात्मानं च तदात्मकम् ॥ १९ ॥
मानमेयादिरहितं भेदाभेदविवर्जितम् ।
बाह्याभ्यन्तरनिर्मुक्तं शुद्धं निर्गुणमव्ययम् ॥ २० ॥
न समीपं न दूरस्थं न स्थूलं नापि वा कृशम् ।
न दीर्घं नापि वा ह्रस्वं न पीतं नापि लोहितम् ॥ २१ ॥
न नीलं न च कृष्णं च न शुक्लं नापि कर्बुरम् ।
पाणिपादविनिर्मुक्तं न श्रोत्रं न च चाक्षुषम् ॥ २२ ॥
अनासिकमजिह्वं च मनोबुद्धिविवर्जितम् ।
बन्धमोक्षविनिर्मुक्तं बोधाबोधविवर्जितम् ॥ २३ ॥
नाऽऽधारस्थं न नाभिस्थं न हृदिस्थं न कण्ठगम् ।
नापि नासाग्रगं विप्रा न भ्रूमध्यगतं हि तत् ॥ २४ ॥
न नाडीत्रयमध्यस्थं द्वादशान्तगतं न च ।
नोर्णातन्तुनिभं तत्तु विद्युत्पुञ्जनिभं न च ॥ २५ ॥
सर्वोपाधिविनिर्मुक्तं चैतन्यं सर्वगं शिवम् ।
तदेवेदमिदं विश्वं तस्मादन्यन्न विद्यते ॥ २६ ॥

---

१ ( क. ख. ग. घ. ज. झ. ) ०मामाहे०।

आस्थाय परमां भक्तिं शिवयोः पादपङ्कजे ।
पित्रोर्हिरण्यगर्भस्य शार्ङ्गिणश्चापि सुव्रत ॥ २७ ॥ ३०४५ ॥

इति श्रीब्रह्मपुराणोपपुराणे श्रीसौरे सूतशौनकसंवादे माहेश्वर-
ज्ञानकथनं नाम पञ्चपञ्चाशोऽध्यायः ॥ ५५ ॥

**सूत उवाच**–आह्वानयत्ततो विश्वकर्माणं पर्वतेश्वरः ।
विवाहमण्डपं कर्तुं नानाश्चर्यविभूषितम् ॥ १ ॥
तेनाऽऽहूतस्ततः शीघ्रं विश्वकर्मा महामतिः ।
प्रययौ हिमवत्पार्श्वं कुशलो विश्वकर्मणि ॥ २ ॥
दृष्ट्वाऽथ विश्वकर्माणं हृष्टः पर्वतराट् स्वयम् ।
स्वागतासनपाद्याद्यैः सादरस्तमपूजयत् ॥ ३ ॥
विधिवत्पूजयित्वा तु विश्वकर्माणमब्रवीत् ॥ ४ ॥

**पर्वतराडुवाच**–विश्वकर्मन्महाप्राज्ञ सर्वशास्त्रविशारद ।
यत्कारणादिहाऽऽहूतो मया त्वं तद्ब्रवीम्यहम् ॥ ५ ॥
विश्वेश्वरो महादेवो भगवान्नीललोहितः ।
आगमिष्यति विश्वेशीं परिणेतुं शिवः स्वयम् ॥ ६ ॥
मण्डपस्तत्र कर्तव्यो यज्ञार्थं हि हिरण्मयः ।
योजनायुतविस्तीर्णमनेकाश्चर्यसंयुतम् ॥ ७ ॥
दृष्टमात्रेण सर्वस्य प्रीतिर्भवति वै यथा ।
तथा त्वं मण्डपं शीघ्रं कुरु विश्वेश्वरप्रियम् ॥ ८ ॥
एवमुक्तस्तदा तेन गिरिणा विश्वकर्मकृत् ।
वैवाहं मण्डपं शीघ्रमसृजद्ब्रह्मविग्रहम् ॥ ९ ॥
स्तम्भैर्हैममयैश्चित्रैर्मणिभिः सूर्यसंनिभैः ।
इन्द्रनीलमयैर्दिव्यैर्वैडूर्यैर्विद्रुमैरपि ॥ १० ॥
मौक्तिकैर्वज्रनीलैश्च चन्द्रकान्तमयैरपि ।
स्फटिकैर्विद्रुमैश्चापि मुक्तादामविलम्बितैः ॥ ११ ॥
चामरालंकृतैरुच्चैर्दर्पणैर्विविधैरपि ।
*सूर्यबिम्बप्रतीकाशैश्चन्द्रबिम्बसमप्रभैः ॥ १२ ॥

---

* सूर्यबिम्बेत्यादि शोभितमित्यन्तं कज्ञसंज्ञितपुस्तकयोर्नास्ति ।

---

१ ( क. ख. ग. ज्ञ. ) ०व्रताः ॥ २७ ॥ २ ( घ. ङ. च. छ. ) ०राट्ठतः (त) । स्त्रा०। ३ ( घ. ज्ञ. ) ०दरं तम०। ४ ( क. ख. ग. ज्ञ. ) हिमालय उवा०। ५ ( ङ. च. छ. ) ०मात्रस्य स०। ६ ( घ. ) ०तृ । विवाहम०। ७ ( घ. ) ०त्रैर्विचित्रमणिविग्रहैः । इ०।

ध्वजमालाकुलं दिव्यं पताकानेकशोभितम् ।
रत्नजैः सिंहशार्दूलैर्गजवर्णैर्निरन्तरम् ॥ १३ ॥
रचितं मण्डपं दिव्यं प्रियं त्रिपुरविद्विषः ।
रुद्राणां च तथा रूपैर्गन्धर्वाप्सरसां तथा ॥ १४ ॥
देवैश्चैव मनोहार्यैर्मर्त्यजैश्च तथा परैः ।
मालाभिस्तबकैर्विमा रत्नजैः कुसुमैर्भृशम् ॥ १५ ॥
*क्वचिच्चामीकरेणाथ हृद्यां भूमिं विनिर्ममे ।
क्वचित्पद्मदलाकारामिन्द्रायुधसमप्रभाम् ॥ १६ ॥
क्वचिन्नीलोत्पलाभासां नीलजीमूतसप्रभाम् ।
मनसैव यथा ब्रह्मा विश्वमेतद्धि निर्ममे ॥ १७ ॥
क्वचिद्बन्धूकसंकाशां दीप्तां विद्रुमसंनिभाम् ।
अनेकाकारविन्यासैस्ततो धात्रीं विनिर्ममे ॥ १८ ॥
क्वचित्कलशविन्यासैः क्वचित्स्वस्तिकभूषितैः ।
हरिचन्दनगन्धाद्यैः कर्पूरोद्गारगन्धिभिः ॥ १९ ॥
जातीपाटलपद्मानां चम्पकानां सुगन्धिभिः ।
आसनैर्विविधैः पूतैश्चन्द्रजीमूतसंनिभैः ॥ २० ॥
उदयार्कसमाकारैर्मेरुशृङ्गोपमैर्भृशम् ।
तमालचम्पकाभैश्च इन्द्रनीलमयैस्तथा ॥ २१ ॥
सिन्दूरचयसंकाशैर्जपाकुसुमसंनिभैः ।
संध्यारागनिभैश्चान्यै†र्दाडिमीकुसुमप्रभैः ॥
हेमकुम्भनिभैश्चान्यैर्मुक्ताफलनिभैरपि ॥ २२ ॥
तारकापुञ्जसंकाशैः पद्मनीलेन्द्रनीलजैः ।
तत्रैव मण्डपे दिव्ये तोयस्थानान्यकल्पयत् ॥ २३ ॥
दीर्घिकास्तोयपूर्णाश्च क्षीरपूर्णास्तथैव च ।
दधिह्रदाननेकांश्च सुधासंपूरितानि वै ॥ २४ ॥
घृतपूर्णा महानद्यो रत्नसोपानमण्डिताः ।
वृक्षांश्च कामिकान्दिव्यान्दीर्घिकाणां तथोभयोः ॥ २५ ॥

* गजसंज्ञितपुस्तकयोरेवेदं श्लोकार्धमास्ति ।
† दाडिमीत्याद्यन्यैरित्यन्तं घङचछजसंज्ञितपुस्तकेषु नास्ति ।

१ ( क. ख. ग. ) ०न्तरैः ॥ १३ ॥ २ ( घ. च. छ. ) विततं । ३ ( क. ख. ग. ज. झ. ) ०नि च ॥ २५ ॥

अस्रजत्क्रीडनार्थाय सदा पुष्पफलान्वितान्।
भक्ष्यैर्नानाविधैर्दिव्यैः फलितान्मुनिपुङ्गवाः ॥ २६ ॥
कदलीखण्डमध्ये तु तमालगहनेष्वपि।
क्रीडावाप्यः सुशोभाढ्यास्तथैवाशोकसंकुलाः ॥ २७ ॥
दीर्घिकाणां तटे रम्ये तरुणाः स्निग्धशाखिषु।
दोलाश्चाऽऽबन्धयामासुर्मुक्तादामभिरुज्ज्वलैः ॥ २८ ॥
*रमणीयानि दिव्यानि मनस्तुष्टिकराणि च।
उद्यानवनखण्डानि स्थाने स्थानेष्वकल्पयत् ॥ २९ ॥
त्रैलोक्यतिलके तस्मिन्हेमपीठस्य मध्यगाम्।
सिंहैश्च विधृतां श्वेतैः सहस्रदलमण्डिताम् ॥ ३० ॥
पारिजातद्रुमाणां च मञ्जरीभिरलंकृताम्।
इन्द्रनीलमयीं वेदिं चारुसोपानभूषिताम् ॥ ३१ ॥
शतयोजनविस्तीर्णां स्तम्भैश्च कलशान्विताम्।
नानानेकाप्सरोभिश्च रत्नजां दिव्यरूपिणीम् ॥ ३२ ॥
पीनोरुजघनास्ताश्च पीनोन्नतपयोधराः।
चामराग्रकरास्तास्तु हारावलिविभूषिताः ॥ ३३ ॥
वीणावेणुकराश्चान्याः काञ्चीगुणविराजिताः।
चञ्चलायतनेत्राश्च तिलकालकमण्डिताः ॥ ३४ ॥
मध्यक्षामाश्च बिम्बोष्ठीः कमलोत्पलमालिकाः।
अनेकाकारविन्यासैर्निर्ममे ताः पृथक्पृथक् ॥ ३५ ॥
एवं हि दिव्यैः सुरसुन्दरीभिर्नानाप्रयोगैर्विविधैश्च चित्रैः।
मनोभिरामैर्नयनाभिरामैर्युक्तान्तवेदिं त्वरितश्चकार ॥ ३६ ॥ ३०८१ ॥
इति श्रीब्रह्मपुराणोपपुराणे श्रीसौरे सूतशौनकसंवादे साम्बविवाहमण्डपवर्णनं नाम षट्पञ्चाशोऽध्यायः ॥ ५६ ॥

**सूत उवाच**—मण्डपं निर्मितं श्रुत्वा शंकरो विश्वकर्मणा।
शैलादिमब्रवीद्देवो विश्वेशो विश्वपूजितः ॥ १ ॥
**श्रीभगवानुवाच**—हितार्थं सर्वदेवानामस्माकं च विशेषतः।
विवाहयज्ञ आरब्धो नगराजेन धीमता ॥ २ ॥

---

* कखसंज्ञितपुस्तयोरेष श्लोको न दृश्यते।

---

१ (ग.) न्त्रितैः। ना०। २ (घ. छ.) ०मध्ये क्षा०। ३ (ङ. च. छ.) ०लोउज्ज्वल०।

दानार्थमद्रिकन्यायाः प्रस्थितो हिमवान्स्वयम् ।
अहं तत्र गमिष्यामि सुरैर्ब्रह्मादिभिः सह ॥ ३ ॥
त्वमिहाऽऽवाहय सुरान्कालाग्न्यादीन्द्विजांस्तथा ।
द्वीपांश्च सागरांश्चैव पर्वतांश्च नदीस्तथा ॥ ४ ॥
मण्डपं सुन्दरं यत्र निर्मितं विश्वकर्मणा ।
तत्र तिष्ठत्युमा देवी मम ध्यानपरायणा ॥ ५ ॥
विद्युल्लतेव भासन्ती चन्द्रकोटिनिभानना ।
एवमुक्तो महेशेन नन्दी सूर्यायुतप्रभः ॥ ६ ॥
नत्वा विश्वेश्वरं देवं ध्यानारूढस्तदाऽभवत् ।
ध्यातः क्षणात्समायातः कालाग्निर्विश्वदाहकः ॥ ७ ॥
रुद्रैः परिवृतो देवः कोटिकोटिगणेश्वरैः ।
ततोऽब्रवीत्स कालाग्निः सर्वज्ञं नन्दिकेश्वरम् ॥ ८ ॥
किमर्थमहमाहूतो देवदेवेन शंभुना ।
उपस्थितो वा प्रलयः संहरिष्यामि तत्क्षणात् ॥ ९ ॥
एवमुक्तस्तदा तेन शैलादिस्तमथाब्रवीत् ।
प्रलयार्थं न चाऽऽहूतस्त्वं विश्वेशेन शंभुना ॥ १० ॥
ग्रहीष्यति गिरेः पुत्रीं पत्नीत्वेन महेश्वरः ।
तदर्थं त्वमिहाऽऽहूतो ब्रह्माद्याश्च दिवौकसः ॥ ११ ॥
नन्दिनो वचनं श्रुत्वा कालाग्निरिदमब्रवीत् ।
द्रष्टुकामा वयं सर्वे ब्रह्माद्याः शूलपाणिनम् ॥ १२ ॥
शीघ्रं दर्शय शैलादे निर्वृताः स्मो यथा वयम् ।
विज्ञापय महादेवं ब्रह्माद्याश्चाऽऽगता इति ॥ १३ ॥
सर्वे त्वद्ध्याननिरताः सर्वे त्वद्दर्शनोत्सुकाः ।
कालाग्निप्रमुखानां च वचः श्रुत्वा गणाग्रणीः ॥
प्राह विश्वेश्वरं देवं स्निग्धगम्भीरया गिरा ॥ १४ ॥

**नन्दिकेश्वर उवाच**–ब्रह्माद्याश्चाऽऽगताः सर्वे शूलपाणे तवाऽऽज्ञया ।
द्रष्टुमिच्छन्ति ते सर्वे नमस्कर्तुं तथा मुदा ॥ १५ ॥
दिशाऽऽदेशं पुरारे मां किं वक्ष्यामि सुरासुरान् ।
वारिता द्वारमूलेषु द्रष्टुकामाश्च संस्थिताः ॥ १६ ॥

---

१ ( क. ख. ग. ज. झ. ) ०पं निर्मितं यत्र स्वयं वै वि० । २ ( ङ. च. छ. ) ०ज्ञाय च म०
३ ( ग. ज. ) ०ष्टुमीप्सन्ति । ४ ( ख. ग. ) ०र्वे त्वामनन्ततनुं हरम् ॥ १६ ॥

यत्ते निरुपमं रूपं तेजोमयमनिन्दितम् ।
यदधोभागमाश्रित्य रुद्रः कालाग्निसंज्ञितः ॥ १७ ॥
पश्यन्तु चैते भूतेशं शूलं चैव सदोज्ज्वलम् ।
ततो विवेश कालाग्निर्विष्णुर्ब्रह्मा शतक्रतुः ॥ १८ ॥
अन्ये च देवगन्धर्वा ऋषयो मनवस्तथा ।
सर्वे कोलाहलं कृत्वा देवासुरमहोरगाः ॥ १९ ॥
विविशुर्हरसंस्थानं नद्याद्या इव सागरम् ।
प्रविश्य भवने रम्ये नानाधातुविचित्रिते ॥ २० ॥
गणकोटिसमाकीर्णे रुद्रकोटिसुसेविते ।
अग्रजन्मगुरुः पूर्वं रुद्रैर्देवैर्वृतस्तदा ॥ २१ ॥
भवारिमन्धकारिं तमपश्यदन्तकानलः ।
मुक्ताचलप्रतीकाशं शशाङ्कचयसंनिभम् ॥ २२ ॥
नीलकण्ठं त्रिनेत्रं च शूलिनं सर्वतोमुखम् ।
कोटिसूर्यप्रतीकाशं जगदानन्दकारिणम् ॥ २३ ॥
कपालमालिनं देवं कपर्दकृतभूषणम् ।
दशबाहुं दशार्धास्यमनन्तं तेजसां निधिम् ॥ २४ ॥
जगदुत्पत्तिसंहारस्थित्यनुग्रहकारिणम् ।
अप्रमेयमनाकारमप्रपञ्चमनाकुलम् ॥ २५ ॥
सिंहासनस्थमचलं चराचरविभूतिदम् ।
क्षीरोदमिव निष्कम्पं त्रैलोक्यप्रभवं शिवम् ॥ २६ ॥
सर्वतः पाणिपादान्तं सर्वतोऽक्षिशिरोमुखम् ।
सर्वतः श्रुतिमल्लोके सर्वमावृत्य संस्थितम् ॥ २७ ॥
सुरासुरैर्वन्द्यमानं ध्यायमानं मुमुक्षुभिः ।
इदं रूपं समालोक्य देवदेवस्य शूलिनः ॥ २८ ॥
अग्रे स्थितः स कालाग्निर्मेरौ मेरुरिवापरः ।
अथोवाच स शैलादिः प्रणिपत्य सनातनम् ॥ २९ ॥
नरकाणामधोभागे पुरत्रयं प्रतिष्ठितम् ।
योजनायुतविस्तीर्णं कामदं शुभलक्षणम् ॥ ३० ॥

---

१ (घ.) संज्ञकः ॥ १८ ॥ २ (क. ख. ग. ङ.) ०मालक्ष्य ०दे । ३ (घ. ङ. च. छ. ज.) ०र्मेरोर्मेह०।

यस्यैवोर्ध्वं निरालम्बं शतयोजनमानतः ।
ज्वालामालाकुलं दिव्यं सर्वलोकभयंकरम् ॥ ३१ ॥
प्राकाराट्टालकैर्युक्तं गोपुरैस्तोरणान्वितम् ।
रक्तनीलसमानाभैर्भीमघोषैर्दुरासदैः ॥ ३२ ॥
वृतो रुद्रसहस्रैस्तु सिंहरूपैर्महाबलैः ।
नियम्य च स्वकं तेजः प्रीत्यर्थं तेऽधुनाऽऽगतः ॥ ३३ ॥
ध्वान्तचामीकराभासश्चन्दनागरुगन्धयुक् ।
नीलकण्ठस्त्रिनेत्रश्च वृषकेतुर्महाबलः ॥ ३४ ॥
द्वीपिचर्मपरीधानः पञ्चवक्त्रेन्दुभूषणः ।
अनन्तमेखलाधारी कुण्डलीकृततक्षकः ॥ ३५ ॥
*दशबाहुर्महातेजाः पीनवक्षा महाभुजः ।
प्रलयोदनिर्घोषो रक्तनीलमहातनुः ॥ ३६ ॥
आगतः सौम्यरूपेण तव देव समीपतः ।
पश्यतां मृदुभावेन देवदेव जगत्पते ॥ ३७ ॥
एते चैव महावीर्याः कालाग्नेस्तु समीपतः ।
तिष्ठन्ति ज्वलनाभासा रुद्राश्च शतकोटयः ॥ ३८ ॥
त्वन्नियोगान्महादेव कालाग्न्यादेशकारिणः ।
तिष्ठन्ति स्वपुरे रम्ये क्रीडमाना मनोरमे ॥ ३९ ॥
तवानुज्ञागता ह्येते शशाङ्कमौलिनोऽमलाः ।
शुद्धस्फटिकसंकाशाः पद्मरागसमप्रभाः ॥ ४० ॥
तडिद्भ्रमरसंकाशा वज्रशूलधनुर्धराः ।
नीलकण्ठास्त्रिनेत्राश्च सुखदुःखविवर्जिताः ॥ ४१ ॥
सर्वाभरणसंपन्ना अनन्तबलविक्रमाः ।
जरामरणनिर्मुक्ताः शार्दूलचर्मवाससः ॥ ४२ ॥
इमानपि महादेव पश्यन्प्रीतिकरो भव ।
हरिचन्दनलिप्ताङ्गानशोककमलार्चितान् ॥ ४३ ॥

* घङचछजसंज्ञितपुस्तकेष्वयं श्लोको नास्ति ।

१ ( ङ. च. छ. ) ०न्वितैः । र०। २ ( क. ख. ग. ज. झ. ) पश्यैनं मृ०। ३ ( क. ख. ग. झ. ) ०श्च शार्दूलचर्मवाससः ॥ ४१ ॥ ४ ( क. ख. ग. घ. ज. झ. ) ०रा हर्षशोकसंत्यक्ताः । ५ ( क. ख. ग. ज. झ. ) ०काः सुखदुःखविवर्जिताः ॥ ४२ ॥

दैत्याधिपतयश्चैव प्रह्लादाद्या महाबलाः ।
समागता महादेव नागाः शेषादयः शिव ॥ ४४ ॥
सर्वाः पातालवासिन्यो रूपयौवनगर्विताः ।
आगता देवदेवेश द्वीपैश्च सह सागराः ॥ ४५ ॥
गन्धर्वाः किंनरा यक्षाः सिद्धविद्याधराः शिव ।
उर्वश्याद्याश्चाप्सरसो नद्यः पापहराः शुभाः ॥ ४६ ॥
एते च मुनयो देव भृग्वाद्याः प्रथितौजसः ।
संप्राप्तानि पुराणीह शक्रादीनां महात्मनाम् ॥ ४७ ॥
एते लोकाः समायाताः सत्यान्ताः सप्त शंकर ।
मूर्तयस्तव देवेश भवाद्याश्च समागताः ॥ ४८ ॥
आदित्या वसवो रुद्राः साध्याश्चैव मरुद्गणाः ।
सनकाद्या महात्मानः सत्यलोकनिवासिनः ॥ ४९ ॥
पद्मरागनिभो देवो बन्धूककुसुमद्युतिः ।
जटाभिस्तु शिरोनद्धो रत्नमालाविभूषितः ॥ ५० ॥
कमण्डलुधरः श्रीमान्दण्डहस्तः सुलोचनः ।
कृष्णाजिनोत्तरीयेण रक्तमाल्याम्बरेण च ॥ ५१ ॥
सुवर्णमेखलाधारी रौक्मकुण्डलमण्डली ।
हंसध्वजश्चतुर्बाहुः सुरासुरनमस्कृतः ॥ ५२ ॥
सावित्र्या सहितो देवः पद्मयोनिरिहाऽऽगतः ।
अतसीपुष्पसंकाशस्तमालदलवर्चसः ॥ ५३ ॥
पीताम्बरधरः श्यामः पीतगन्धानुलेपनः ।
शङ्खचक्रगदाधारी शार्ङ्गी गरुडवाहनः ॥ ५४ ॥
किरीटी कुण्डली हारी कौस्तुभाभरणान्वितः ।
केयूरवलयापीडः पीनवक्षा गदान्वितः ॥ ५५ ॥
चामीकरसुमालाभिर्दीप्यमानो विराजते ।
सूर्यायुतप्रतीकाशो नीलोत्पलदलेक्षणः ॥ ५६ ॥
क्षीरोदार्णवशायी च नीलजीमूतनिःस्वनः ।
रमामर्दितसर्वाङ्गः शेषपर्यङ्कलालसः ॥ ५७ ॥

---

१ (क. ख. ग. ङ.) °श्चैते प्र°। २ (ख. घ.) °द्दा भागाः स°। ३ (घ. ङ. च. छ.) °लकुण्डल°।

गुरूणां च गुरुर्देव ईश्वराणामपीश्वरः ।
वरदो भव वात्सल्यो दैत्यकोटिक्षयंकरः ॥ ५८ ॥
आगतोऽयं महादेव विष्णुः प्रियतरस्तव ।
तप्तचामीकरप्रख्यो वज्रहस्तो महाबलः ॥
पट्टांशुकपरीधानो हेममालाविभूषितः ॥ ५९ ॥
प्रख्यातवीर्यो बलवृत्रहन्ता बालार्कभासो हरिचन्दनाङ्कः ।
पुंनागनागैर्बकुलैश्च जुष्टो मुक्ताफलालंकृतकण्ठदेशः ॥ ६० ॥
अयं समागतः शक्रो वह्निर्वैवस्वतस्तथा ।
निर्ऋतिर्वरुणो वायुः कुबेरश्च समागतः ॥ ६१ ॥
ईशानश्च महाभागस्त्रिशत्कोटिगणैर्वृतः ।
आगतस्त्रिजगद्योने पिनाकी च गणेश्वरः ॥ ६२ ॥
दशकोटिगणैर्युक्तः* कालकण्ठस्तथैव च ।
सप्तकोटिगणैर्युक्तो घण्टाकर्णो महाबलः ॥ ६३ ॥
दशकोटिगणैर्युक्तो वसुघोषो महाबलः ।
चतुष्कोटिगणैर्दण्डी शिखण्डी दशकोटिभिः ॥ ६४ ॥
षड्भिर्मयूरवदनः सिंहास्यो दशकोटिभिः ।
सप्तकोटिगणैर्युक्तः किरीटी च समागतः ॥ ६५ ॥
कालान्तकस्तु दशभिर्नकुली दशकोटिभिः ।
षड्भिस्तु मुण्डमाली च त्रिशूली पञ्चकोटिभिः ॥ ६६ ॥
अष्टाभिर्विश्वमाली च त्रिमूर्तिर्नवकोटिभिः ।
एते गणेश्वराः सर्वे तथा चान्ये गणेश्वराः ॥ ६७ ॥
येषां संख्या न जानन्ति ब्रह्माद्या देवतागणाः ।
आगतानां महादेव शृणु कोलाहलं विभो ॥ ६८ ॥
अमरेशः प्रभासश्च पुष्करो नैमिषस्तथा ।
आषाढी दण्डी मुण्डी च भारभूतिस्तथा कुली ॥ ६९ ॥
तीर्थाधिपतयो देवा आगता दिव्यमूर्तयः ।
एते गुह्याष्टका देव कामरूपा महाबलाः ॥ ७० ॥

---

*खगझसंज्ञितपुस्तकेषु कालकण्ठ इत्यादि दशकोटिगणैर्युक्त इत्यन्तं शब्दजातं नास्ति।

---

१ ( ख. घ. ) ०णां हि गु०। २ ( ज. ) ०लैस्तु जु०। ३ ( क. ख. ग. ज. झ. ) ०र्युक्तः सुघोषश्च म०। ४ ( च. ) ०यूखदशनः। ५ ( ख. ग. ) ०टी समुपाग०। ६ ( क. ख. ग. झ. ) ०भिर्लकु०। ७ ( क. झ. ) ०कुलैर्देश०। ८ ( क. ख. ग. ज. झ. ) ०ह्निश्च मु०। ९ ( ख. ग. ) गणाधिपाः ॥६७॥

तवाऽऽज्ञयाऽऽगता देव ब्रह्माण्डान्तरवासिनः ।
कोटिकोटिगणैर्युक्ता देवदेव महेश्वर ॥ ७१ ॥
विश्वेश्वरजटोद्भूता सिन्धुश्चैव सरस्वती ।
यमुना गण्डकी नागा विपाशा नर्मदा शिवा ॥ ७२ ॥
रुक्मा घण्टा च निर्विन्ध्या देविका च दृषद्वती ।
शतद्रुश्च पयोष्णी च चन्द्रभागा च गोमती ॥ ७३ ॥
चर्मण्वती च कावेरी[3] सरयूश्च[4] परावती[5] ।
धूतपापा च सारथ्या[6] माणा माला सुगन्धिका ॥ ७४ ॥
जम्बू तापी वनी शूरा कौशिकी कुमुदा करा ।
मन्दाकिनी चन्द्रलेखा चम्पकाऽऽमोदवाहिनी ॥ ७५ ॥
ऐरावती कामवेगा मेञ्जुला कामचारिणी ।
पूर्णभद्रा महामोदा गम्भीरावर्तिनी स्मृता ॥ ७६ ॥
मेघमाला मेघवर्णा सदानीरा च नन्दिनी ।
वेदा वेदवती[8] वीणा सीता चित्रोत्पला तथा ॥ ७७ ॥
वेत्रवती च वृत्रघ्नी पिप्पला जञ्जली[9] तथा ।
खरजा कुमुदा शिक्षा कौशिकी निषधा सिता ॥ ७८ ॥
वैतरणी सिनीवाली वेगवती पुनः पुनः ।
गौरी कृष्णा तथा दुर्गा तुङ्गभद्रोत्पलावती ॥ ७९ ॥
स्वर्णा भीमरथी शुद्धा कृतमाला तरङ्गिणी ।
एता देव महानद्यः पावनाः कल्मषापहाः ॥ ८० ॥
मूर्तिमत्यस्तवेशान उत्सवे त्विह आगताः ।
सर्वा एता महादेव पश्य कारुण्यवारिधे ८१ ॥
भवन्ति कृतिनः सर्वे त्वयि दृष्टे महेश्वर ।
एवमुक्त्वा तदा नन्दी देवदेवस्य चाग्रतः ॥ ८२ ॥
पपात दण्डवद्भूमौ भक्त्या परमया युतः ।
नन्दिनं तं महात्मानं दृष्ट्वा विश्वेश्वरः प्रभुः ॥ ८३ ॥
प्रीतो भूत्वाऽऽह कालारिर्मन्दरे चारुकन्दरे ॥ ८४ ॥

---

१ ( क. ख. ग. च. झ. ) ०ता रुद्र ब्र०। २ ( क. ख. म. झ. ) ०न्द्री भागा । ३ ( च. ) ०री शर०। ४ ( ख. ग. ) ०श्च इरा०। ५ ( घ. ङ. च. छ ) ०ती । धौत०। ६ ( ख. ग. ) ०थ्या र्माणमाला०। ७ ( ख. ग ) ०घघोषा मे०। ८ ( घ. ) ०ती चीर्णा सी०। ९ (क. घ. झ. ) ०जचला त०। १० ( ख. ग. ज. ) ०ञ्जला त०।

इदं यः पठते नित्यं शृणुयाद्वाऽपि भक्तितः ।
प्रीताः स्युर्देवताः सर्वास्तस्याभीष्टफलप्रदाः ॥ ८५ ॥ ३१६६ ॥

इति श्रीब्रह्मपुराणोपपुराणे श्रीसौरे सूतशौनकसंवादे कालाग्न्या-
द्यागमनकथनं नाम सप्तपञ्चाशोऽध्यायः ॥ ५७ ॥

**सूत उवाच**—अथासौ हिमवान्विप्रा देवीमात्मसुतामुमाम् ।
प्रदानार्थं महेशाय संप्राप्तो मन्दरं क्षणात् ॥ १ ॥
आह दृष्ट्वा गिरिं नन्दी देवदेवं पिनाकिनम् ।
वक्तुकामः समायातो भगवान्पर्वतेश्वरः ॥ २ ॥
श्रुत्वा तु वचनं श्लक्ष्णं[1] व्यक्तं नन्दीमुखात्तदा ।
मेघगम्भीरया वाचा महादेवोऽब्रवीदिदम् ॥ ३ ॥
वदत्वयं गिरिश्रेष्ठो हृदये यत्प्रतिष्ठितम् ।
कामस्तस्य[2] चिरादेव भविष्यति न संशयः ॥ ४ ॥
एवमुक्तस्तदा विप्रा देवदेवेन शंभुना ।
उवाच गिरिशार्दूलो भूत्वाऽग्रेऽवनताञ्जलिः ॥ ५ ॥

**हिमवानुवाच**—याऽऽसीत्पूर्वं च ते पत्नी साऽवतीर्णा गृहे मम ।
तामेव तव दानार्थमागतोऽस्मि महेश्वर ॥ ६ ॥
अमी ब्रह्मादयो देवास्त्वत्समीपमिहाऽऽगताः ।
किं गोत्रमिति पृच्छामि ह्येषामग्रे विभो वद ॥ ७ ॥
श्रुत्वा तु भारतीं तस्य विश्वेशो विश्ववन्दितः ।
किं गोत्रमिति संचिन्त्य नोत्तरं प्रससर्ज[3] ह ॥ ८ ॥
दृष्ट्वा निरुत्तरं शंभुं जहसुर्देवदानवाः ।
एष एव जगद्योनिर्गोत्रमस्य कथं भवेत् ॥ ९ ॥
इत्यूचुर्विबुधाः सर्वे हिमवन्तं नगोत्तमम् ।
देवानां च वचः श्रुत्वा गिरिराजोऽब्रवीदिदम् ॥ १० ॥
विश्वेश्वरं परं धाम परमात्मानमव्ययम् ।
शाश्वतं गिरिशं स्थाणुं विश्वाकारं सनातनम् ॥ ११ ॥
दत्ता दत्ता पुनर्दत्ता उमा सत्येन ते प्रभो ।
ततो महान् रवो विप्रा जयशब्दादिमङ्गलैः ॥ १२ ॥

---

१ ( ख. ग. ) ०क्ष्णं च्युतं न०। २ ( क. ञ. ) ०स्तव वरात्तस्य भ०। ( ख. ग. ङ. ज. छ. ञ. ) ०स्तद्‌चिरादेव भ०। ३ ( घ. ङ. च. छ. ) प्रत्यपद्यत ॥ ८ ॥

दुन्दुभीनां च वाद्यानामभवत्सागरोपमः ।
गृहीतेति शिवः प्राह पार्वती पर्वतेश्वरम् ॥ १३ ॥
तद्धस्ते भगवाञ्शंभुरङ्गुलीयं प्रवेशयत् ।
इमं च कलशं हैममादाय त्वं नगोत्तम ॥ १४ ॥
याहि गत्वा त्वनेनैव तामुमां स्नापय त्वरा ।
अन्येषां परिहारार्थमेष एव विधिः सदा ॥ १५ ॥
जगत्त्रयेऽपि नूनं स्याद्व्रज तूर्णं नराधिप ।
ततस्तुष्टो महाशैलोऽभोजयत्सुसमाहितः ॥ १६ ॥
एवं यज्ञरतो विप्रास्तर्पणाय चराचरान् ।
अभवद्देवमुद्दिश्य शंकरं स गिरिस्तदा ॥ १७ ॥
तथाऽस्मिन्नन्तरे देवो धर्मकेतुर्महेश्वरः ।
उत्थितो मुनिशार्दूलाः समालोक्य च शार्ङ्गिणम् ॥ १८ ॥
अभवज्जयशब्दानां तुमुलो हि महांस्तदा ।
पुष्पवृष्टिनिपातश्च सत्यलोकाद्द्विजोत्तमाः ॥ १९ ॥
नानावनाधिपाश्चैव क्रतवश्च मुदान्विताः ।
कुसुमैर्दिव्यगन्धाढ्यैर्ववृषुर्मेघवृन्दवत् ॥ २० ॥
वीणावेणुमृदङ्गानां दुन्दुभीनां ततो रवः ।
हरिर्विरिञ्चिशक्राद्याः पूरयन्ति सुरास्तदा ॥ २१ ॥
विप्रास्त्रैलोक्यनादेन वेदघोषं प्रचक्रिरे ।
गायत्री चैव सावित्री रुद्रकन्यास्तथैव च ॥ २२ ॥
विद्याधर्योऽथ नागिन्यो देवानां च तथाऽङ्गनाः ।
सिद्धकन्या मनोहार्या यक्षकन्यास्तथैव च ॥ २३ ॥
मातरः सप्त याश्चैव याश्च नक्षत्रमातरः ।
गिरीणां च तथा नार्यः समुद्राश्च सरांसि च ॥ २४ ॥
मङ्गलं गायमानाश्च अर्घमष्टाङ्गसंयुतम् ।
सुप्रहृष्टा ददुः सर्वा देवदेवस्य पादयोः ॥ २५ ॥
एतस्मिन्नन्तरे विप्रा हिमवत्संप्रणोदितः ।
मैनाकस्तत्र संप्राप्तो हेमकुम्भकरः सुधीः ॥ २६ ॥
सालङ्कायनपौत्रस्य गत्वा तस्याग्रतः स्थितः ।
तेनापि देवदेवस्य ज्ञापितो गिरिरग्रतः ॥ २७ ॥

१ ( ङ. च. छ. ज. ) ०ङ्गतो. २ ( घ. ङ. च. छ. ज. ) ०विन्ध्या ह०।

अथासौ भगवान्देवो मङ्गलेशो जलाशयः ।
स्नापयद्वेधसा युक्तः समुद्रैः शूलपाणिनम् ॥ २८ ॥
स्नाप्यमाने तदा देवे नद्यो वै सागरा द्विजाः ।
बभूवुः सलिलैर्युक्ताः कृशाङ्गाः स्वेदसंयुताः ॥ २९ ॥
अथ ते त्रिदशाः सर्वे सनारायणका द्विजाः ।
परं विस्मयमापन्ना भवं पश्यन्ति चाद्भुतम् ॥ ३० ॥
ततो निलीयमानास्तु शरीरे शंकरस्य तु ।
नद्यः सर्वाः समुद्राश्च प्रपश्यन्ति सुविस्मिताः ॥ ३१ ॥
योगमायाहृतं वीक्ष्य तत्तोयं जगति स्थितम् ।
अस्तुवन्पशुभर्तारं ब्रह्माद्या देवतागणाः ॥ ३२ ॥
ततस्तैस्तु स्तुतो देवः प्रहस्य भगवान्भवः ।
विसृज्य च तदा तोयमभवत्पूर्वरूपधृत् ॥ ३३ ॥
एवं साम्ये स्थिते तस्मिन्देवदेवे पिनाकिनि ।
स्नापितोऽसौ विरञ्चाद्यैस्त्रिमूर्तिर्भगवान्भवः ॥ ३४ ॥
मैनाकोऽप्यञ्जलिं कृत्वा देवदेवस्य चाग्रतः ।
संस्थितो हर्षसंयुक्तो निधिं लब्ध्वा यथाऽधनः ॥ ३५ ॥
विसर्जितस्ततस्तेन देवदेवेन शंभुना ।
त्रैलोक्यतिलके तस्मिन्ययौ तूर्णं नगात्मजः ॥ ३६ ॥
तदंशुकं परिधाप्य देवीं तामरसेक्षणाम् ।
स्नापयंस्तेन कुम्भेन हराङ्घ्रिप्रपतितेन च ॥ ३७ ॥
नीरपातं द्विजश्रेष्ठाः कृतमेतत्कपर्दिना ।
पार्वतेयविधिर्नूनं कुलजानां सदाऽनघः ॥ ३८ ॥
ततो भगवती देवी हृष्टपुष्टा तपोमयी ।
पितुरभ्याशगा भूत्वा विवेश परमासने ॥ ३९ ॥ ३२०५ ॥

इति श्रीब्रह्मपुराणोपपुराणे श्रीसौरे सूतशौनकसंवादे साम्बविवाहवर्णनं नामाष्टपञ्चाशोऽध्यायः ॥ ५८ ॥

**सूत उवाच**-अथाऽऽयान्तं शिवं दृष्ट्वा हिमवान्पर्वतेश्वरः ।
मेरुश्चैव यथासंख्यै रविचन्द्रदिवाकरैः ॥ १ ॥

---

१ ( ङ. च. छ. ) युक्तं स०। २ ( घ. ङ. च. छ. ) अत्र ते । ३ ( घ. ) ०स्य च । ४ ( ख. ग. ज. ) ०गणैः ॥ ३२ ॥ ५ ( ख. ग. ) संप्रस्थितो मुदा यु०। ६ ( ख. ग. घ. ) पानं द्वि०।

तथा देवैः स वेधाद्यैर्वृतं (?) छत्रेण संयुतम्।
जयेत्युक्त्वा नगेन्द्रस्तु ह्यात्तमोल्याम्बरस्तदा ॥ २ ॥
उत्थितः सहसा विप्राः पुष्पहस्तो महेश्वरः।
मुदा परमया युक्तो भक्त्या चानन्यया द्विजाः ॥ ३ ॥
वस्त्रैर्नानाविधैश्चक्रे मार्गभूषां तदा गिरिः।
पताकाभिर्जयन्तीभिः स्रग्दामैर्दिव्यगन्धिभिः ॥ ४ ॥
ध्वजैश्च विविधाकारैः पञ्चवर्णैर्मनोरमैः।
चामरैश्चन्द्ररम्यैस्तु लम्बकैश्च समन्ततः ॥ ५ ॥
मुक्तानां प्रकरैश्चैव पुष्पाणां तु तथैव च।
एवमाद्यैरनेकैश्च शोभां कृत्वा नगोत्तमः ॥ ६ ॥
स्थितस्तु वीक्षमाणोऽसौ विश्वव्यापिनमीश्वरम्।
संपूर्णचन्द्रवदना मदनानलदीपिताः ॥ ७ ॥
शतकोट्योऽप्सराणां तु निर्ययुः संमुखाश्च तम्।
हेमपात्रकरासक्ताः पद्मेन्दीवरहस्तकाः ॥ ८ ॥
मणिपात्राणि पूर्णानि दूर्वासिद्धार्थकाङ्कितैः।
दधिरोचनमादाय व्रीहिभिश्चम्पकैर्यवैः ॥ ९ ॥
हरिचन्दनलिप्ताङ्गा हरिचन्दनहस्तकाः।
विद्रुमाङ्कुरहस्ताश्च तथैवोत्पलशेखराः १० ॥
*चूतमञ्जरिहस्ताश्च पारिजातकराः पराः।
स्वादूदकेन संपूर्णभृङ्गारकरपल्लवाः ॥ ११ ॥
हावभावविलासिन्यो मदनातुरविह्वलाः।
मदनारिं प्रणेमुस्ता गायमानास्त्रिलोचनम् ॥ १२ ॥
अथासौ भगवाञ्शूली चान्तर्यामी महेश्वरः।
त्रैलोक्यतिलके तस्मिन्क्षणादाविर्बभूव ह ॥ १३ ॥
ततो धनैर्बहुविधैः पूजयामास पर्वतः।
स्तुत्वा च पूजयित्वा च ननाम च पुनः पुनः ॥ १४ ॥
गीतैश्च विविधैर्वाक्यैः प्रविवेश हरस्तदा।
भवोऽभवत्तदा बालो ह्यष्टवर्षाकृतिः स्वयम् ॥ १५ ॥

* कखसंज्ञितपुस्तकयोरिदं श्लोकार्धं नास्ति।

१ (घ.) ०मालाम्ब०। २ (घ. ङ. च. छ.) ०स्तथा ॥ २ ॥ ३ (क. ख.) ०नोहरैः। चा०। ४ (ख. ग.) ०त्वा तु न०। ५ (ख. ग.) प्रगीतैस्त्रि०। ६ (क. ख. ग.ङ.) देवोऽ०।

हेमाङ्गो भगवाञ्शंभुः किरीटी कुण्डली हरः ।
सुरासुराश्च विप्रेन्द्रा दृष्ट्वा रूपं पिनाकिनः ॥ १६ ॥
अवलोक्य मुखाऽन्योन्यं जहसुस्ते मुदाऽन्विताः ।
आसने हेमजे विप्रा नानारत्नैश्च भूषिते ॥ १७ ॥
विवेश भगवाञ्शूली महादेवो जगत्पतिः ।
हरस्य दक्षिणे वेधा वामभागे जनार्दनः ॥ १८ ॥
शैलादिरग्रतः शंभोः कालरुद्रश्च सुव्रताः ।
रुद्रैर्गणेश्वरैर्देवैः सिद्धैश्च मुनिभिस्तथा ॥ १९ ॥
उपविष्टेषु सर्वेषु गन्धर्वाद्याः समन्ततः ।
जगुर्गीतं च हिन्दोलं तुम्बरुर्नारदादयः ॥ २० ॥
मत्तमातङ्गगामिन्यो गेयंताललयान्वितम् ।
रम्भाद्याप्सरसः सर्वाः किंनर्यो ननृतुर्द्विजाः ॥ २१ ॥
वीणावल्लकिवेणूनां मृदङ्गानां विशेषतः ।
ध्वनिभिर्मनसस्तुष्टिर्जज्ञे सुमनसां तदा ॥ २२ ॥
अथ विश्वेश्वरः शंभुर्भूषणं नभसि स्थितम् ।
प्रायच्छद्गिरिजायै तदाल्हादजनकं मुदा ॥ २३ ॥
अनेनालंकृता देवि मम योग्या भविष्यसि ।
पितुर्दक्षस्य यः कोपः पूर्वजस्य वरानने ॥ २४ ॥
प्रहास्यसि तमेवाऽऽशु भावं चैव तु तामसम् ।
ततः सा पार्वती देवी गृहीत्वाऽऽकाशमण्डलात् ॥ २५ ॥
पितुः समीपमगमद्वस्त्राभरणमुत्तमम् ।
महता ह्युत्सवेनाऽऽशु भूषयित्वा शिवां नगः ॥ २६ ॥
वस्त्रैराभरणैर्देवीं दिव्यैर्वै सिंहवाहिनीम् ।
मेनोत्सङ्गगतां भूयश्चन्द्रलेखेव तोयदे ॥ २७ ॥
दधती निर्वृता देवी बभौ तामरसेक्षणा ।
अथ देवैः परिवृतो विष्णवाद्यैस्त्रिपुरान्तकः ॥ २८ ॥
बभ्राम मुनिशार्दूलाः क्रीडास्थानानि कृत्स्नशः ।
भगवन्देवदेवेश विश्वेशान्धकसूदन ॥ २९ ॥
प्रणम्य परया भक्त्या शैलादिरिदमब्रवीत् ॥ ३० ॥

---

१ ( ख. ग. ) अविशद्भग०। २ (घ. ङ. च. छ. ज.) ०तुर्यज्ञस्य । ३ ( च. ) ०स्य यत्कार्यं पू०।

नन्दिकेश्वर उवाच—वेदीयमिन्द्रनीलाभा भाति विश्वंभरा शिव ।
सेयं जलमयी नाथ निर्मिता विश्वकर्मणा ॥ ३१ ॥
या चेयं परमा रम्या तोयानां भ्रान्तिकारिणी ।
सेयं भाति महादेव रत्नानामीदृशी प्रभा ॥ ३२ ॥
*इदं च द्वारसंस्थानं दृश्यते लम्बकैर्वृतम् ।
कुड्यस्य रत्नविन्यासे लक्ष्यते द्वाररूपता ॥ ३३ ॥
इदं चित्ररथाकारं दृश्यते वनमुत्तमम् ।
प्रतिबिम्बं महादेव रत्नभूमेर्न संशयः ॥ ३४ ॥
इदं च मन्दिराकारं सोपानचयमण्डितम् ।
प्रतिबिम्बमिदं चैव दृश्यते नवमण्डितम् ॥ ३५ ॥
या चेयं सागराकारा दृश्यते तोयरूपिणी ।
एषाऽपि परमेशान रत्नभूमिर्जलोषिता ॥ ३६ ॥
यदिदं गगनाभासं मूर्तिद्रव्यैरिवोर्जितम् ।
क्रीडामण्डपमेतस्मिन्प्रदेशे देव तिष्ठति ॥ ३७ ॥
अम्बराभैर्महारत्नैर्बाह्यदेशे विनिर्मितम् ।
अनेकवाद्यसंयुक्तं रमणीयं ययौ हरः ॥ ३८ ॥
एवं क्रीडति देवेशे सुरासुरमहोरगाः ।
विद्याधरास्तथा यक्षा गन्धर्वाप्सरसादयः ॥ ३९ ॥
दीर्घिकासु तडागेषु नदीषु च ह्रदेषु च ।
क्रीडावापिषु ते रम्यैर्यन्त्रैर्नानाविधैर्भृशम् ॥ ४० ॥
बभूवुर्देवताः सर्वाः क्रीडारतिषु लालसाः ।
अथ संक्रीड्य विश्वात्मा निवृत्तस्तत्प्रदेशतः ।
वेद्याः समीपमगमत्स्तूयमानो मुनीश्वरैः ॥ ४१ ॥
प्राप्याऽऽरुरोह प्रसभं सुरेशस्तदिन्द्रनीलामलवेदिकान्तम् ।
सहस्रपत्रैर्बकुलैश्च नागैः कीर्णं हि यत्काञ्चनपारिजातैः ॥४२॥
ततः प्रविष्टो हरिणाङ्कचिह्नः सरश्मिजालाकुलवेदिकान्तम् ।
विवेश सूर्यायुतसुप्रभासो वृतो विरञ्च्यादिसुरैः समन्तात् ॥४३॥

---

* ङचछसंज्ञितपुस्तकेष्वयं श्लोको नास्ति ।

---

१ ( घ. ) ०रयां भक्त्या तो०। २ ( क. ख. ग. झ. ) मन्दरा०। ३ ( घ. ङ. च. छ. ज. ) ०जैर्लक्षिता । ४ ( क. ख. ग. झ. ) ०कान्ते । वि०।

अथोपविष्टं संवीक्ष्य विश्वेशं पर्वतेश्वरः ।
तस्य संस्थाप्य पुरतो देवेशीमब्रवीदिदम् ॥ ४४ ॥
**हिमवानुवाच**–त्वमेवैकः परं धाम अर्धनारीश्वरस्ततः ।
देवतानां हितार्थाय जातो ह्यर्धतनुः पृथक् ॥ ४५ ॥
दक्षस्य दुहिता देवी जगद्धात्री ह्युमा सती ।
विनिन्द्य च ततो दक्षं त्यक्त्वा देहं निजं पुनः ॥ ४६ ॥
तवैव पत्नी देवेश जाता मम सुता सती ।
ततः श्रुत्वा गिरीन्द्रस्य वचस्त्रिभुवनेश्वरः ।
प्रसन्नो वरदः शंभुरब्रवीत्पर्वतेश्वरम् ॥ ४७ ॥
**ईश्वर उवाच**–जानाम्यहं येन ममैव माया शक्तिर्वरैषा नगराजसिंह ।
संत्यज्य देहं तव धाम्नि जाता योगात्स्वयं चारुशशाङ्कवक्त्रा ॥४८॥
आचारार्थं गिरिश्रेष्ठ दत्तां गृह्णामि पार्वतीम् ।
अदत्तां यदि गृह्णामि तथा लोकेऽपि वर्तते ॥ ४९ ॥
अथ दिव्योदकैः पूर्णमादाय कलशं गिरिः ।
परिपूर्णस्य नित्यस्य नित्यानुग्रह[1]कारिणः ॥ ५० ॥
प्रक्षाल्य पादौ शिरसा प्रणम्य भृङ्गारमादाय स शैलराजः ।
मुमोच तोयं भवपाणिपद्मे दत्तेति दत्तेति तदा प्रजल्पन् ॥५१॥
ततो मङ्गलनिर्घोषः समभूत्त्रिदिवौकसाम् ।
वीणावेणुमृदङ्गानां काहलानां च निःस्वनः ॥ ५२ ॥
सा हारकण्ठी कटिसूत्रदामा सुभ्रूलता चारुविलोलनेत्रा ।
मेरोर्यथैवोपरि चन्द्रलेखा तथा बभौ पर्वतराजपुत्री ॥ ५३ ॥
अथ वेद्यां गतो ब्रह्मा विश्वमायां स्मरारणिम् ।
ददर्शोदकपात्रेण विभावसुपुरस्थितः ॥ ५४ ॥
माहेश्वरीं काममयीं दृष्ट्वा तां तु पितामहः ।
अक्षरत्सहसा शुक्रं भग्नकुम्भादिवोदकम् ॥ ५५ ॥
पादेन तन्ममर्दाऽऽशु शुक्रं तत्पद्मसंभवः ।
पद्मजोऽपि[2] महातेजा देवदेवस्य पश्यतः ॥ ५६ ॥
मैवं मर्देति तं दृष्ट्वा त्रिपुरारिः पितामहम् ।
कुरुष्वेतीति होवाच भगवान्नीललोहितः ॥ ५७ ॥

---

१ ( क. ख. ग. ज. झ. ) ०हरूपिणः ॥ ५० ॥ २ ( ङ. च. छ. ज. ) ०पि तदा तेजो दे०।

अमोघं तत्तदा विप्राः शुक्रमग्नौ प्रजापतिः।
जुहोति वचनाच्छंभोर्वामेनाऽऽदाय पाणिना ॥ ५८ ॥
हवनाच्च ततः प्राप्ताः सवितारं वियद्गतम्।
तेजोमयाश्च ते सर्वे तपोनिष्ठाः समन्ततः ॥ ५९ ॥
अष्टाशीतिसहस्राणि मुनयस्तूर्ध्वरेतसः।
माने त्वङ्गुष्ठमात्रास्तु जाताश्चाथ सुवर्चसः ॥ ६० ॥
बभूवुस्ते महात्मानः पतङ्गसहचारिणः।
निःस्पृहा रश्मिपाः सर्वे सर्वे ज्वलनसंनिभाः ॥ ६१ ॥
ततो देवाः सगन्धर्वाः सिद्धाश्च मुनयस्तथा।
पिशाचा दानवा दैत्याः किंनराश्च महोरगाः ॥ ६२ ॥
विद्याधराश्चाप्सरसस्तथा चान्ये सुरासुराः।
प्रहृष्टाः सर्व एवैते पार्वत्या हरसङ्गमात् ॥ ६३ ॥
मुमोच वृष्टिं क्रतुराट्सुतुष्टः पुष्पैरनेकैर्भ्रमराकुलैश्च।
वाद्यैर्विचित्रैर्वर[1]शङ्खनादैः सुगीतगानैर्वरमङ्गलैश्च ॥ ६४ ॥
वीणारवैर्दुन्दुभिवेणुनादैः समन्ततः कर्णसुखं प्रजज्ञे।
आनृत्यतीभिः सुरसुन्दरीभिर्जगीयतीभिर्वरकिंनरीभिः ॥ ६५ ॥
[2]दैत्याङ्गनाभिश्च वसीदतीभिः कामायतेऽतीव तदुत्सवं च।
काञ्चीरवेणाथ नितम्बिनीनां मनोभिरामेण च नूपुराणाम् ॥६६॥
तासां स्मितेनाथ मुनीन्द्रवर्या बभूव कामानलदीप[3]चर्या।
होमावसाने मधुपर्कयुक्तं देवाय तस्मै [4]मधुभाजनं च ॥ ६७ ॥
ततो निवेद्य प्रमथाधिपाय चकार तुष्टिं परमां विरञ्चिः ॥६८॥
अथ देवेषु विश्वेशो वरदोऽभूद्द्विजोत्तमाः।
वरांश्च विविधान्दत्वा ब्रह्मादिभ्यो महेश्वरः ॥ ६९ ॥
व्यसर्जयत्ततः सर्वास्थावराञ्जङ्गमांस्तथा।
विसर्जिताः प्रणम्येशं प्रीतिं ते परमां गताः ॥ ७० ॥
एवं संक्षेपतो विप्रा विवाहो गिरिजापतेः।
कथितो रविणा पूर्वं यथावत्समुदीरितः ॥ ७१ ॥
शृणोति श्रद्धया यस्तु पठेद्वा प्रयतात्मवान्।
सर्वान्कामानवाप्नोति वर्षादर्वाङ्न संशयः ॥ ७२ ॥

---

१ (घ. ङ. च. छ. ज.) ०रशम्भवे च नादैः सुगीतैर्व०। २ (घ. ज.) दिव्याङ्ग०। ३ (ख. ग.) ०पनं च। ४ (ख. ग.) ०मणिभा०।

सर्वपापविनिर्मुक्तस्तेजस्वी प्रियदर्शनः ।
जीवेद्वर्षशतं साग्रं गच्छेद्ब्रह्मपदं ततः ॥ ७३ ॥ ३२७८ ॥

इति श्रीब्रह्मपुराणोपपुराणे श्रीसौरे सूतशौनकसंवादे साम्बविवाहवर्णनं नामैकोनषष्टितमोऽध्यायः ॥ ५९ ॥

सूत उवाच—विवाह्याद्रिसुतां शंभुर्ययौ कैलासपर्वतम् ।
क्रीडां वै वर्षसाहस्रमिकरोत्तत्र शंकरः ॥ १ ॥
गणैर्नानाविधैश्चैव सिंहास्यैः शरभाननैः ।
केश्चिद्व्याघ्रमुखैर्भीमैः केश्चिद्गृध्रमुखैरपि ॥ २ ॥
*केश्चिद्गजमुखैरन्यैः केश्चिन्मृगमुखै[3]रपि ।
केश्चिदुष्ट्रमुखैर्दीर्घैः केश्चिद्धयमुखैरपि ॥ ३ ॥
केश्चिच्चित्रमुखैरन्यैः केश्चिद्वृकमुखैरपि ।
मूषकास्यैस्तथा चान्यै†र्मार्जारवदनैरपि ॥ ४ ॥
सर्पास्यैर्नकुलास्यैश्च जम्बुकास्यैस्तथाऽपरैः ।
शिशुमारमुखैश्चान्यैर्ऋक्षवक्त्रैस्तथाऽपरैः ॥ ५ ॥
‡मयूरवदनैरन्यैर्बकवक्त्रैस्तथाऽपरैः ।
शाखामृगमुखैश्चान्यैः खरास्यैश्च तथाऽपरैः ॥ ६ ॥
अन्यैरसंख्यैः प्रमथैर्जरामरणवर्जितैः ।
नित्यतृप्तैर्निरातङ्कैः कालसंहरणक्षमैः ॥ ७ ॥
सहस्रकोटिसंख्याकैः स्वच्छन्दगतिचारिभिः ।
क्रीडां विधाय भगवान्कैलासे पर्वतोत्तमे ॥ ८ ॥
तपसा महता शंभुरनुगृह्य च मन्दरम् ।
कैलासं संपरित्यज्य मन्दरे चारुकन्दरे ॥ ९ ॥
तत्रापि रममाणस्य गते वर्षसहस्रके ।
देवतानां हितार्थाय प्रकृत्या सह शूलभृत् ॥ १० ॥

---

* केश्चिद्गजमुखैरित्यादिः केश्चिद्वृकमुखैरित्यन्तः सार्धश्लोकः कझसंज्ञितपुस्तकयोर्नास्ति ।

† खगसंज्ञितपुस्तके विना सर्वेष्वप्यादर्शपुस्तकेषु मार्जारवदनैरित्यादि शिशुमारमुखैश्चान्यैरित्यन्तं शब्दजातं नास्ति ।

‡ इदं श्लोकार्धं चसंज्ञितपुस्तके नास्ति ।

---

१ ( घ. ङ. च. छ. ज. ) °प्रं व्रजेद्ब्र°। २ ( क. घ. ङ. च. छ. ज. झ. ) °स्यैः सर°। ३ ( ख. ग. ज. ) °खैस्तथा । ४ ( च. छ. ) सं स प°।

प्रक्रीडतीह विश्वात्मा कामासक्तश्च सर्वथा।
प्रार्थितोऽहं सुरैः पूर्वं तारकस्य वधेप्सया ॥ ११ ॥
मद्रेतसः समुत्पन्नस्तारकं स हनिष्यति।
इति मत्वा महादेवे रममाणे सहोमया ॥ १२ ॥
उत्पाताश्च महाघोराः संप्रवृत्ताः सुदारुणाः।
रुधिरास्थीनि वर्षन्ति नदन्तो मेघसंकुलाः ॥ १३ ॥
वायवश्च महावेगाः पर्वतांश्चालयन्ति ते।
विमानानि सुराणां च निपेतुर्वसुधातले ॥ १४ ॥
उल्काभिर्गगनं व्याप्तं पतन्तीभिर्द्विजोत्तमाः।
केतवश्चोदिताः सर्वे जृम्भन्त इव पावकाः ॥ १५ ॥
दिग्दाहाश्च महाघोरा दावाग्निरिव संक्षये।
मृत्युकाले यथा जन्तुर्नैव सौख्यमवाप्नुयात् ॥ १६ ॥
जगत्त्रयमिदं कृत्स्नं न लभेत तथा सुखम्।
न वेदाः पठितास्तस्मिन्न विप्रा जजपुर्जपम् ॥ १७ ॥
पार्वत्यां कम्पमानायां कम्पमाने च शंकरे।
त्रैलोक्यमभवन्नूनं कम्पमानं भयातुरम् ॥ १८ ॥
कालाग्निकम्पितो देवो विरञ्चिर्मुनिभिः सह।
चक्रायुधोऽपि चात्यर्थमिन्द्राद्यैः परिवारितः ॥ १९ ॥
ये केचिद्देवगन्धर्वाः सिद्धा गगनचारिणः।
विद्याधराश्च यक्षाश्च संप्राप्ताश्च वसुंधराम् ॥ २० ॥
एतस्मिन्नन्तरे प्राप्तः शक्रं देवर्षिसत्तमः।
यथावन्मधुपर्काद्यैः शक्रस्तमभ्यपूजयत् ॥ २१ ॥
अब्रवीद्देवराजस्तमुपविष्टं महामुनिम्।
त्रिकालदर्शिनं शान्तमात्मनिष्ठं तपोनिधिम् ॥ २२ ॥

**शक्र उवाच**—उत्पाताश्च महाघोराः संप्रवृत्ताः सुदारुणाः।
कारणं वद मे सर्वं शान्तिश्चैव यथा भवेत् ॥ २३ ॥

**नारद उवाच**—उमया सह विश्वेशः परं ज्योतिर्महेश्वरः।
अहर्निशमविश्रान्तं युक्त एव प्रवर्तते ॥ २४ ॥

---

१ (घ. ङ. च. छ. ज. ) ०कं च ह०. २ (घ.) ०ति तत्र प्र०। ३ (ङ. च. छ.) संवृत्ताः स्तु सु। ४ (ङ. च. छ.) ०र्वै ज्वलन्त०। ५ (घ. ङ. च. छ.) कामाग्नि०। ६ (ख. ग.) ०तो मरीचिर्मु०। ७ (क. ख.) ०ह देवेन्द्रः प०।

तस्माद्धेतोः प्रवर्तन्त उत्पाता वृत्रहन्किल ।
विघ्नं तस्य प्रकर्तव्यं यदीच्छसि परं सुखम् ॥ २५ ॥
उमागर्भसमुत्पन्नः सर्वस्मादधिको हि सः ।
कथं धारयितुं शक्ता ब्रह्माद्याः ससुरासुराः ॥ २६ ॥
जगत्त्रयमिदं कृत्स्नं धरणी धारयिष्यति ।
नापत्यधारणे शक्ता संजातं शिवयोः खलु ॥ २७ ॥
नारदस्य वचः श्रुत्वा शक्रो विस्मयतां गतः ।
तदा चिन्तार्णवे मग्नो देवैः सह पुरंदरः ॥ २८ ॥
पङ्के गौरिव सीदत्सु देवेष्वथ जनार्दनः ।
उवाच श्लक्ष्णया वाचा देवानां हितकाम्यया ॥ २९ ॥
**श्रीविष्णुरुवाच**—शृणुध्वं देवताः सर्वाः कामासक्तो न शंकरः ।
युष्माकं हितकामाय भोगयुक्तोऽभवच्छिवः ॥ ३० ॥
स्वतन्त्रशक्तिर्विश्वात्मा जितकामः स्वभावतः ।
संपूर्णकामः स विभुः कथं कामेन बाध्यते ॥ ३१ ॥
तद्रेतसा समुत्पन्नस्तारकं स वधिष्यति ।
एतस्मात्कारणाद्देवो देव्या युक्तोऽभवत्सुराः ॥ ३२ ॥
किंतु तत्केवलोत्पन्नं सेन्द्रैरपि सुरासुरैः ।
तेजो धारयितुं तस्य न शक्यमिति निश्चितम् ॥ ३३ ॥
इदं यत्कार्यमुत्पन्नं व्याधिरूपं दिवौकसाम् ।
उपेक्षितं न संदेहो हन्यान्नूनं जगत्त्रयम् ॥ ३४ ॥
यदि तत्केवलो जातो भविष्यति सुरास्तदा ।
असह्यो दुर्धरो घोर इति तथ्यं न संशयः ॥ ३५ ॥
स एव विष्णुर्बलवानिन्द्रश्चैव प्रजापतिः ।
स चाऽऽदित्यः कुबेरश्च ईशानो वरुणस्तथा ॥ ३६ ॥
स यमः स च सोमश्च स वायुः स्वर्गवासिनः ।
स एव सर्वं भविता भवद्भिश्चेदुपेक्षितः ॥ ३७ ॥
दृश्यतेऽत्राप्युपायश्च कार्यस्यास्य सुरोत्तमाः ।
यस्मादग्निमुखा यूयं तस्मादग्निर्हि नान्यथा ॥ ३८ ॥

---

१ (ख. ग.) ०योः किल ॥ २७ ॥ २ (च.) ०यमाग०। ३ (क. झ.) ०ष्णुर्भगवा०। ४ (क. ख. ग. झ.) ०द्भिर्यदुपे०। ५ (झ.) ०यस्तु का०।

यद्गुह्यं गहनं घोरमप्रधृष्यमगोचरम्।
हृदि यद्भवतां कार्यमग्निस्तत्साधयिष्यति ॥ ३९ ॥
एवमुक्त्वाऽथ विश्वादिः शङ्खचक्रगदाधरः।
अब्रवीत्कृष्णवर्त्मानं देवानां सदसि स्थितम् ॥ ४० ॥
**श्रीविष्णुरुवाच**–शृणु मद्वचनं वह्ने देवानां यदुपस्थितम्।
त्वया तत्साधनीयं हि हितार्थं त्रिदिवौकसाम् ॥ ४१ ॥
योऽसौ देवः परं ज्योतिर्नीलग्रीवो विलोहितः।
रमते चोमया सार्धं[1] चराचरपतिः शिवः ॥ ४२ ॥
भयं तस्मात्समुत्पन्नं[2] कारणाद्धि दिवौकसाम्।
तस्माद्धिताय गच्छ त्वं महादेवस्य संनिधौ ॥ ४३ ॥
मुखं त्वमेव सर्वेषां कार्याणां चैव साधकः।
इत्येवं वचनं श्रुत्वा पावकः केशवात्तदा ॥
उवाचेदं मुनिश्रेष्ठाः श्रीवत्साङ्कितवक्षसम् ॥ ४४ ॥
**अग्निरुवाच**–यदुक्तं भवता देव किं त्वयुक्तं सनातन।
महेशस्य रहःस्थस्य[3] प्रवेष्टुं नैव सांप्रतम् ॥ ४५ ॥
ध्यानयुक्तो जनः कश्चिन्मन्त्रभोजनतत्परः।
रहसिस्थोऽथ दानस्थस्तदयुक्तं प्रवेशनम् ॥ ४६ ॥
*जाप्योपहारयुक्तो[4] वा होमयुक्तोऽथवा भवेत्।
अर्चनाभिरतः कश्चित्तदयुक्तं प्रवेशनम् ॥ ४७ ॥
प्राकृतस्यापि देवेश रहःस्थस्य रमापते।
तस्मिन्काले सुरेशान गर्हितं तु प्रवेशनम् ॥ ४८ ॥
किं पुनर्भगवान्भीमस्तिग्मरश्मिर्महेश्वरः।
देवानां च हितार्थाय प्रकृत्या सह संगतः ॥ ४९ ॥
नाहं तत्र विशे नूनं बिभेमि मधुसूदन।
आगतं मां समालोक्य क्षणाच्छंभुर्हनिष्यति ॥ ५० ॥
जुगुप्सितमिदं कार्यमिति कष्टं भयावहम्।
विवस्त्रां जननीं देवीं कथं द्रक्ष्यामि केशव ॥ ५१ ॥

---

* कझपुस्तकयोरयं श्लोको नास्ति।

---

१ (क. ख. ग. ज. झ.) ०र्धं सुरासुर०। २ (क. ख. ग. ज.) ०मुद्भूतं का०। ३ (क. ख. ग. झ.) रतःस्थ०। ४ (घ.) जपोप०। ५ (ख. ग.) ०र्थमतिक्र०।

किं वक्ष्यति प्रविष्टस्य वक्ष्यामि किमहं विभो ।
जल्पयिष्यति मां देवो धिङ्मूर्खोऽयमिति ध्रुवम् ॥ ५२ ॥
यद्वाक्यं तद्भवत्वद्य न करोमि च निन्दितम् ।
अग्निना चैवमुक्तस्तु विष्णुर्दानवसूदनः ॥ ५३ ॥
भयदं मोहदं श्रुत्वा वाक्यं हृदयकम्पनम् ।
उवाच भगवान्विष्णुः पुनर्वह्निमिति स्तुवन् ॥ ५४ ॥
त्रैलोक्यरक्षणार्थाय शक्रादीनां च संनिधौ ॥ ५५ ॥
**विष्णुरुवाच**—यदुक्तं भवता वह्ने सत्यमेतन्न संशयः ।
आत्महेतोर्विरुद्धं स्यात्परार्थे नैव दुष्यति ॥ ५६ ॥
प्रदिष्टो देवदेवेन संहारार्थं कपर्दिना ।
प्रविश त्वमणो रूपमादाय न हि दुष्यति ? ॥ ५७ ॥
प्रस्तुताप्रस्तुतं नास्ति तेजोमूर्तेस्तवानघ ।
सर्वदा सर्वगस्त्वं हि न क्वचित्प्रतिहन्यसे ॥ ५८ ॥
भूतग्रामं समस्तं वै त्वमेको व्याप्य तिष्ठसि ।
उदरस्थः पचस्यन्नं प्राणिनां मेषवाहन ॥ ५९ ॥
त्वयैकेन जगत्कृत्स्नं गोप्यते यदि पावक ।
किं न प्राप्तं त्वया ब्रूहि दोषः कः स्याद्धुताशन ॥ ६० ॥
जुगुप्साऽस्मिन्न कर्तव्या त्वया वै हव्यवाहन ।
उत्पन्नस्यास्य कार्यस्य काल एष तवानघ ॥ ६१ ॥
त्रिदशाः शरणं प्राप्ता हुतभुक्त्वां विभावसो ।
अहो धन्यतरश्चासि श्लाघ्यो यदि करिष्यसि ॥ ६२ ॥
कुरु कार्यं सुराणां त्वं मग्नानां करुणां कुरु ।
सर्वकाले यथा मर्त्या वीक्षमाणास्तु भास्करम् ॥ ६३ ॥
तथा तवाऽऽननं वह्ने पश्यन्ति सुरसत्तमाः ।
चारुचन्द्रप्रतीकाशं कुण्डलाभ्यामलंकृतम् ॥ ६४ ॥
अनेन किं न पर्याप्तं वद नूनं विभावसो ।
एवं संबोध्यमानोऽग्निर्विष्णुना द्विजसत्तमाः ॥ ६५ ॥
हृदये चिन्तितं तेन यास्यामि हरसंनिधौ ।
ततो मनोगतं ज्ञात्वा अग्नेर्देवास्तदाऽनघाः ॥ ६६ ॥

---

१ (ख. ग.) ०मि विनि०। २ (क. ख. ग. ङ. च. ज. झ.) ०भुक् ते त्रि०।

सेन्द्राः सवरुणादित्याः सयक्षोरगराक्षसाः।
तुष्टुवुस्ते शुभैर्वाक्यैः पावकं द्विजसत्तमाः ॥ ६७ ॥ ३३४५ ॥

इति श्रीब्रह्मपुराणोपपुराणे श्रीसौरे सूतशौनकसंवादे साम्बक्रीडादिवर्णनं नाम षष्टितमोऽध्यायः ॥ ६० ॥

देवा ऊचुः—जलभीरो जलोत्पन्न जलाजल जलेचर।
जलजामलपत्राक्ष यज्ञदेव हुताशन ॥ १ ॥
कृष्णकेतो कृष्णवर्त्मन्स्वर्गमार्गप्रदर्शक।
यज्ञाहुतिहुताहार यज्ञाहार हराकृते ॥ २ ॥
पूर्णगर्भ गवां गर्भ जय देव महाशन।
तमोहर महाहार स्वाहाभर्तर्नमोऽस्तु ते ॥ ३ ॥
हव्यवाहन सप्तार्चे चित्रभानो महाद्युते।
अनलाग्ने यज्ञमुख जय पावक सर्वग ॥ ४ ॥
विभावसो महाभाग वेदभाषार्थभाषण।
कृशानो क्रतुसंभारप्रिय विश्वप्रभावन ॥ ५ ॥
सागराम्बुघृतं देव त्वमश्वमुखसंश्रितः।
पिबंश्चैवोद्गिरंश्चैव न तृप्तिमधिगच्छसि ॥ ६ ॥
त्वं वाक्येष्वनुवाक्येषु निषत्सूपनिषत्सु च।
ब्राह्मणा ब्रह्मयोनिं त्वां स्तुवन्ति त्वत्परायणाः ॥ ७ ॥
तुभ्यं कृत्वा नमो विप्राः स्वकर्मविहितां गतिम्।
ब्रह्मेन्द्रविष्णुरुद्राणां लोकान्संप्राप्नुवन्ति च ॥ ८ ॥
*त्वमन्तः सर्वभूतानां भुक्तं भोक्ता जगत्पते।
पचसे पचतां श्रेष्ठ त्रीँल्लोकान्संक्षपिष्यसि ॥ ९ ॥
साक्षी लोकत्रयस्यास्य त्वया तुल्यो न विद्यते।
शरणं भव देवानां विश्वत्रयमहेश्वर ॥ १० ॥
इत्येवं स्तूयमानोऽसावुत्थाय ज्वलनस्तदा।
देवान्प्रदक्षिणीकृत्य ययौ शंभुगृहं द्विजाः ॥ ११ ॥
†तत्रापश्यत्प्रतीहारं महादेवसमं बले।
पूजितं सेन्द्रकैर्देवैर्महादेवदिदृक्षुभिः ॥ १२ ॥

---

* ङ्चसंज्ञितपुस्तकयोरयं श्लोको नास्ति।
† ङसंज्ञितपुस्तकेऽयं श्लोको नास्ति।

---

१ (ङ. च.) °योनिस्त्वं स्तुवन्ति त्वां हुताशन ॥ ७ ॥

कपीन्द्रवदनं देवं कुलिशोद्यतपाणिनम् ।
शूलहस्तं महावीर्यं सूर्यायुतमिवोदितम् ॥ १३ ॥
नन्दिनं तु तदा दृष्ट्वा पावकश्च द्विजोत्तमाः ।
वेगस्तस्यातुलस्तीक्ष्णः सहसैव व्यहन्यत ॥ १४ ॥
तत्रस्थश्चिन्तयामास पश्यामीति कथं हरम् ।
नन्दिना द्वारसंस्थेन पुमान्न प्रविशेद्गृहम् ॥ १५ ॥
पश्यमानस्य शैलादेः प्रविशे यद्यहं गृहम् ।
फलसिद्धिं न गच्छेत(?) नन्दिना कुपितेन च ॥ १६ ॥
एवं चिन्तार्णवे मग्नो यावत्तिष्ठत्यसौ कविः ।
द्विजान्नानाविधांस्तावद्भ्रममाणांश्च दृष्टवान् ॥ १७ ॥
तान्दृष्ट्वा चिन्तयामास हंसस्य हरसंनिधौ ।
रूपं कृत्वा प्रवेक्ष्यामि इत्युपायमचिन्तयत् ॥ १८ ॥
आदाय हंसरूपं तु प्रविष्टः पावकस्तदा ।
प्रविश्य शङ्कारहितः सूक्ष्मरूपो व्यवस्थितः ॥ १९ ॥
पार्वत्या वाहनं सिंहमपश्यच्च विभावसुः ।
गोक्षीरधवलाभासं महालाङ्गूलशोभितम् ॥ २० ॥
जाज्वल्यमाननयनं चन्द्रकोटिसमप्रभम् ।
प्रसारितच्छटाटोपं हुंकारकृतभूषणम् ॥ २१ ॥
दानवानां क्षयकरं देवानामभयप्रदम् ।
हुंकारेण ततस्तस्य ज्वलनो बधिरीकृतः ॥ २२ ॥
अहो दुःखमिदं प्राप्तमिति संचिन्त्य चेतसा ।
यदि जीवन्गमिष्यामि सिंहादस्मादहं तदा ॥ २३ ॥
तेन पर्याप्तकामोऽहमिति संचिन्त्य निर्गतः ।
यत्र देवा महेन्द्राद्याः संस्थिता मेरुमूर्धनि ॥
देवाः सर्वे सुसंहृष्टा ऊचुस्तं जातवेदसम् ॥ २४ ॥
**देवा ऊचुः**—अस्मत्कार्यं त्वया वह्ने गत्वा तत्र यथा कृतम् ।
तत्सर्वं ब्रूहि नः क्षिप्रं शर्मास्माकं यथा भवेत् ॥ २५ ॥

---

१ (क. ख. ग. झ.) °न कः पुमान्प्रवि°। २ (क. झ.) °दा । तथा प्रविश्य निःशङ्कः सू°। ३ (ग.) °श्य तत्र निःशङ्कः सू°। ४ (ख. ग. ज.) °मथापश्यद्विभा°। ५ (ख. ग.) °त भीष°। ६ (क. ख. ग. ज. झ.) °द्या उपेन्द्रा°। ७ (ख. ग.) °हृष्टाः प्रोचु°।

अग्निरुवाच—गतोऽहं तस्य भवनं देवदेवस्य शूलिनः।
मया नन्दीश्वरो दृष्टो द्वारदेश उपस्थितः॥ २६॥
हंसरूपं ततः कृत्वा प्रविश्यान्तः पुरं[2] सुराः।
तत्र सूक्ष्मवपुर्भूत्वा यावत्क्षणमहं स्थितः॥ २७॥
तावत्पञ्चाननो दृष्टो गिरिजायास्तु वाहनम्।
अतिरौद्रो महाकायः प्रलयान्तकसंनिभः॥ २८॥
भीतोऽहं निर्गतस्तस्माददृष्ट्वैव पिनाकिनम्।
युष्मत्कार्यमकृत्वैव संप्राप्त इह भो सुराः॥ २९॥
पुनर्विचिन्त्यतां कार्यं सर्वेषां[3] वो यथा सुखम्।
एवं वह्नेर्वचः श्रुत्वा देवा विष्णुपुरोगमाः॥ ३०॥
ययुर्मुनिगणैः सार्धं मन्दरं चारुकन्दरम्।
तमासाद्य गिरिश्रेष्ठं प्रियं देवस्य शूलिनः॥ ३१॥
कृताञ्जलिपुटाः सर्वे ह्यस्तुवन्वृषभध्वजम्॥ ३२॥
देवा ऊचुः—ॐनमः परमेशाय त्रिनेत्राय त्रिशूलिने।
वि[4]रूपाय सुरूपाय पञ्चास्याय त्रिमूर्तये[6]॥ ३३॥
वरदाय वरा[5]हाय कूर्माय च मृगाय च।
नीलालकशिखण्डाय[7] मण्डलेशाय ते नमः॥ ३४॥
विश्वमानाय विश्वाय विश्वेशायाऽऽत्मरूपिणे।
कालघ्नाय मखघ्नाय अन्धकघ्नाय[8] वै नमः॥ ३५॥
नमो मन्त्राय जप्याय कोटिजाप्याय ते नमः।
ध्यानाय ध्येयरूपाय ध्येयध्यानात्मने नमः॥ ३६॥
ईशोऽनीशस्त्वमेवेश अन्तानन्तस्त्वमेव च।
अव्ययस्त्वं व्ययश्चैव जन्माजन्म त्वमेव च॥ ३७॥
*नित्यानित्यस्त्वमेवेश धर्माधर्मस्त्वमेव च।
गुरुस्त्वमगुरुश्चैव बीजं वाऽबीजमेव च॥ ३८॥
कालस्त्वम[9]सि लोकानामकालः परिगीयसे।
बलस्त्वमबलश्चैव प्राणश्चाप्राण एव च॥ ३९॥

---

* कझसंज्ञितपुस्तकयोरयं श्लोको नास्ति।

---

१ (घ. ङ. च.) ०देशे व्यवस्थि०। २ (ख. ग.) ०रं तदा। ३ (ख. ग.) ०षां नो य०। ४ (क. झ.) विश्वरूप विरूपाय मुण्डकेशाय ते नमः॥ ३३॥ ५ (ख. ग. ज.) ०राहाय। ६ (क. झ.) ०य पञ्चास्याय त्रिमूर्तये॥ ३४॥ ७ (ख. ग.) ०य ते न०। ८ (क. झ.) ०यश्च व्ययस्त्वं च ज। ९ (क. घ. ङ. च. छ. ज. झ.) ०मग्निर्लोका०।

साक्षी त्वं कर्मणां देव तथाऽसाक्षी महेश्वर ।
शास्ताऽशास्ता विरूपाक्ष ध्रुवश्चाध्रुव एव च ॥ ४० ॥
संसारी त्वं हि जन्तूनामसंसारी त्वमेव च ।
गोप्ता त्वं सर्वभूतानां नास्ति गोप्ता तवेश्वरः ॥ ४१ ॥
जीवस्त्वं जीवलोकस्य जीवस्तेऽन्यो न विद्यते ।
*न्यूनातिरिक्तभावेन त्वमायुश्च शरीरिणाम् ॥ ४२ ॥
देहिनां शंकरस्त्वं हि न चान्यस्तव शंकर ।
अरुद्रस्त्वं महादेव रुद्रस्त्वं घोरकर्मणाम् ॥ ४३ ॥
देवानां च महादेवो महांस्त्वत्तो न विद्यते ।
कामस्त्वं भविनां सर्वकामदस्त्वं जगत्पते ॥ ४४ ॥
अजेयो जयिनां श्रेष्ठो जयरूपस्त्वमेव हि ।
पुराणपुरुषस्त्वं हि पुराणोऽन्यो न विद्यते ॥ ४५ ॥
व्यालयज्ञोपवीताय सरोजाङ्काय ते नमः ।
नमोऽस्तु नीलग्रीवाय शितिकण्ठाय मीढुषे ॥ ४६ ॥
नमः कपालहस्ताय पाशहस्ताय दण्डिने ।
नमो देवाधिदेवाय नमो नारायणाय च ॥ ४७ ॥
ऊर्ध्वमार्गप्रणेत्रे च नमस्ते ह्यूर्ध्वरेतसे ।
†क्रोधिने वीतरागाय गजचर्मावगुण्ठिने ॥ ४८ ॥
नमो ब्रह्मशिरोघ्नाय नमस्ते रुक्मरेतसे ।
नमश्चण्डाय धीराय कमण्डलुनिषङ्गिणे ॥ ४९ ॥
नमः प्रचण्डवेगाय क्रोधचण्डाय ते नमः ।
वरेण्याय शरण्याय ब्रह्मण्यायाम्बिकापते ॥ ५० ॥
सर्वानुग्रहकर्ता त्वं धनदाय नमो नमः ।
नमः संसारपोताय अणिमादिप्रदायिने ॥ ५१ ॥
ज्येष्ठसामादिसंस्थाय रथंतराय ते नमः ।
त्रिगाथाय त्रिमात्राय त्रिमूर्ते त्रिगुणात्मने ॥ ५२ ॥

---

* न्यूनातिरिक्तेत्यादि न विद्यत इत्यन्तं श्लोकद्वयं गघसंज्ञितपुस्तकयोरेवास्ति ।
† क्रोधिन इत्यादि रुक्मरेतस इत्यन्तं शब्दजातं घसंज्ञितपुस्तके नास्ति ।

---

१ ( क. ख.ग.ज.झ. ) °त्वमध्रु° । २ ( ख.ग. ) °यशान्ताय । ३ ( क.ज.झ. ) त्वं ज्ञान° । ( ख. ग. ) त्वं यज्ञदा° । ४ ( क. घ. ङ. च. छ. ) °ष्ठमासादे° । ५ ( ङ. च. छ. ) त्रिमात्राय त्रिगायत्री त्रिमू° ।

त्रिवेदिने त्रिसंध्याय त्रिशून्याय त्रिवर्मणे ।
त्रिदेहाय त्रिकालाय त्रिशक्तिव्यापिने नमः ॥ ५३ ॥
शक्तित्रयविहीनाय शक्तित्रययुताय च ।
शक्तित्रयात्मरूपाय शक्तित्रयधराय च ॥ ५४ ॥
योगीशाय विषघ्नाय विजयाय नमो नमः ।
नमस्ते हरिकेशाय लोकपालाय दण्डिने ॥ ५५ ॥
हलीशाय प्रमेयाय कुलीशाय तु चक्रिणे ।
नमो बिन्दुविसर्गाय नादायानादधारिणे ॥ ५६ ॥
नाडीस्थाय च नाड्याय नाडीवाहाय वै नमः ।
*नमो गायत्रीनाथाय गायत्रीहृदयाय ते ॥ ५७ ॥
नमो गायत्रीगोप्त्रे च गायत्र्याय नमो नमः ।
य इदं पठते स्तोत्रं गीर्वाणैः समुदीरितम् ॥ ५८ ॥
यावज्जीवकृतैः पापैर्मुक्तो याति परां गतिम् ।
एवं स्तुतः सुरैः शंभुः प्रसन्नो वरदोऽभवत् ॥ ५९ ॥
वरं वृणीध्वं हे देवा इत्युवाच महेश्वरः ।
अथ तं वरदं ज्ञात्वा शंभुमग्निमुखाः सुराः ॥ ६० ॥
ऊचुः प्राञ्जलयः सर्वे भयं त्यक्त्वा द्विजोत्तमाः ।
**देवा ऊचुः**—यदि तुष्टोऽसि[2] विश्वेश देहीमं वरमुत्तमम् ॥ ६१ ॥
गिरिजाकुक्षिसंभूतः पुत्रो मा भूत्तवानघ ।
एवमस्त्वित्यसौ[3] शंभुः पुनरुक्त्वा ततो वचः ॥ ६२ ॥
नाहं रेतो वृथा स्कन्दे त्रैलोक्यक्षयकारकम् ।
वृथा शुक्रे मदीये तु त्रैलोक्यं भस्मसाद्भवेत् ॥ ६३ ॥
हिताय तस्माल्लोकानां मम रेतो दिवौकसः ।
शान्त्यर्थं चैव युष्माभिः शीघ्रमेव प्रयुज्यताम् ॥ ६४ ॥
एवं शंभोर्वचः श्रुत्वा देवास्ते भयविह्वलाः ।
सलोकेशाः सगोविन्दा न किंचिदब्रुवन्द्विजाः ॥ ६५ ॥
अथ देवेषु सीदत्सु वह्निर्गौरिव कर्दमे ।
प्रसार्य स्वाञ्जलिं शंभुं रेतो मुञ्चेति चाब्रवीत् ॥ ६६ ॥

* नमोगायत्रीनाथायेत्यादिनमो नम इत्यन्तं शब्दजातं कझसंज्ञितपुस्तकयोर्नास्ति ।

१ ( ख. ग. ) परायणम् । २ ( क. ख. ग. घ. झ. ) ०सि देवेश । ३ ( क. ख. ग. ज. झ. ) शंभुरुक्त्वा प्राह पुनर्वचः ॥ ६२ ॥

देवदेवामृतं दिव्यं हस्ताभ्यां मम शंकर ।
शीघ्रमेव प्रयच्छस्व पिबन्तु सुरपुङ्गवाः ॥ ६७ ॥
ततो लिङ्गाद्विनिष्क्रान्तं चन्द्रबिम्बात्सुनिर्मलम् ।
जातीनीलोत्पलामोदं पाणौ वह्नेर्ददौ शिवः ॥ ६८ ॥
कराभ्यां पतितं रेतस्तदाऽभूत्पावकस्य वै ।
पपौ वह्निस्ततः शुक्रं ज्वलन्तं भास्करप्रभम् ॥ ६९ ॥
सुधेति मनसा मत्वा हृष्टात्मा मुदयाऽन्वितः ।
अथ पीते तदा शुक्रे वह्निना मुनिपुङ्गवाः ॥ ७० ॥
रेतःपातेन संतर्प्य स देवासुरपूजितः ।
विसृज्य तांस्तु भगवांस्तत्रैवान्तरधीयत ॥ ७१ ॥
तदा हविर्भुजं देवं सेन्द्रा ब्रह्मपुरोगमाः ।
यथाऽऽगता ययुस्तत्र पूजयित्वा दिवौकसः ॥ ७२ ॥
रेतसा दह्यमानोऽग्निः पातालात्सुतलं गतः ।
ततो विवेश गिरिशो यत्राऽऽस्ते पार्वती शिवा ॥ ७३ ॥
उवाच पार्वतीं शंभुः प्रहसन्कमलेक्षणाम् ।

**ईश्वर उवाच**–शृणु देवि महाभागे यद्वृत्तं तद्ब्रवीम्यहम् ॥ ७४ ॥
स्वतन्त्रकामाऽसि शिवे यथाऽहं वरवर्णिनि ।
देवा मच्छरणं प्राप्ता न चाहं शरणं त्यजे ॥ ७५ ॥
गोप्या मया सदा कान्ते महादेवो यतः स्मृतः ।
भविष्यति महाभागे पुत्रस्तव षडाननः ॥ ७६ ॥
किं त्वौरसस्तु सुश्रोणि देवैर्नेष्टस्तवांशतः ।
तस्माच्छुद्धं मया रेतो मुखे वै जातवेदसः ॥ ७७ ॥
वह्निकुक्षिगतं रेतो गतं देवान्विभागशः ।
यच्छेषमुदरे वह्निस्तद्गङ्गायां प्रदास्यति ॥ ७८ ॥
ततः साऽपि विदह्यन्ती मम तेजः प्रतापवत् ।
कृत्तिकाः षट् समाख्याता गङ्गायां स्नातुमागताः ॥ ७९ ॥
तासु गङ्गाविनिक्षिप्तं मम रेतस्तदद्भुतम् ।
ततस्ताः कृत्तिकास्तब्धा देवि मां शरणं गताः ॥ ८० ॥

---

१ (घ. ङ. च. छ.) ०स्करोपमम् । २ (ख. ग.) संदग्ध स । ३ (ख. ग) देवाः से० ।
४ (क. ख.) ०ङ्गासमुत्क्षिप्तं ।

अनुग्रहान्मया तासामिदमुक्तं तदा शिवे।
ममाऽऽदेशाद्गताः सर्वाः शरधानवनं शुभम् ॥ ८१ ॥
मोचयिष्यन्ति ता गर्भं देवाश्च कमलेक्षणे।
वचनान्मम सुश्रोणि गर्भशल्यं वरानने ॥ ८२ ॥
ततस्ते भविता पुत्र एकीभूत्वा स्वतेजसः।
बालसूर्यायुतः प्रख्यो बालेन्दुभ्रूलताङ्कितः ॥ ८३ ॥
आग्नेयो वह्निजो देवो गाङ्गेयः कृत्तिकासुतः।
स्कन्दो गुहस्तथा पुत्रो नामभिस्ते भविष्यति ॥ ८४ ॥
एवं शंभोर्वचः श्रुत्वा प्राह देवी गिरीन्द्रजा।
मम कुक्षिसमुत्पन्नं यतो नेच्छन्ति पुत्रकम् ॥ ८५ ॥
अतः पुत्रविहीनास्ते भविष्यन्ति सुरादयः।
यो हि नन्दी महावीर्यः सुरासुरमहोरगैः ॥ ८६ ॥
दुर्जयः सर्वभूतानां योगी योगबलान्वितः।
प्रविश्यान्तःपुरे वह्निर्दृष्ट्वा मां वस्त्रवर्जिताम् ॥ ८७ ॥
यस्मादुपेक्षितस्तस्मान्मनुष्यत्वं प्रयातु सः।
शापं श्रुत्वाऽथ शैलादिर्वज्रेणेव हतो गिरिः ॥ ८८ ॥
न्यपतद्योगिनामग्र्यो ज्ञानमूर्तिधरो द्विजाः।
पुनश्च शंभोर्वचनाच्छैलादिमनुगृह्य च ॥
समालिङ्ग्य महादेवं स्थिता देवीति नः श्रुतम् ॥८९॥३४३४॥

इति श्रीब्रह्मपुराणोपपुराणे श्रीसौरे सूतशौनकसंवादे पावकस्तुत्यादि-कथनंनामैकषष्टितमोऽध्यायः ॥ ६१ ॥

**ऋषय ऊचुः**—वह्नौ संतर्पिते सूत रेतसा त्रिदिवौकसः।
सगर्भाः खलु संजाता देवदेवेन शंभुना ॥ १ ॥
सौख्यं कथमवापुस्त उदरस्थेन रेतसा।
किमकुर्वंस्तदा सर्वे नारायणपुरोगमाः ॥ २ ॥
गर्भनिष्क्रमणं तेषामुत्पन्नेन च किं कृतम्।
एतत्सर्वं समासेन ब्रूहि नः सूत पृच्छताम् ॥ ३ ॥

**सूत उवाच**—वह्नौ (?) संतर्पितास्तेन रेतसा त्रिदिवौकसः।
रेतसा चोदरस्थेन संतप्तास्ते सुरादयः ॥ ४ ॥

---

१ (ख. ग. ज.) ०कीकृत्वा। २ (क. ङ.) योऽयं न०। (ख. ग.) यो नन्दी च म०।
३ (क. च. छ.) ०तास्तु सु०।

दशपञ्चसहस्राणामतीतेषु द्विजोत्तमाः ।
वर्षाणां च तथाऽष्टौ च गूढगर्भा दिवौकसः ॥ ५ ॥
दुःखिताः पार्वतीकान्तं शंकरं शरणं ययुः ।
ऊचुः प्राञ्जलयः सर्वे सूर्यकोटिसमप्रभम् ॥ ६ ॥
**देवा ऊचुः**—भगवन्यदिदं दुःखं गर्भजं देहशोषणम् ।
यथा नश्यति देवेश तदुपायं कुरु प्रभो ॥ ७ ॥
वह्निना पीतमात्रेण रेतसा तव शंकर ।
वयं सगर्भाः संजाता गर्भकाले च तोयदाः ॥ ८ ॥
*उपहास्यमिदं देव पुंसां यद्गर्भसंभवः ।
सर्वे वै भृशमुद्विग्नास्तव तेजोवशाद्विभो ॥ ९ ॥
दह्यमाना महादेव नरके पापिनो यथा ।
शरणं भव देवानां करालम्बं ददस्व नः ॥ १० ॥
दुःखोदधौ प्रदुस्तारे प्रणतार्तिविनाशन ।
†एवं श्रुत्वा तु वचनं देवानां पार्वतीपतिः ॥ ११ ॥
ईषद्विहस्य भगवानुवाचेदं सुरेश्वरः ॥ १२ ॥
**ईश्वर उवाच**—भवद्भिरीदृशं कार्यमिष्टं वै सुरपुङ्गवाः ।
नेष्टं देव्योदरस्थं हि तस्माद्गर्भदशां गताः ॥ १३ ॥
इदानीं यत्प्रकर्तव्यं शृणुध्वं तत्सुरोत्तमाः ।
वह्निं यूयं पुरस्कृत्य मेरुं व्रजत मन्दरात् ॥ १४ ॥
शरधानवने यूयं ह्रदोत्सङ्गे प्रसूयत (?) ।
निःसरिष्यत्यसन्देहं ततः सौख्यमवाप्स्यथ ॥ १५ ॥
ततः शंभोर्वचः श्रुत्वा नारायणपुरोगमाः ।
अग्निमन्विष्य च ययुर्मेरुं गिरिवरोत्तमम् ॥ १६ ॥
तस्य चोत्तरदिग्भागे शरधानवने शुभे ।
उपविश्य महात्मानो मध्ये संस्थाप्य वेधसम् ॥ १७ ॥
नारायणं पुरस्कृत्य प्रसूताः सर्वदेवताः ।
गर्भशल्यविनिर्मुक्ता जातास्ते सुखिनो द्विजाः ॥ १८ ॥

---

* ङसंज्ञितपुस्तकेऽयं श्लोको नास्ति ।

† एवं श्रुत्वेत्यादि सुरेश्वर इत्यन्तं शब्दजातं कझसंज्ञितपुस्तकयोर्नास्ति ।

---

१ ( ख. ग. ङ. च. छ. ज. ) च मूढ०। २ ( क. झ. ) ०न्तं शरण्यं श०। ३ ( क. ङ. च. छ. ) ०ता ते च शं०। ४ ( घ. ) ०स्थं ततस्मा०।

शार्वेण तेजसा तेन रञ्जितो मेरुपर्वतः।
ततः काञ्चनतां प्राप्तः सशैलवनकाननः॥ १९॥
शार्वं तेजो धृतं यस्माद्देवैर्वह्निपुरोगमैः।
तस्माज्जरादिभिर्मुक्ता अमराश्च सुरोत्तमाः॥ २०॥
सिद्धाश्च मुनयश्चैव ये केचित्तत्र संस्थिताः।
तृणगुल्मलताश्चैव जलस्थलरुहाश्च ये॥ २१॥
सर्वे काञ्चनसंकाशाः संजातास्तत्प्रभावतः।
पार्श्वं मेरोर्विनिर्भिद्य शंभोस्तेजो विनिर्गतम्॥ २२॥
गङ्गायां निहितं यच्च तदेकस्थमभूद्द्विजाः।
अथ देवो महादेवस्तेजोराशिरुमापतिः॥ २३॥
गोपयामास तत्तेजः पिङ्गलं प्रेक्ष्य शंकरः।
गोप्यमाने[2] तु तस्मिंश्च मेरौ सूर्यायुतप्रभः॥ २४॥
वर्षाणां[3] च सहस्रेण कठिनं स्कन्दतां गतः।
स्कन्द इत्युच्यते तेन तदाप्रभृति सुव्रताः॥ २५॥
*हराज्जातो यतस्तेन कुमार इति कथ्यते।
स्कन्दः कुमारः षड्वक्त्रस्तथा द्वादशलोचनः॥ २६॥
भुजैर्द्वादशभिश्चैव शोभमानोऽभवत्तदा।
ईशादेशात्पुनः स्नातुं कृत्तिकाः परमोज्ज्वलाः॥ २७॥
ताभिः क्षीरं यतो दत्तं कार्तिकेय इति स्मृतः।
गर्भपङ्कविलिप्ताङ्गो गङ्गायां स्नापितः प्रभुः॥ २८॥
तप्तचामीकराभासः शरधानवने तदा।
नाम्नां सहस्रेण तदा कुमारो वेधसा स्तुतः॥ २९॥
मुमोच नादमुत्थाय सर्वभूतभयंकरम्।
पातालं भेदयित्वा तु तच्छृङ्गं शतधा कृतम्॥ ३०॥
सिंहादयोऽपि तत्रस्थास्तेन नादेन सूदिताः।
ततस्तं क्रीडमानं तु दृष्ट्वा देवं शिवात्मजम्॥ ३१॥
पिङ्गलो देवदेवेशं ज्ञापयामास शंकरम्।
पश्य त्वं देवदेवेश क्रीडमानं कुमारकम्॥ ३२॥
सूर्यायुतप्रतीकाशमात्मसूनुं षडाननम्।

---

* ङसंज्ञितपुस्तकेऽयं श्लोको न विद्यते।

---

१ (ख. ग.) °नैश्चाग्निपु° २ (क. ख. ग. ङ.) °ने तदा तस्मिन्मेरौ। ३ (ख. ग.) °णां तु स°।

ज्ञापितः पिङ्गलेनेशो वाक्यं देव्यै मुदावहम् ।
वरो वरेण्यो वरदो विश्वाकार[1] उवाच ह ॥ ३३ ॥
**ईश्वर उवाच**—गच्छाव एहि देवेशि मेरौ यत्र सुतस्तव ।
पश्यावस्तं वरारोहे कुमारं तु षडाननम् ॥ ३४ ॥
पुरा त्वयेष्टं कनकावभासं पश्याद्रिजे मानसराजहंसम् ।
प्रधावमानं शतसूर्यकल्पं षडाननं कार्मुकपाणिमग्रे ॥ ३५ ॥
समागतौ स ज्वलनोऽथ दृष्ट्वा त्रिलोकनाथौ जगतः प्रदीपौ ।
उवाच वह्निर्वरदं कुमारं हराम्बिके द्वौ पितरौ तवैतौ ॥ ३६ ॥
त्वामागतौ द्रष्टुमनन्तवीर्यं[2] व्रजाश्रयेति प्रमथाधिनाथौ ।
गतोऽथ वह्नेर्वचनं निशम्य ततः सुतस्त्वाद्रिरिजाङ्कगोऽभूत् ॥ ३७ ॥
तं सा पिबन्तं मुहुरङ्कसंस्थमतृप्यमानं कलहंसनादिनी ।
उमाङ्कसंस्थो मदनारिसूनुः करेण तस्यास्तिलकालकौ तु ॥ ३८ ॥
ममर्द शंभोश्च भुजंगहारं जग्राह चन्द्रं स कपर्दसंस्थम् ॥ ३९ ॥
पञ्चम्यां स्थापितः सोऽथ षष्ठ्यां षष्ठीप्रियो गुहः ।
चतुष्पादवतीं त्यक्त्वा त्रैलोक्यं हन्तुमुद्यतः ॥ ४० ॥
अबोधयत्तदा बालो जन्तून्स्थावरजङ्गमान् ।
क्वचिच्छृङ्गं गिरेः[3] शौर्यान्नयत्याशु समानताम् ॥ ४१ ॥
क्वचित्सिंहान्समाकृष्य पातयामास भूतले ।
आरुह्याभ्यहनत्पृष्ठे[4] (?) तानेव भ्रामयन्पुनः ॥ ४२ ॥
क्वचिन्नागौ गृहीत्वा तु कराभ्यां संमुखावुभौ ।
आस्फोटयत्तदाऽन्योन्यं[5] कुम्भाभ्यां स च लीलया ॥ ४३ ॥
समुत्पत्य समादाय खेचराणामुमासुतः ।
चिक्षेप सहसा बालो विमानान्यवनीतले ॥ ४४ ॥
पुनरुत्पत्य वेगेन प्रेक्ष्यमाणः खमण्डले ।
मार्गं रुरोध सूर्येन्द्वोर्ग्रहाणां च तथैव सः ॥ ४५ ॥
उत्पाट्य मेरुशृङ्गाणि इतश्चेतश्च सोऽक्षिपत् ।
पर्वतांश्च विशेषेण नद्यश्चोन्मार्गतोऽनयत् ॥ ४६ ॥
त्रासितं तु जगत्सर्वं दामोदरपदत्रये ।
ततस्ते भृशमुद्विग्नाः शक्रं शत्रुप्रतापनम् ॥ ४७ ॥

---

१ ( ङ. च. छ. ) ०विश्वका०। २ ( घ. ङ. च. छ. ) ०र्यं महाबलं वै प्र०। ३ ( ख. ङ. ) ०रेस्तस्य नय०। ४ ( ख. ङ. च. छ. ज. ) ०ह्याथाह० ( क. झ. ) ०ह्याथाह तत्पृष्ठे ता०। ५ ( ख. म. ) आस्फालय०।

ऊचुर्गत्वा द्विजश्रेष्ठा भूता वाक्यमिदं तदा।
अयमर्कायुतप्रख्यो बालो नो हन्ति वृत्रहन्॥ ४८॥
*तवैष राज्यहर्ता वै भविष्यति न संशयः।
पराक्रमाद्बलाच्छक्र तथोत्साहाच्च तेजसः॥ ४९॥
नूनं शतगुणेनायमधिकश्चेह दृश्यते।
यदि सूदयसे नाथ तत्त्वं सुखमवाप्स्यसि॥ ५०॥
करिष्यसि वचोऽस्माकं तव राज्यं भविष्यति।
उपेक्षा नैव कर्तव्या शिशुं मत्वा पुरंदर॥ ५१॥
एतद्विचार्य यत्नेन ततो बालं निषूदय।
एवमुक्तस्ततस्तैस्तु भूतव्रातैः पुरंदरः॥
उवाच वचनं श्लक्ष्णं तेषां धर्मपरायणम्॥ ५२॥

**इन्द्र उवाच**—कथमुक्तमिदं भूता बालस्य हननं प्रति।
धर्मघ्नं पापसंघातं कीर्तिघ्नं वै चराचरे॥ ५३॥
श्रूयतामभिधास्यामि धर्मशास्त्रस्य निश्चितम्।
ऋषिभिश्च पुराऽऽख्यातं पुराणेषु चराचराः॥ ५४॥
आतुरं[1] भीरुमुद्विग्नमेकस्थं शरणागतम्।
स्त्रियमप्यथवा बालमन्धं पङ्गुं तपस्विनम्॥ ५५॥
विलपन्तं तथोन्मत्तं विश्वस्तं ब्राह्मणं तथा।
पतितं प्रपलायन्तं कामासक्तं निरायुधम्॥ ५६॥
नग्नं दीनं तथा वृद्धं नखरोमसमन्वितम्।
मुक्तकेशं तथा मत्तं सुप्तं च भुवनौकसः॥ ५७॥
सूदयिष्यन्ति ये नूनं मूढास्ते नरकार्णवात्।
अनुत्थाना भविष्यन्ति गर्तस्थः कुञ्जरो यथा॥ ५८॥
तस्माद्व्रजध्वं शरणं यत्र शंभुसुतो गुहः।
नाहं बालवधं कर्तुमुत्सहे सचराचरे[3]॥ ५९॥
†एवमुक्ते तु शक्रेण भूतास्ते भृशदुःखिताः।
क्रोधसंदीपनं वाक्यं पुनरूचुश्चराचराः॥ ६०॥

---

* ङचछसंज्ञितपुस्तकेष्वयं श्लोको नास्ति।

† खगसंज्ञितपुस्तकयोरेवैष श्लोको वर्तते।

---

१ (ख. ग.) ०रं सर्वमङ्गस्यमुद्विग्नं श०। २ (ख. ग.) ०द्धं हरोमाभ्यां समाश्रित०। ३ (क. ख. ग. ङ.) ०चराः॥ ५९॥

भूता ऊचुः–गर्भो दितेर्यथा शक्र संरम्भात्सूदितस्त्वया ।
तदा नीतिर्गता कुत्र दारुणे गर्भपातने ॥ ६१ ॥
अशक्यमिति मत्वैव नीतिमानसि मानद ।
अशक्यकर्मणि विभो नीतिमान्पुरुषो भवेत् ॥ ६२ ॥
कश्च नाम नरः शूरो यो बालं योधयेद्रणे ।
अपि शक्रशतैस्तस्य वज्रकोटिनिपातनैः ॥ ६३ ॥
अप्येकमपि रोमाग्रं पातितुं नैव शक्यते ।
एवमुक्तस्ततस्तैस्तु भूतव्रातैः पुरंदरः ॥ ६४ ॥
आज्यधाराभिषिक्तोऽग्निर्यथैव प्रज्वलंस्तथा ।
उवाचेदं वचस्तान्स क्रोधवह्निप्रदीपितः ॥ ६५ ॥
वज्रमुद्यम्य हस्तेन वृत्रहा कुलिशायुधः ॥ ६६ ॥
इन्द्र उवाच–पुरा मया यथा गर्भो घातितश्च चराचराः ।
दितेः कायं समाविश्य तथेदानीं निहन्यते ॥ ६७ ॥
अथ गत्वा हनिष्यामि पतङ्गमिव वह्निना ।
वज्रं हस्ते समादाय आहवे प्रसहेत कः ॥ ६८ ॥
एवमुक्त्वा ततः शक्रः क्रोधानलसमीरितः ।
आज्ञापयत्तदा विप्राः साध्यान्देवान्दिवाकरान् ॥ ६९ ॥
शरधानं गमिष्यामि वधार्थं बालकस्य च ।
हंसकुन्देन्दुवर्णाभं चतुर्दन्तं महागजम् ॥ ७० ॥
आनयध्वं ममाग्रे तु करीन्द्रं मम वल्लभम् ।
जलधेरिव गम्भीरं दीर्घहस्तं घनस्वनम् ॥ ७१ ॥
दैत्यदानवरक्तेन क्लिन्नदंष्ट्रं भयावहम् ।
तदादेशात्सुरैस्तूर्णं सर्वायुधसमन्वितः ॥ ७२ ॥
निवेदितः स शक्राय तमारुह्य पुरंदरः ।
विश्वैर्देवैश्च साध्यैश्च वसुभिश्च मरुद्गणैः ॥ ७३ ॥
आदित्यैरश्विनीभ्यां च ययौ स्कन्दवधाय सः ।
वियन्मण्डलमास्थाय स्तूयमानश्चराचरैः ॥ ७४ ॥
नृत्यमानाप्सरोभिश्च वाद्यमानैश्च किंनरैः ।
गीयमानश्च गन्धर्वैः सुगीतैर्गीतशालिभिः ॥ ७५ ॥

---

१ ( ख. ग. घ. ) °स्तावत्क्रोध°। २ ( क. ङ. ) °स्य हि । हं°।

नदद्भिश्च महासिंहैर्गर्जद्भिश्च गजोत्तमैः।
हरिभिर्ह्रेषमाणैश्च वायुवेगैर्महारथैः ॥ ७६ ॥
पताकाभिर्जयन्तीभिर्ध्वजैश्छत्रैश्च चामरैः।
एवमाद्यैरनेकैश्च नन्दीश्वर इवापरः ॥ ७७ ॥
दोधूयमानश्चमरैश्च दिव्यैर्जेगीयमानः सुरकिंनरीभिः।
पेपीयमानः सुरसुन्दरीभिः कामातुराभिर्नयनैरजस्रम् ॥ ७८ ॥
संपूज्यमानो मुनिसिद्धसंघैर्मुदान्वितो वज्रधरः किरीटी।
कुमारमुद्दिश्य गतोऽथ वेगाद्धरिर्हरिर्वै मनुजान्यथेव ॥ ७९ ॥ ३५१३ ॥
इति श्रीब्रह्मपुराणोपपुराणे श्रीसौरे सूतशौनकसंवादे परमेश्वर-
सुरसंवादादिकथनं नाम द्विषष्टितमोऽध्यायः ॥ ६२ ॥

**सूत उवाच**–एवं गत्वा सहस्राक्षो यत्राऽऽस्ते पार्वतीसुतः।
बालं[1] सूर्यायुतप्रख्यं तमपश्यच्छचीपतिः ॥
प्रलयाग्निचयाकारं दृष्ट्वा नारदमब्रवीत् ॥ १ ॥

**इन्द्र उवाच**–इदं किं भाति देवर्षे मेरोः शतगुणोच्छ्रयम्।
तेजसा व्याप्तभुवनं सर्वभूतभयंकरम् ॥ २ ॥
एवं शक्रवचः श्रुत्वा भगवान्पद्मभूसुतः।
ऐरावतगजारूढं शचीपतिमथाब्रवीत् ॥ ३ ॥

**नारद उवाच**–योऽसौ देव त्वया न्यस्तो गर्भश्चैव सहामरैः[2]।
तस्यैवैष प्रभावोऽयं नूनं देव शतक्रतो ॥ ४ ॥
भास्कराणां न पुञ्जोऽयं नैव पर्वतसंचयः।
बालेनोत्पाद्यमानेन सह देवैश्च रञ्जितः ॥ ५ ॥
अधो योजनसंख्याभिः सहस्राण्येव षोडश।
चतुरशीतिरुत्सेधो द्वात्रिंशद्विस्तरः स्मृतः ॥ ६ ॥
यद्गिरिः सकलोऽयं तु मेरुः काञ्चनतां गतः।
तत्तेजः स्कन्दतां यातं सहस्राब्दैर्गतैस्तथा ॥ ७ ॥
चतुर्थ्यां साकृतिर्देव पञ्चम्यामङ्गवांस्ततः।
षष्ठ्यां पद्भ्यां यथा चैष त्रैलोक्यं विजयिष्यति ॥ ८ ॥
त्वया सहायं सप्तम्यां पालयिष्यति वा पुनः।
त्वं[3] तु नूनं न शक्तोऽसि जेतुं वर्षशतैरपि ॥ ९ ॥

---

१ ( घं. च. छ. ) बालसू०। २ ( क. झ. ) ०व महासुरैः। ३ ( क. ख. ग. ज. झ. ) त्वं हि नू०।

कुमारं वरदं [1]देवं पार्वत्यानन्दवर्धनम् ।
नानाप्रहरणोपेतं नानाभरणभूषितम् ॥ १० ॥
मातृभिर्गणवृन्दैश्च सेव्यमानमुमासुतम् ।
एवं संजल्पमानोऽसौ जम्भारिर्बालकं प्रति ॥ ११ ॥
वज्रं मुमोच वृत्रारिः स्फुलिङ्गोद्गारिभीषणम् ।
तृणवन्मन्यमानोऽसौ वज्रं तत्पार्वतीसुतः ॥ १२ ॥
शरेणैकेन विव्याध पपात[2] च स मूर्छितः ।
पुनरन्यं समादाय शरं ज्वलनसंनिभम् ॥ १३ ॥
छत्रं ध्वजं पताकाश्च हरेश्चिच्छेद षण्मुखः ।
बिभेदान्येन तीक्ष्णेन *हस्तं वै वज्रिणो गुहः ॥ १४ ॥
शरेणाऽऽदित्यतुल्येन रुरुं शंभुर्यथाऽऽहवे ।
पुनर्बाणं समादाय तं जघान शतक्रतुम् ॥ १५ ॥
अपरेण तु तीक्ष्णेन मुकुटं तु तथा हरेः ।
शरेण वह्नितुल्येन चिच्छेद च स लीलया ॥ १६ ॥
यमं च पञ्चभिर्बाणैर्निर्ऋतिं दशभिर्गुहः ।
दशपञ्चशरैराशु वरुणं च बिभेद सः ॥ १७ ॥
विंशत्या वायुदेवं च रविं च दशपञ्चभिः ।
त्रिंशद्भिः सोमराजानं ताडयित्वा रणे पुनः ॥ १८ ॥
शक्रं पञ्चशतैराशु शरैश्च प्राणहारिभिः ।
अन्यानपि सुरान्स्कन्दस्त्रिभिर्द्विपञ्चभिः शरैः ॥ १९ ॥
शूरो नादं प्रमुञ्चन्वै शक्रं दुद्राव शंभुजः ।
वसुभिश्च तथाऽऽदित्यैर्मरुद्भिश्च महाबलैः ॥ २० ॥
वृतः [3]शक्रकैर्बालः सिंहैः शरभराडिव ।
ततस्तानागतान्दृष्ट्वा देवाञ्शंकरवल्लभः ॥ २१ ॥
केसरीव मृगान्क्षुद्रान्दुद्राव च दिवौकसः ।
पुनः स्कन्दं सहस्राक्षो वज्रेण तमताडयत् ॥ २२ ॥
ताडिते तु ततस्तस्मादुत्पन्नाश्चारुमूर्तयः ।
त्रयो देवाश्च वेदाश्च लोकाश्चाग्निदिवाकराः ॥ २३ ॥

---

* घङचछजसंज्ञितपुस्तकेषु हस्तं वा इत्यादि तीक्ष्णेनेत्यन्तं शब्दजातं नास्ति ।

---

१ ( ङ. च. छ. ) देव पा०। २ ( क. ख. ) ०त हार्दि मू०। ३ ( घ. ङ. च. छ. ज. ) ०शक्रसुरै०।

ततश्चेदं सहस्राक्षं बृहद्गुरुबृहस्पतिः ।
देवमन्त्री महाप्राज्ञो बृहस्पतिरथाब्रवीत् ॥ २४ ॥
अलं युद्धेन देवेश महादेवस्य सूनुना ।
हितं[1] तवोपदेक्ष्येऽहं सहस्राक्ष शृणुष्व तत् ॥ २५ ॥
यदीप्ससि[2] सुखं भोक्तुं कुरुष्व वचनं मम ।
अनेन सह संप्रीतिं कृत्वा राज्यमकण्टकम् ॥ २६ ॥
भुङ्क्ष्व त्वं निश्चलं कृत्वा दानवांश्च निषूदय ।
यस्य वज्राभिघातेन नार्तिः स्वल्पाऽपि जायते ॥ २७ ॥
हन्तव्यः स कथं शक्र शतसंख्यैर्भवादृशैः ॥ २८ ॥

**सूत उवाच**—*श्रुत्वा तस्य वचः शक्रस्तदा सुरगुरोर्द्विजाः ।
तमेव शरणं प्रायात्कुमारं पार्वतीसुतम् ॥ २९ ॥

**इन्द्र उवाच**—प्रसीद मे त्वं शरणागतस्य पादौ तवाहं शिरसा वहामि ।
सुराधिपस्त्वं भव शर्वसूनो गृहाण राज्यं मम शंभुकल्प ॥ ३० ॥
एषोऽञ्जलिः पङ्कजचारुनेत्र कृतोत्तमाङ्गे(?) जहि मन्युमुग्रम् ।
सतां हि कोपः प्रणतेषु नित्यं विनाशमेत्यार्यमनः सुसिद्धम्॥३१॥
अथेन्द्रवचनं श्रुत्वा भगवान्षण्मुखस्तदा ।
अब्रवीत्करुणाविष्टः शक्रं प्रति मुनीश्वराः ॥ ३२ ॥

**स्कन्द उवाच**—करोमि किमहं राज्यं भोगैश्च प्राकृतैरलम् ।
अपर्याप्तं न मे किंचिदस्ति पित्रोः प्रसादतः ॥ ३३ ॥
निष्कण्टकं त्वमेवेह राज्यं कुरु शचीपते ।
मम सख्येन सकलाञ्शत्रूञ्जहि पुरंदर ॥ ३४ ॥
एवं स्कन्दवचः श्रुत्वा पुनराह[3] शचीपतिः ।
भगवन्नापरः कश्चिद्देवानां विदितो बली ॥ ३५ ॥
तस्मात्कुरु त्वमेवेह राज्यमीश्वरनन्दन ।
क्व बालः क्व च संग्रामः क्व नीतिः क्व पराक्रमः ॥ ३६ ॥
क्व ज्ञानमतुलं देव क्व मतिः क्व च सौम्यता ।
क्व माया क्व च दाक्षिण्यं क्व क्षान्तिः क्व प्रसादता ॥ ३७ ॥

---

* घसंज्ञितपुस्तकेऽयं श्लोको नास्ति ।

---

१ ( ङ. च. छ. ) ०तं ते चोपदे० । २ ( क. झ. ) यदिच्छसि । ३ ( ख. ग. ) पुनः प्राह ।

अलं त्वमेव राज्यस्य गुणैरेभिरुदीरितैः ।
*स्वरूपैः स्वगुणैस्त्वं हि बन्दिभिश्चारणैस्तथा ॥ ३८ ॥
विद्याधरैश्च यक्षैश्च विविधैर्गुणकोटिभिः ।
स्तूयमानोऽमरैः सिद्धैर्गन्धर्वाप्सरसां गणैः ॥ ३९ ॥
अहं सेनापतिर्देव भवामि भवनन्दन ।
तिष्ठ त्वोपरि कृत्स्नस्य त्रैलोक्यं भुङ्क्ष्व षण्मुख ॥ ४० ॥
सर्वगः सर्वभूतस्त्वं यथा देवो महेश्वरः ।
एवं शक्रवचः श्रुत्वा पुनः प्राहाम्बिकासुतः ॥ ४१ ॥

**स्कन्द उवाच**—अभयं शक्र मा भैषीः कुरु राज्यमकण्टकम् ।
इन्द्रस्त्वं देवराजस्त्वं त्वमेव जगतः प्रभुः ॥ ४२ ॥
दर्पगर्वबलोदीर्णा दानवा ये च तांस्तदा ।
यैः पराजीयसेऽत्यर्थं सूदयेऽहं त्वया स्मृतः ॥ ४३ ॥
बह्वालापैरलं शक्र गदितेन पुनः पुनः ।
निश्चयेन स्मरवाऽहं ते भवाम्यसुरसूदन ॥ ४४ ॥
अथोवाच महादेवपुत्रं[2] संवीक्ष्य निःस्पृहम् ।
नेष्टं त्वयाऽपि हीन्द्रत्वं भव सेनापतिर्गुह ॥ ४५ ॥
एवमस्त्विति तं प्राह कार्तिकेयः शचीपतिम् ।
ततः सर्वैः सुरैर्विप्रा आदेशात्परमेष्ठिनः ॥ ४६ ॥
अभिषिक्तो[3]ऽथ विधिना सेनापत्ये तदा गुहः ।
यावद्दत्तं कुमाराय सेनापत्यं हराज्ञया ॥ ४७ ॥
हन्तुमभ्यागतस्तूर्णं कुमारं तारकस्तदा ।
आगतं तं तदा वीक्ष्य लीलया पार्वतीसुतः ।
ददाहाऽऽशु महादैत्यं तूलं वह्निरिवाऽऽहवे ॥ ४८ ॥
दग्ध्वा तु तारकं घोरं पतङ्गमिव पावकः ।
ततः प्रीतमनाः स्कन्दो मातुरङ्कमुपाविशत् ॥ ४९ ॥
महादेवोऽपि भगवान्वेधादीन्विष्णुना सह ।
विसृज्य गणपैः सार्धं क्षणादन्तर्हितोऽभवत् ॥ ५० ॥ ३५६३ ॥

इति श्रीब्रह्मपुराणोपपुराणे श्रीसौरे सूतशौनकसंवादे नारदेन्द्रसंवादादिकथनं नाम त्रिषष्टितमोऽध्यायः ॥ ६३ ॥

**ऋषय ऊचुः**—कथितो भवता[4] सूत विवाहः परमेष्ठिनः ।
उत्पत्तिः कार्तिकेयस्य तस्य चैव पराक्रमः ॥ १ ॥

---

* खसंज्ञितपुस्तके स्वरूपैरित्यादि गुणकोटिभिरित्यन्तं शब्दजातं नास्ति ।

---

१ (क. झ.) °या सह ॥ ४३ ॥ २ (ख. ग.) °त्रं तं वी°। ३ (क. झ.) °क्तोऽपि विधिवत्सेना°। ४ (घ.) °ता नूनं वि°।

सेनापत्यं यथा दत्तं श्रुतं सर्वमशेषतः ।
भक्तियोगमथेदानीं वद सूत महामते ॥ २ ॥
तृप्तिर्नाद्याप्यभूद्यस्माच्छ्रुत्वा चैव पुनः पुनः ।
जानासि त्वं भगवतो माहात्म्यं त्रिपुरद्विषः ॥ ३ ॥
उपासितो यतः सम्यग्भगवान्बादरायणिः ।
तत्प्रसादात्त्वया लब्धं ज्ञानं तत्पारमेश्वरम् ॥ ४ ॥
दुर्लभं सर्वशास्त्रेषु मुनीनां च महात्मनाम् ॥ ५ ॥

**सूत उवाच**–यदुक्तं ब्रह्मणा पूर्वं नारदाय महात्मने ।
प्रीतेन मनसा तेन तच्छृणुध्वं द्विजोत्तमाः ॥ ६ ॥
सत्यलोके[1] सुखासीनं ब्रह्माणं तेजसां निधिम् ।
ऋषिभिर्मुनिभिः सिद्धैर्वेदैः साङ्गैरुपासितम् ॥ ७ ॥
संगीयमानं गन्धर्वैः स्तूयमानं मरुद्गणैः ।
दृष्ट्वा प्रणम्य विधिवन्नारदस्तमथाब्रवीत् ॥ ८ ॥

**नारद उवाच**–देवदेव जगन्नाथ चतुर्मुख सुरोत्तम ।
भक्तियोगस्य माहात्म्यं देवदेवस्य शूलिनः ॥ ९ ॥

**ब्रह्मोवाच**–प्रणम्य शंकरं शान्तमप्रमेयमनामयम् ।
परं ज्योतिरनाद्यन्तं निर्गुणं तमसः परम् ॥ १० ॥
भक्तियोगं प्रवक्ष्यामि शृणु नारद सुव्रत ।
भक्तियोगस्य माहात्म्यं यथा शंभोर्मया श्रुतम् ॥ ११ ॥
भक्तिर्भगवतः शंभोर्दुर्लभा खलु देहिनाम् ।
कथंचिद्यदि सा लब्धा तेषां नैवास्ति दुर्लभम् ॥ १२ ॥[2]
भक्त्यैव प्राप्यते राज्यमिन्द्रत्वं मत्पदं च यत् ।
विष्णुत्वमपि मुक्तिं च नूनं प्राप्नोति नारद ॥ १३ ॥
शुभानामशुभानां च कर्मणां राशिसंचयम् ।
करोति भस्मसाद्भक्तिर्भवस्याग्निर्यथेन्धनम्[3] ॥ १४ ॥
म्लेच्छोऽपि वा यदि भवेद्भवभक्तिसमन्वितः ।
न तत्समश्चतुर्वेदी नाग्निष्टोमादियज्ञकृत् ॥ १५ ॥
अपि पापानि घोराणि सदा कुर्वन्नरो यदि ।
लिप्यते नैव पापैस्तु भक्तो भवति चेच्छिवे ॥ १६ ॥

---

१ (क. घ. झ.) ०के समासी०। २ (घ. ङ. च. छ. ज.) ०र्लभा ॥ १२ ॥ ३ (ख. ग.) ०ग्निरिवेधन०।

शिवभक्ता महात्मानो मुच्यन्ते ते न संशयः ।
अपि दुष्कृतकर्माणः प्रसादाच्छूलिनो मुने ॥ १७ ॥
सकृत्पूजयते यस्तु भगवन्तमुमापतिम् ।
अप्यश्वमेधादधिकं फलं भवति नारद ॥ १८ ॥
जीवितं चञ्चलं ज्ञात्वा पद्मपत्र इवोदकम् ।
मृतेर्दुरन्तान्नरकांस्ततः कुर्याच्छिवे मतिम् ॥ १९ ॥
शिवे मतिं प्रकुर्वाणः संसारादतिभीषणात् ।
मुच्यते मुनिशार्दूल मतिः शर्वेऽतिदुर्लभा ॥ २० ॥
भवव्यालमुखस्थानां भीरूणां देहिनां मुने ।
तस्माद्विमोचकस्तेषां महादेव इति श्रुतिः ॥ २१ ॥
भक्तिः शिवे यदि भवेन्न[1] कस्मात्कस्यचिद्भयम् ।
भवार्णवं तरत्येव प्रसादात्परमेष्ठिनः ॥ २२ ॥
स्वर्गार्थिनां मुमुक्षूणां ब्रह्मत्वमपि काङ्क्षिणाम् ।
भक्तिरेव विरूपाक्षे नान्यः पन्था इति श्रुतिः ॥ २३ ॥
आदिमध्यान्तरहिते पिनाकिनि जगत्पतौ ।
सदा मनीषिभिः कार्या भक्तिरेव हि नारद ॥ २४ ॥
सर्वमन्यत्परित्यज्य भक्तो भव हरे मुने ।
मुक्तो भविष्यसि क्षिप्रं तस्य शंभोरनुग्रहात् ॥ २५ ॥
यस्य प्रसादलेशेन ब्रह्मत्वं प्राप्तवानहम् ।
विष्णुत्वमपि विष्णुश्च स शिवः कैर्न सेव्यते ॥ २६ ॥
शिवे दानं शिवे होमः शिवे स्नानं शिवे जपः ।
अक्षयानि फलान्येषामित्याह भगवाञ्शिवः ॥ २७ ॥
कुरुक्षेत्रे निवसतां यत्फलं नैमिषे[3] तथा ।
प्रयागे च प्रभासे च गङ्गासागरसंगमे ॥ २८ ॥
रुद्रकोट्यां गयायां च शालिग्रामेऽमरेश्वरे ।
पुष्करे भारभूतेशे गोकर्णे मण्डलेश्वरे ॥ २९ ॥
तत्फलं दिवसेनैव भक्त्या भर्गार्चनाद्भवेत् ।
नास्ति लिङ्गार्चनात्पुण्यमधिकं भुवनत्रये ॥ ३० ॥

---

१ (घ. ङ. च. छ.) ०न्न तस्य कस्य । २ (क. ख. ग. ज. झ.) ०ञ्चान्भवः ॥ २७ ॥
३ (घ. ङ. च. छ. ज.) ०षे यथा ।

लिङ्गेऽर्चितेऽखिलं विश्वमर्चितं स्यान्न संशयः।
मायया मोहितात्मानो न जानन्ति महेश्वरम् ॥ ३१ ॥
अनुग्रहाद्भगवतो जानन्त्येव हि नारद।
यः पूजितं शिवं दृष्ट्वा प्रणमेद्भक्तिभावतः ॥ ३२ ॥
पुण्डरीकस्य यज्ञस्य फलं भवति निश्चितम्।
*ये पुनः शान्तमनसः शिवभक्ता जितेन्द्रियाः ॥ ३३ ॥
मर्त्यस्य वदनं तेऽपि नैव पश्यन्ति नारद।
पृथिव्यां यानि तीर्थानि पुण्यान्यायतनानि च ॥ ३४ ॥
शिवलिङ्गे वसन्त्येव तानि सर्वाणि नारद।
तस्माल्लिङ्गं सदा पूज्यं भक्तिभावेन नित्यशः ॥ ३५ ॥
स स्नातः सर्वतीर्थेषु सर्वस्मादधिकश्च सः।
यस्तु लिङ्गार्चनं त्यक्त्वा देवानन्यांश्च पूजयेत् ॥ ३६ ॥
रत्नं विहाय मूढात्मा यथा काचमपेक्षते।
चतुर्दश्यामथाष्टम्यां पौर्णमास्यां तथैव च ॥ ३७ ॥
अमावास्यां त्रयोदश्यां पूजयेदिन्दुशेखरम्।
स स्नातः सर्वतीर्थेषु सर्वयज्ञेषु दीक्षितः ॥ ३८ ॥
शिवलोकमवाप्नोति देहान्ते दुर्लभं मुने।
शिवार्चनरतो नित्यं महापातकसंभवैः ॥ ३९ ॥
दोषैः कृतैर्न लिप्येत पद्मपत्रमिवाम्भसा।
दर्शनाच्छिवभक्तानां सकृत्संभाषणादपि ॥ ४० ॥
अतिरात्रस्य यज्ञस्य फलं भवति नारद।
ब्राह्मणः क्षत्रियो वैश्यः शूद्रो वाऽन्त्यजजातिजः ॥ ४१ ॥
शिवभक्तः सदा पूज्यः सर्वावस्थां गतोऽपि वा।
नास्याऽऽचारं[3] परीक्षेत न कुलं न व्रतं तथा ॥ ४२ ॥
त्रिपुण्ड्राङ्कितभालेन पूज्य एव हि नारद।
कर्मणा मनसा वाचा यस्तु भक्तान्विनिन्दति ॥ ४३ ॥
निरयान्निष्कृतिर्नास्ति तस्य मूढात्मनो मुने।
शिवभक्तान्वर्जयित्वा सर्वेषां शासको यमः ॥ ४४ ॥

---

* खगघङचछजसंज्ञितेष्वादर्शपुस्तकेषु ये पुनरित्यादिर्नारदेत्यन्तः श्लोको नास्ति।

---

१ (क. ख. ग. ज. झ.) ०र्दश्यां तथा०। २ (घ. ङ. च. छ. ज.) ०स्यां च यो भक्त्या पू०। ३ (घ. ङ. च. छ. ज.) ०रं प्रतीक्षे०।

यः पुनः शिवभक्तानां शिव एव न चापरः ।
न शिवाश्रेयिणो मौञ्जी न दण्डो न च कुण्डले ॥ ४५ ॥
नैव काषायवासांसि भक्तिरेवात्र कारणम् ।
यदि भक्ताः पशुपतौ पापकर्मसु ये रताः ॥ ४६ ॥
यमस्य वदनं तेऽपि नैव पश्यन्ति नारद ।
ये पुनः शान्तमनसः शिवभक्ता जितेन्द्रियाः ॥ ४७ ॥
मर्त्यधर्मं समासाद्य विज्ञेयास्ते गणेश्वराः ।
मृतस्य जीवतो वाऽपि शिवभक्तस्य नारद ॥ ४८ ॥
यमाद्भयं न तस्यास्ति राज्ञश्चैव तु का कथा ।
आश्चर्यं कथयिष्यामि शृणु नारद यत्पुरा ॥ ४९ ॥
उज्जयिन्यां नृपो ह्यासीन्नाम्ना सत्यध्वजो मुने ।
धर्मात्मा सत्यसंकल्पः प्रजापालनतत्परः ॥ ५० ॥
भुक्त्वा समस्तामवनिं कालेनाथ दिवं गतः ।
वसुश्रुत इति ख्यातः पुत्रस्तस्य महात्मनः ॥ ५१ ॥
महाकालार्चनरतस्तन्निष्ठस्तत्परायणः ।
न धर्मेण प्रजाः शास्ति राजधर्मबहिष्कृतः ॥ ५२ ॥
असाधून्संपरित्यज्य साधून्वै हन्त्यसौ नृपः ।
प्रजानां कुशलं नास्ति सर्वत्र परिपन्थिनः ॥ ५३ ॥
यज्ञांश्च यज्वनां दृष्ट्वा म्लेच्छा विध्वंसयन्ति तान् ।
गते वर्षसहस्रे तु राज्ये तस्मिन्वसुश्रुते ॥ ५४ ॥
मृत्युकालोऽथ संप्राप्तो देहिनामतिभीषणः ।
पापिष्ठ इति तं मत्वा संप्राप्ता यमकिंकराः ॥ ५५ ॥
शिवभक्त इति प्राप्तास्त्रिनेत्राः शूलधारिणः ।
शिवदूतैः समानीतं विमानं सार्वकामिकम् ॥ ५६ ॥
यमदूतास्त्वतिक्रूराः पाशदण्डासिपाणयः ।
आहर्तुमुद्यताः सर्वे नृपं तं यमकिंकराः ॥ ५७ ॥
गणेश्वरास्ततः क्रुद्धा दृष्ट्वा तान्यमकिंकरान् ।
त्रिशूलैर्मुद्गरैश्चक्रैर्गदाभिर्मुसलैस्तथा ॥ ५८ ॥
ताडयित्वा भृशं दूतान्यमशासनपालकान् ।
नीतः शिवपुरं दिव्यं पुनरावृत्तिदुर्लभम् ॥ ५९ ॥

१ (घ. ङ. ज.) °श्रमिणो । २ (ख. ग. घ. ज.) °ज्वनो द°।

अथ ते किंकराः सर्वे यमं गत्वेदमब्रुवन्।
**किंकरा ऊचुः**–शृणु धर्म यथा वृत्तमीश्वरस्य गणेश्वरैः॥
सर्वानस्मांस्ताडयित्वा नीतः पापो वसुश्रुतः॥ ६० ॥
न यज्ञैर्यजते देवान्न विप्रान्नातिथीनपि।
न धर्मेण प्रजाः पाति कथं शिवपुरं गतः॥ ६१ ॥
तत्त्वं धर्म विजानासि धर्मदण्डधरो भवान्।
तस्माद्ब्रवीहि(?) भगवंस्तवाऽऽज्ञाकारिणो वयम्॥ ६२ ॥
एवं तेषां वचः श्रुत्वा धर्मराट् सूर्यनन्दनः।
वचः प्रोवाच गम्भीरं किंकरान्प्रति नारद॥ ६३ ॥
**यम उवाच**–देवासुरमनुष्याणां सर्वेषां प्राणिनामपि।
शास्ताऽहं नास्ति संदेहः शिवभक्तमृते किल॥ ६४ ॥
माहात्म्यं शिवभक्तानां को वा विन्दति तत्त्वतः।
तेषां नियन्ता भगवान्महादेवो न चापरः॥ ६५ ॥
शिवभक्ता महात्मानः सदा शर्वार्चने रताः।
अप्याश्रमाचारहीनांस्त्यजध्वं तान्प्रयत्नतः॥ ६६ ॥
वर्णाश्रमाणामाचारा अपि तेन विवर्जिताः।
शंकरे यदि भक्तः स्यान्न शास्यः पूज्य एव हि॥ ६७ ॥
भवद्भिः परिहर्तव्याः शिवभक्ताः प्रयत्नतः।
पापकर्मस्वपि रतास्तेषामेनो न विद्यते॥ ६८ ॥
बिभेमि शिवभक्तेभ्यः सिंहादिव यथा मृगाः।
श्वेतस्याऽऽहरणे पूर्वमहं देवेन घातितः॥ ६९ ॥
ततः प्रभृत्यहं शास्ता तद्भक्तानां न किंकराः।
योऽसौ वसुश्रुतो राजा न प्रजाः पालयन्यदि॥ ७० ॥
तथाऽपि शंकरे भक्तो मनोवाक्कायकर्मभिः।
प्रसादात्तस्य देवस्य पापं स्पृशति तं कथम्॥ ७१ ॥
सकृत्पश्यति यो देवं महाकालं त्रिलोचनम्।
सर्वपापविनिर्मुक्तो याति शैवं परं पदम्॥ ७२ ॥
यः सदाऽर्चयते देवं महाकालं तमीश्वरम्।
गणेश्वरः स मन्तव्यो भवद्भिरिति किंकराः॥ ७३ ॥

---

१ (घ. ज.) ०गवञ्ज्ञात्वाऽऽज्ञा०। २ (क. ख. ग. ज. झ.) इति ते०। ३ (क. ख. ग. झ.) नात्र सं०। ४ (ङ. च. छ.) भक्तिः स्या०। ५ (घ. ङ. च. छ.) ०षामन्तो न।

एवं यमस्य वचनं श्रुत्वा ते यमकिंकराः ।
तूष्णीमासाद्य ते सर्वे बभूवुर्विगतज्वराः ॥ ७४ ॥
तस्मात्पूज्यो महादेवस्तद्भक्तश्च विशेषतः ।
भक्तानां पूजनाच्छंभुः प्रीतो भवति नारद ॥ ७५ ॥
शिवस्य नित्यतृप्तस्य किं नाम क्रियते जनैः ।
यत्कृतं शिवभक्तानां तेन प्रीतो भवेच्छिवः ॥ ७६ ॥
देवान्सर्वान्परित्यज्य भज नारद शंकरम् ॥ ७७ ॥ ३६४० ॥

इति श्रीब्रह्मपुराणोपपुराणे श्रीसौरे सूतशौनकसंवादे ब्रह्मनारद-
संवादादिकथनं नाम चतुःषष्टितमोऽध्यायः ॥ ६४ ॥

**ब्रह्मोवाच**—पञ्चाक्षरेण मन्त्रेण पत्रं पुष्पमथापि वा ।
यः प्रयच्छति शर्वाय तदनन्तफलं सकृत् ॥ १ ॥
सप्तकोटिमहामन्त्राः शिववक्त्राद्विनिर्गताः ।
पञ्चाक्षरस्य मन्त्रस्य कलां नार्हन्ति षोडशीम् ॥ २ ॥
दीक्षितोऽदीक्षितो वाऽपि विधानादन्यथाऽपि वा ।
पञ्चाक्षरं जपेद्यस्तु शिवस्यानुचरो भवेत् ॥ ३ ॥
अपि कृत्वा भ्रूणहत्यां पापानि सुबहून्यपि ।
पञ्चाक्षरजपात्सद्यो मुच्यते नात्र संशयः ॥ ४ ॥
न हि पञ्चाक्षरजपाच्छ्रेयोऽस्ति भुवनत्रये ।
एवं ज्ञात्वा जपेद्विद्वान्विद्यां पञ्चाक्षरीं शुभाम् ॥ ५ ॥
पञ्चाक्षरेण मन्त्रेण बिल्वपत्रैः शिवार्चनम् ।
करोति श्रद्धया यस्तु स गच्छेदैश्वरं पदम् ॥ ६ ॥
दर्शनाद्बिल्ववृक्षस्य स्पर्शनाद्वन्दनादपि ।
अहोरात्रकृतं पापं नश्यते ऋषिसत्तम ॥ ७ ॥
अन्तकाले नरो यस्तु बिल्वमूलस्य मृत्तिकाम् ।
आलिम्पेत्सर्वगात्राणि मृतो याति परां गतिम् ॥ ८ ॥
बिल्ववृक्षं समाश्रित्य द्वादशाहमभोजनम् ।
यः कुर्याद्भ्रूणहा पापान्मुक्तो भवति नारद ॥ ९ ॥
बिल्ववृक्षं समाश्रित्य त्रिरात्रोपोषितः शुचिः ।
हरनाम जपल्लँक्षं भ्रूणहत्यां व्यपोहति ॥ १० ॥

---

१ (क. ख. ग. ज. झ.) ०श्यत्येव हि नारद ॥ ७ ॥ २ (क. ख. ग. झ.) ०लिप्य सर्व०
३ (ख. ग.) जपेल्लक्षं ।

*मातृहा पितृहा वाऽपि युक्तो वा सर्वपातकैः।
माघे कृष्णचतुर्दश्यां पूजयेदिन्दुशेखरम् ॥ ११ ॥
भक्त्या बिल्वदलैर्मौनी हरनाम जपन्निशि।
सर्वपापविनिर्मुक्तो याति शैवं परं पदम् ॥ १२ ॥
शुष्कैः पर्युषितैः पत्रैरपि बिल्वस्य नारद।
पूजयेद्गिरिजानाथं मुच्यते सर्वपातकैः ॥ १३ ॥
अर्घ्यं पुष्पफलोपेतं यः शिवाय निवेदयेत्।
युगानामयुतं साग्रं शिवलोके वसेन्नरः ॥ १४ ॥
आपः क्षीरं कुशाग्राणि सघृतं दधि तण्डुलाः।
तिलैश्च सर्षपैः सार्धमर्घ्योऽष्टाङ्ग इति स्मृतः ॥ १५ ॥
पलकोटिं सुवर्णस्य यो दद्याद्वेदपारगे।
शिवाय[1] रक्तिकामात्रं प्रदत्त्वा(?) वाऽधिकं भवेत् ॥ १६ ॥
तस्मात्पत्रैः फलैः पुष्पैस्तोयैरपि यजेच्छिवम्।
तदनन्तफलं प्रोक्तं भक्तिरेवात्र कारणम् ॥ १७ ॥
लिङ्गस्य लेपनं कुर्याद्दिव्यैर्गन्धैर्मनोरमैः।
वर्षकोटिशतं दिव्यं शिवलोके महीयते ॥ १८ ॥
सुगन्धालेपनात्पुण्यं द्विगुणं चन्दनस्य तु।
चन्दनाच्चा[2]गरोर्ज्ञेयं पुण्यमष्टगुणाधिकम् ॥ १९ ॥
कृष्णा[3][4]गरोर्विशेषेण द्विगुणं फलमिष्यते।
तस्माच्छतगुणं पुण्यं कुङ्कुमस्य विधीयते ॥ २० ॥
चन्दना[5]गरुकर्पूरैर्नाभिरोचनकुङ्कुमैः।
लिङ्गमेतैः समालिप्य गाणपत्यमवाप्नुयात् ॥ २१ ॥
संवीज्य तालवृन्तेन लिङ्गं गन्धैः सुलेपितम्।
दशवर्षसहस्राणि शिवलोके महीयते ॥ २२ ॥
मयूरव्यजनं दद्याच्छिवायातीव शोभनम्।
वर्षकोटिशतं दिव्यं शिवलोके महीयते ॥ २३ ॥

* मातृहेत्यादिश्लोकस्थाने कखगझसंज्ञितपुस्तकेषु किंचिद्भिन्नं श्लोकार्धमेव दृश्यते। तद्यथा—बिल्वपत्रैरखण्डैश्च पूजयेदिन्दुशेखरम्—इति।

1 (क. झ.) ०य भक्तिमात्रं च प्रधानमधिकं फलम् ॥ १६ ॥ 2 (क. ख. ग. झ.) ०कस्याऽऽले०। 3 (घ. ङ. च. छ. ज.) ०च्चागुरो०। 4 (घ. ङ. च. छ. ज.) ०ष्णागुरो०। 5 (घ. ङ. छ. ज.) ०नागुरु०।

चामरं यः शिवे दद्यान्मणिरत्नविभूषितम् ।
हेमरूप्यादिदण्डं वा तस्य पुण्यफलं शृणु ॥ २४ ॥
चामरासक्तहस्ताभिर्दिव्यस्त्रीपरिवारितः ।
विमानं वरमारुह्य गणैर्याति शिवं पदम् ॥ २५ ॥
अरण्यसंभवैः पुष्पैः पत्रैर्वा गिरिसंभवैः ।
अपर्युषितनिश्छिद्रैररक्तैर्जन्तुवर्जितैः ॥ २६ ॥
आत्मारामोद्भवैर्वाऽपि पुष्पैः संपूजयेच्छिवम् ।
पुष्पजातिविशेषेण भवेत्पुण्यमथोत्तरम् ॥ २७ ॥
तपःशीलगुणाढ्याय वेदवेदाङ्गगामिने ।
दश दत्वा सुवर्णस्य फलं हि तदवाप्नुयात् ॥ २८ ॥
अर्कपुष्पैः कृता पूजा यदि देवाय शंभवे ।
अर्कपुष्पसहस्रेभ्यः करवीरं प्रशस्यते ॥ २९ ॥
करवीरसहस्रेभ्यो बिल्वपत्रं विशिष्यते ।
बिल्वपत्रसहस्रेभ्यः शमीपत्रं विशिष्यते ॥ ३० ॥
अर्कपुष्पसहस्रेभ्यः शमीपुष्पं विशिष्यते ।
शमीपुष्पसहस्रेभ्यः कुशपुष्पं विशिष्यते ॥ ३१ ॥
कुशपुष्पसहस्रेभ्यः पद्मपुष्पं विशिष्यते ।
पद्मपुष्पसहस्रेभ्यो बकपुष्पं विशिष्यते ॥ ३२ ॥
बकपुष्पसहस्रेभ्य एकं धत्तूरकं तथा ।
धत्तूरकसहस्रेभ्यो बृहत्पुष्पं विशिष्यते ॥ ३३ ॥
बृहत्पुष्पसहस्रेभ्यो द्रोणपुष्पं विशिष्यते ।
द्रोणपुष्पसहस्रेभ्यः अपामार्गं विशिष्यते ॥ ३४ ॥
अपामार्गसहस्रेभ्यः श्रीमन्नीलोत्पलं वरम् ।
नीलोत्पलसहस्रेण यो मालां संप्रयच्छति ॥ ३५ ॥
शिवाय विधिवद्भक्त्या तस्य पुण्यफलं शृणु ।
कल्पकोटिसहस्राणि कल्पकोटिशतानि च ॥ ३६ ॥
वसेच्छिवपुरे श्रीमाञ्शिवतुल्यपराक्रमः ।
करवीरसमा ज्ञेया जाती विजयपाटला ॥ ३७ ॥

---

१ (क. ख. ग. झ.) ०मानमारुह्य गणैर्याति माहेश्वरं प०। २ (क. ख. ग. झ.) ०लं भवेत्। नी०। ३ (क. ख. ग. झ.) ०स्रेभ्यो यो ।

श्वेतमन्दारकुसुमं[1] सितपद्मं च तत्समम् ।
नागचम्पकपुंनागा धत्तूरकसमाः स्मृताः ॥ ३८ ॥
बन्धूकं केतकीपुष्पं कुन्दयूथीमदन्तिकाः ।
शिरीषं चार्जुनं पुष्पं प्रयत्नेन विवर्जयेत् ॥ ३९ ॥
कनकानि कदम्बानि रात्रौ देयानि शंकरे ।
दिवा शेषाणि पुष्पाणि दिवा रात्रौ च मल्लिका ॥ ४० ॥
प्रहरं तिष्ठते जाती करवीरमहर्निशम् ।
केशकीटापविद्धानि शीर्णपर्युषितानि च ॥ ४१ ॥
स्वयं पतितपुष्पाणि त्यजेदुपहतानि च ।
मुकुलैर्नार्चयेदीशं यस्य कस्यापि नारद ॥ ४२ ॥
कलिकैर्नार्चयेद्देवं चम्पकैर्जलजैर्विना ।
न पर्युषितदोषोऽस्ति जलजोत्पलचम्पकैः ॥ ४३ ॥
पुष्पाणामप्यलाभे तु पत्राण्यपि निवेदयेत् ।
फलानामप्यलाभे तु तृणगुल्मौषधैरपि ॥ ४४ ॥
औषधानामभावे तु भक्त्या भवति पूजितः ।
बिल्वपत्रैरखण्डैस्तु सकृत्पूजयते शिवम् ॥ ४५ ॥
सर्वपापविनिर्मुक्तो रुद्रलोके महीयते ।
धत्तूरकैस्तु यो लिङ्गं सकृत्पूजयते नरः ॥ ४६ ॥
गोलक्षस्य फलं प्राप्य शिवलोके महीयते ।
बृहतीकुसुमैर्भक्त्या यो लिङ्गं सकृदर्चयेत् ॥ ४७ ॥
गवामयुतदानस्य फलं प्राप्य शिवं व्रजेत् ।
मल्लिकोत्पलपुष्पाणि नागपुंनागचम्पकैः ॥ ४८ ॥
अशोकश्वेतमन्दारकर्णिकारबकानि च ।
करवीरार्कमन्दारशमीतगरकेसरम् ॥ ४९ ॥
कुशापामार्गकुमुदकदम्बकुरवैरपि[2] ।
पुष्पैरेतैर्यथालाभं यो नरः पूजयेच्छिवम् ॥ ५० ॥
स यत्फलमवाप्नोति तदेकाग्रमनाः शृणु ।
सूर्यकोटिप्रतीकाशैर्विमानैः सार्वकामिकैः ॥ ५१ ॥
पुष्पमालापरिक्षिप्तैर्गीतवादित्रनिस्वनैः ।
तन्त्रीमधुरनादैश्च स्वच्छन्दगमनैस्तथा ॥ ५२ ॥

१ (क. ख.) मं श्वेत०। २ (घ.) ०न्दैश्च स०। ३ (घ. ङ. च. छ. ज.) ०रवकैर०।

रुद्रकन्यासमाकीर्णैः समन्तादुपशोभितैः ।
दोधूयमानश्चमरैः शिवलोके महीयते ॥ ५३ ॥
अनेकाकारविन्यासैः कुसुमैश्च शिवं गृहम् ।
यः कुर्यात्पर्वकालेषु विचित्रकुसुमोज्ज्वलम् ॥ ५४ ॥
स पुष्पकविमानेन सहस्रपरिवारितः ।
दिव्यस्त्रीसुखसौभाग्यक्रीडारतिसमन्वितः ॥ ५५ ॥
अक्षयाल्लँभते लोकानतिरस्कृतशासनः ।
शिवादिसर्वलोकेषु यत्रेष्टं तत्र याति सः ॥ ५६ ॥
पूजादिभक्तिविन्यासैरर्चनादिषु सर्वतः ।
फलमेकं समं ज्ञेयं फलं वित्तानुसारतः ॥ ५७ ॥
स्वयमुत्पाद्य पुष्पाणि यः स्वयं पूजयेच्छिवम् ।
तानि साक्षात्प्रगृह्णाति देवदेवो महेश्वरः ॥ ५८ ॥
कृष्णागरोः सकर्पूरधूपं दद्याच्छिवाय वै ।
नैरन्तर्येण मासार्धं तस्य पुण्यफलं शृणु ॥ ५९ ॥
कल्पकोटिसहस्राणि कल्पकोटिशतानि च ।
भुक्त्वा शिवपुरे भोगांस्तदन्ते पृथिवीपतिः ॥ ६० ॥
गुग्गुलं घृतसंयुक्तं साक्षाद्गृह्णाति शंकरः ।
मासार्धं धूपदानेन शिवलोके महीयते ॥ ६१ ॥
कृष्णपक्षे चतुर्दश्यां यः साज्यं गुग्गुलं दहेत् ।
स याति परमं स्थानं यत्र देवः पिनाकधृत् ॥ ६२ ॥
श्रीफलं चाऽऽज्यसंमिश्रं दत्वाऽऽप्नोति परां गतिम् ।
एभिः सुगन्धितो धूपः षट्सहस्रगुणोत्तरः ॥ ६३ ॥
यस्त्वर्कसंपुटे कृत्वा मधु चार्घस्य मन्त्रतः ।
निवेदयति शर्वाय सोऽश्वमेधफलं लभेत् ॥ ६४ ॥
शालितण्डुलप्रस्थेन कुर्यादन्नं सुसंस्कृतम् ।
शिवाय तच्चरुं दत्वा चतुर्दश्यां विशेषतः ॥ ६५ ॥
यावन्तस्तण्डुलास्तस्मिन्नैवेद्ये परिसंख्यया ।
तावद्वर्षसहस्राणि शिवलोके महीयते ॥ ६६ ॥

१ ( घ. ङ. च. छ. ज. ) °र्यादन्तकाले तु वि°। २ ( क. ख. ग. ज. झ. ) °खसंभोगाक्रि°। ३ ( क. झ. ) °मेव स°। ( ख. ग. ) मेवं स°। ४ ( क. ख. ग. घ. ) °गरुस°। ५ ( क. ख. ग. ज. झ. ) °स्ततस्यान्ते। ६ ( क. ख. ग. झ. ) °ट्साह°। ७ ( क. ख. ग. ज. झ. ) योऽर्कपत्रपुटे कृ°। ८ ( क. ख. ग. झ. ) °लिनां तण्डुलप्रस्थे कु°।

गुडखण्डघृतानां च भक्ष्याणां च निवेदनात्।
घृतेन पाचितानां तु दत्वा शतगुणं[1] भवेत् ॥ ६७ ॥
घृतदीपप्रदानेन[2] शिवाय शतयोजनम्।
विमानं लभते दिव्यं सूर्यकोटिसमप्रभम् ॥ ६८ ॥
यः कुर्यात्कार्तिके मासि शोभनां दीपमालिकाम्।
घृतेन च चतुर्दश्याममावास्यां विशेषतः ॥ ६९ ॥
सूर्यायुतप्रतीकाशस्तेजसा भासयन्दिशः।
तेजोराशिर्विमानस्थः सूर्यवद्द्योतते सदा ॥ ७० ॥
शिरसा धारयेद्दीपं सर्वरात्र्यां[3]* विशेषतः।
ललाटे वाऽथ हस्ताभ्यां शिरसा वाऽथ नारद ॥ ७१ ॥
सूर्यायुतप्रतीकाशैर्विमानैः सार्वकामिकैः।
कल्पायुतशतं[4] दिव्यं शिवलोके महीयते ॥ ७२ ॥
शिवस्य पुरतो दत्वा दर्पणं च सुनिर्मलम्[5]।
चन्द्रांशुनिर्मलः श्रीमान्सुभगः कामरूपधृत् ॥ ७३ ॥
कल्पायुतसहस्रं तु शिवलोके महीयते।
कृत्वा प्रदक्षिणं भक्त्या शिवस्याऽऽयतनं नरः ॥ ७४ ॥
अश्वमेधसहस्रस्य फलमाप्नोति नारद।
कूपारामप्रपाद्यैस्तु शिवायतनकर्मणि ॥ ७५ ॥
उपयुक्तानि भूतानि खननोत्पातनादिषु।
कामतोऽकामतो वाऽपि स्थावराणि चराणि च ॥ ७६ ॥
शिवं यान्ति न संदेहः प्रसादात्[6]परमेष्ठिनः।
क्रोशमात्रं शिवक्षेत्रं समन्तात्परमेष्ठिनः ॥ ७७ ॥
देहिनां तत्र पञ्चत्वं शिवसायुज्यकारणम्।
मनुष्यस्थापिते लिङ्गे क्षेत्रमानमिदं स्मृतम् ॥ ७८ ॥
स्वायंभुवे योजनं स्यादार्षे चैव तदर्धकम्।
पापाचारोऽपि यस्तत्र पञ्चत्वं याति नारद ॥ ७९ ॥

---

* अत्र शर्वरात्र्यामित्यपेक्षितमिति प्रतिभाति।

---

१ ( क. ख. ग. झ. ) ०णं फलम् ॥ ६७ ॥ २ ( घ. ङ. च. छ. ज. ) ०तप्रदीपदा०। ३ ( घ. ) सर्वां रात्रिं वि०। ४ ( घ. ङ. छ. ) ०तं पुण्यं शि०। ५ ( क. ख. ग. झ. ) ०णं तु सु०। ६ ( क. ख. ग. ज. झ. ) प्रभावात्प०।

सोऽपि याति शिवस्थानं वदेवैरपि दुर्लभम् ।
*तस्मात्सर्वप्रयत्नेन तत्र स्नानादिकं चरेत् ॥ ८० ॥
†तस्मादावसथं कुर्याच्छिवक्षेत्रसमीपतः ।
शिवलिङ्गसमीपस्थं यत्तोयं पुरतः स्थितम् ॥ ८१ ॥
शिवगङ्गेति संज्ञेयं तत्र स्नानादिना व्रजेत् ।
यः कुर्याद्दीर्घिकां वाऽपि कूपं वाऽपि शिवाश्रमे ॥
त्रिःसप्तकुलसंयुक्तः शिवलोके महीयते ॥ ८२ ॥ ३७२२ ॥

इति श्रीब्रह्मपुराणोपपुराणे श्रीसौरे सूतशौनकसंवादे पञ्चाक्षरमन्त्रप्रभावादिकथनं नाम पञ्चषष्टितमोऽध्यायः ॥ ६५ ॥

**ब्रह्मोवाच**—पुष्पं वा यदि वा पत्रं सकृल्लिङ्गे समर्पितम् ।
तदनन्तफलं प्रोक्तं हेतुर्भवति मुक्तये ॥ १ ॥
‡तुष्टे शिवे पदार्थः को दुर्लभो हि नृणां प्रभो ।
तस्मात्सर्वप्रयत्नेन शिवप्रीत्यर्थमाचरेत् ॥ २ ॥
यावद्दातुं शिवः शक्तस्तावच्चिन्तयितुं प्रभुः ।
तत्सर्वं न नरः सौख्यं शिवप्रीत्यर्थमाचरेत् ॥ ३ ॥
ऋद्धिसिद्धी न दूरस्थे शिवप्रीत्यर्थकर्मणाम् ।
नराणां नरनाथे किं प्रीते तु दुर्लभं भवेत् ॥ ४ ॥
विश्वेश्वरं सदा प्रेम्णा ये भजन्ति नरोत्तमाः ।
इह सौख्यं चिरं भुक्त्वा ह्यन्ते मोक्षमवाप्नुयुः ॥ ५ ॥
श्रीशंभुनाथं भुवि मानवा ये भजन्ति भक्त्या नरलोकवन्द्याः ।
भवन्ति ते हाटकपूर्णगेहा देहावसाने शिवलोकभाजः ॥ ६ ॥
ब्रह्महा वा सुरापो वा स्तेयी वा गुरुतल्पगः ।
योऽन्तकाले शिवं स्मर्याच्छिवसायुज्यमाप्नुयात् ॥ ७ ॥
निर्माल्यं धारयेद्भक्त्या शिरसा पार्वतीपतेः ।
राजसूयस्य यज्ञस्य फलमाप्नोत्यनुत्तमम् ॥ ८ ॥

* इदं श्लोकार्धं कखगघजझसंज्ञितपुस्तकेषु नास्ति ।
† ङछसंज्ञितयोः पुस्तकयोस्तस्मादित्यादिर्व्रजेदित्यन्तः सार्धः श्लोको नास्ति ।
‡ तुष्टे शिव इत्यादि शिवलोकभाज इत्यन्तं श्लोकपञ्चकं कखगघजझसंज्ञितपुस्तकेषु नास्ति ।

१ (घ.) °वालये । त्रिः°।

शिरसा शिवनिर्माल्यं भक्त्या यो धारयिष्यति ।
अशुचिर्भिन्नमर्यादः सर्वावस्थां गतोऽपि वा ॥ ९ ॥
स्वैरी चैवाप्रयुक्तात्मा नियमैश्च बहिष्कृतः ।
तस्य पापानि नश्यन्ति नात्र कार्या विचारणा ॥ १० ॥
मोहान्न धारयेच्छंभोर्निर्माल्यं न च भक्षयेत् ।
न स्पृशेदपि पादेन लङ्घयेन्नापि नारद ॥ ११ ॥
निर्माल्यलङ्घनाच्छंभोश्चाण्डालः सोऽभिजायते ।
पृथूदकं महत्तीर्थं गङ्गा च यमुना तथा ॥ १२ ॥
नर्मदा सरयूः क्षिप्रा तथा गोदावरी नदी ।
सदा संनिहितास्त्वेवं शंभोः स्नानोदके मुने ॥ १३ ॥
शंभोः स्नानोदकं सेव्यं सर्वतीर्थमयं हि तत् ।
धारणात्पापसंघातैस्तत्क्षणादेव मुच्यते ॥ १४ ॥
लिङ्गे स्वायंभुवे बाणे रत्नजे रसनिर्मिते ।
सिद्धप्रतिष्ठिते लिङ्गे न चण्डोऽधिकृतो भवेत् ॥ १५ ॥
पादोदकं च निर्माल्यं भक्तैर्धार्यं प्रयत्नतः ।
न तान्स्पृशन्ति पापानि मनोवाक्कायजान्यपि ॥ १६ ॥
**नारद उवाच**–किं लिङ्गं प्रोच्यते तात केन वा तदधिष्ठितम् ।
भगवन्ब्रूहि मे सर्वमाश्चर्यं ह्येतदुत्तमम् ॥ १७ ॥
**ब्रह्मोवाच**–अव्यक्तं लिङ्गमित्युक्तमानन्दं तमसः परम् ।
महादेवस्य यत्नेन लिङ्गी स्यात्तेन शंकरः ॥ १८ ॥
एकार्णवे पुरा घोरे नष्टे स्थावरजङ्गमे ।
मम विष्णोः प्रबोधार्थमाविर्भूतं शिवात्मकम् ॥ १९ ॥
तदाप्रभृत्यहं विष्णुर्भक्त्या परमया मुदा ।
लिङ्गमूर्तिधरं शान्तं पूजयावो वृषध्वजम् ॥ २० ॥
**नारद उवाच**–लिङ्गं कथमभूत्पूर्वमानन्दमजरं ध्रुवम् ।
प्रबोधार्थं च युवयोर्वक्तुमर्हसि पद्मज ॥ २१ ॥

---

१ ( क. ख. ग. झ. ) ०नि रौद्राणि नाशयत्येव शंकरः ॥ १० ॥ २ ( क. ख. ग. झ. ) लोभान्न । ३ ( घ. ) महातीर्थे । ४ ( ख. ग. घ. ) ०यूः शिप्रा ( छ. ज. ) ०यूः सिप्रा । ५ ( घ. ङ. च. छ. ज. ) ०दकान्मुने । ६ ( क. ख. ) ०त्युक्तं सान०। ७ ( क. ख. ग. झ. ) ०ष्टे च सचराचरे । म०। ८ ( घ. ) ०मे । विष्णोः प्रबोधनार्थाय चावि०। ९ ( क. ख. ग. झ. ) ०धार्थं प्रादुर्भू०। १० ( क. ख. ग. झ. ) ०त्मजम् ॥ १९ ॥

**ब्रह्मोवाच**–आसीदेकार्णवे घोरे निर्विभागे तमोमये ।
शेते च भगवान्विष्णुस्तप्तजाम्बूनदप्रभः ॥ २२ ॥
तत्समीपमहं गत्वा संरम्भादिदमुक्तवान् ।
कस्त्वं किमर्थं वा शेषे शीघ्रमुत्तिष्ठ दुर्मते ॥ २३ ॥
कुरु युद्धं मया सार्धमहमेव जगत्पतिः ।
अथ वा भज मां देवं त्रैलोक्यस्याभयप्रदम् ॥ २४ ॥
एवं मद्वचनं श्रुत्वा प्रहसन्मधुसूदनः ।
मामब्रवीदमेयात्मा कथं गर्वायसे मुधा ॥ २५ ॥
कर्ताऽहं सर्वलोकानां पालकोऽहं न संशयः ।
संहर्ताऽहं पुनश्चान्ते नान्योऽस्ति सदृशो मया ॥ २६ ॥
एवं विवादे संजाते मम देवेन शार्ङ्गिणा ।
प्रादुर्भूतं तदा लिङ्गमावयोर्दर्पहारि तत् ॥ २७ ॥
कालाग्निप्रयुतप्रख्यं ज्वालमालासमाकुलम् ।
आदिमध्यान्तरहितं क्षयवृद्धिविवर्जितम् ॥ २८ ॥
तस्मिँल्लिङ्गे महादेवः स्वयंज्योतिः सनातनः ।
सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ॥ २९ ॥
अर्धनारीश्वरोऽनन्तस्तेजोराशिर्दुरासदः ।
ज्येष्ठत्वं युवयोस्तावदास्तां किंचिद्ब्रवीम्यहम् ॥ ३० ॥
मूलं ममास्य लिङ्गस्य यदि पश्यति माधवः ।
नूनं भविष्यति ज्येष्ठ इति देवेन भाषितम् ॥ ३१ ॥
मूर्धानमस्य लिङ्गस्य यदि पश्यति पद्मजः ।
भविष्यति ततो ज्येष्ठ इति देवेन भाषितम् ॥ ३२ ॥
एवं शंभोर्निगदितमुररीकृत्य नारद ।
गतोऽस्मि मस्तकं द्रष्टुं तस्य लिङ्गस्य पुत्रक ॥ ३३ ॥
आवयोर्वर्षसाहस्रं गच्छतोर्मोहितात्मनोः ।
गतं देवऋषे नूनं विस्मयाविष्टचित्तयोः ॥ ३४ ॥

१ (ख. ग.) ०र्थं रे शे०। २ (घ. ङ. छ.) पालको० । ३ (ख. ग. ज.) इत्यावामब्रवीच्छिवः ॥ ३१ ॥ ४ (ङ. ज.) ०श्यसि पद्मज । भविष्यसि त०। ५ (क. ख. ग. झ.) ०स्य नारद ॥ ३३ ॥ ६ (क. ख. ग. झ.) ०योर्युगसा०। ७ (ङ. छ. ज.) ०र्षसह०। ८ (क. ख. ग. झ.) ०ष्टचेतसोः ॥ ३४ ॥

हरिर्मूलमदृष्ट्वैव तं [1]देवं पुनरागतः ।
यथा हरिस्तथैवाहमागतो वै मुने तदा ॥ ३५ ॥
तमेव शरणं गत्वा संस्तूय विविधैस्तवैः ।
प्रीतो भूत्वा महादेवो वाक्यमेतदुवाच ह ॥ ३६ ॥

**ईश्वर उवाच**–मत्प्रसादेन सर्वस्मादधिको भव माधव ।
मद्भक्तानां त्वमेवाग्र्यः पूज्यो मान्यस्त्वमेव हि ॥ ३७ ॥
लिङ्गे मां पूजय हरे लिङ्गमूर्तिधरो ह्यहम् ।
अत ऊर्ध्वं न संदेहः सर्वे चान्ये दिवौकसः ॥ ३८ ॥
लिङ्गाराधनतः क्षिप्रमज्ञानं नाशयाम्यहम् ।
लिङ्गार्चनरतानां च नास्ति संसारजं भयम् ॥ ३९ ॥
एवं हरेर्वरं दत्वा मामुवाच महेश्वरः ।
विरञ्चे तव दास्यामि गृहाण वरमुत्तमम् ॥ ४० ॥
चराचरस्य जगतो मान्यो भव पितामह ।
गृहाण चतुरो वेदांश्चतुर्भिर्वदनैर्विधे ॥ ४१ ॥
इत्यावाभ्यां वरं दत्वा देवदेवः पिनाकधृत् ।
विश्वेश्वरः स्वयंज्योतिः क्षणादन्तर्हितोऽभवत्[2] ॥ ४२ ॥
ततः प्रभृति विष्ण्वाद्या देवा दैत्याश्च दानवाः ।
गन्धर्वा मुनयः सिद्धा यक्षा नागाश्च किंनराः ॥ ४३ ॥
संपूज्य परमं लिङ्गं परां सिद्धिं गता मुने ।
नास्ति लिङ्गार्चनादन्यच्छ्रेयो[3]ऽस्मिन्भुवनत्रये ॥ ४४ ॥
ज्ञात्वा त्वमेवं देवर्षे लिङ्गार्चनरतो भव ।
क्षेत्रेषु चैव तीर्थेषु वनेषूपवनेषु च ॥ ४५ ॥
यानि लिङ्गानि दिव्यानि स्थापितानि सुरासुरैः ।
द्रष्टव्यानि बुधैस्तानि श्रद्धयैव हि नारद ॥ ४६ ॥
मुक्तिभाजो भवन्त्येवं [4]तेऽपि शंभोरनुग्रहात् ॥ ४७ ॥

**नारद उवाच**–कानि स्थानानि दिव्यानि येषु संनिहितः शिवः ।
आचक्ष्व तानि मे ब्रह्मन्माहात्म्यं चापि कृत्स्नशः ॥ ४८ ॥

**ब्रह्मोवाच**–माहात्म्यं दिव्यलिङ्गानां तीर्थानामपि नारद ।
अत्र ते कथयिष्यामि श्रूयतामघशासनम् ॥ ४९ ॥

---

१ ( क. ख. ग. झ. ) ०देशं पू०। २ ( क. ख. ग. झ. ) ०तोऽस्मि मु०। ३ ( ख. ग. ) ०यो ऽस्ति भु०। ४ ( क. ख. ग. झ. ) ते च शं०।

या सा शैवी परा मूर्तिः शिवभक्त्या ह्यपां पतिः ।
नारायणः स्वयं साक्षादहं चान्याश्च देवताः ॥ ५० ॥
वसन्ति सागरे नूनं तीर्थराजेति स स्मृतः ।
जम्बूद्वीपं महापुण्यं तत्रापि लवणोदधिः ॥ ५१ ॥
अहोरात्रकृतं पापं दर्शनादेव नश्यति ।
स्पृष्ट्वा त्रिरात्रकं पापं नाशयत्येव सागरः ॥ ५२ ॥
सप्तरात्रकृतं पापं प्रोक्षणादेव नश्यति ।
पानेन पक्षजनितं स्नानात्पक्षद्वयस्य च ॥ ५३ ॥
ऋतुद्वये तथाऽष्टम्यां पर्वस्नानं च वार्षिकम् ।
भानावनुदिते नित्यं यः स्नाति लवणोदधौ ॥ ५४ ॥
कपिलायाः फलं तस्य दत्तायाः श्रोत्रिये ध्रुवम् ।
उपोष्य रजनीमेकां रविसंक्रमणं प्रति ॥ ५५ ॥
स्नात्वा शतसुवर्णस्य दत्तस्य फलमाप्नुयात् ।
व्यतीपाते दिनच्छिद्रे अयने विषुवेषु च ॥ ५६ ॥
युगादौ च नरः स्नात्वा विधिवल्लवणोदधौ ।
गोसहस्रस्य दत्तस्य कुरुक्षेत्रे फलं हि यत् ॥ ५७ ॥
तत्फलं लभते मर्त्यो भूमिदानस्य च ध्रुवम् ।
दानानि यानि लोकेषु विख्यातानि मनीषिभिः ॥ ५८ ॥
तेषां फलमवाप्नोति ग्रहणे चन्द्रसूर्ययोः ।
वडवानलमुक्तोऽसौ पूतो भवति नारद ॥ ५९ ॥
अतोऽस्माद्धि परं नास्ति सुतीर्थमवनीतले ।
गङ्गा गोदावरी रेवा चन्द्रभागा च वेदिका ॥ ६० ॥
एतासां संगमो यत्र स्नानं कुर्यान्महोदधौ ।
यानि पापानि घोराणि भ्रूणहत्यादिकानि च ॥ ६१ ॥
नाशयन्ति क्षणादेव संगमस्य प्रभावतः ।
अश्वमेधसहस्रस्य फलं च भवति ध्रुवम् ॥ ६२ ॥
समुद्रतीरे परमं तेजोलिङ्गं दुरासदम् ।
यत्र सिद्धाः पुरा वत्स मुनयः सप्तकोटयः ॥ ६३ ॥
सप्तकोटीश्वरं नाम ततःप्रभृति नारद ।
तस्य लिङ्गस्य माहात्म्यं मया वक्तुं न शक्यते ॥ ६४ ॥
स्मरणादस्य लिङ्गस्य गोसहस्रफलं लभेत् ।
समुद्रे विधिवत्स्नात्वा सप्तकोटीश्वर शिवम् ॥ ६५ ॥

ये द्रक्ष्यन्ति महात्मानो मुक्तिभाजो भवन्ति ते ।
राजसूयस्य यज्ञस्य सहस्रगुणितं फलम् ॥ ६६ ॥
तथा गोमेधयज्ञस्य दर्शनात्तत्फलं त्विह ।
सप्तकोटीश्वरो देवो दृष्टश्चेद्भुवि मानवैः ॥ ६७ ॥
धन्यास्ते ये च लोकेऽस्मिंस्तेषां मुक्तिः करे स्थिता ।
तत्र स्नानं जपो होमो दानं च पितृतर्पणम् ॥ ६८ ॥
सर्वं तदक्षयं प्रोक्तं सप्तकोटीश्वरे शिवे ।
सप्तकोटीश्वरं प्राप्य कथं शोचन्ति जन्तवः ॥ ६९ ॥
सर्वानुग्राहको रुद्रस्तस्मिँल्लिङ्गे व्यवस्थितः ।
न तच्छैलमयं लिङ्गं न तद्धैमं न राजतम् ॥ ७० ॥
न तद्रत्नमयं लिङ्गं ज्ञातव्यमिति नारद ।
किं तज्ज्योतिर्मयं लिङ्गं शैवं पदमनामयम् ॥ ७१ ॥
सप्तकोटीश्वरं लिङ्गं प्राहुर्वेदविदो बुधाः ।
अहं नारायणो देवः शक्रश्चन्द्रो दिवाकरः ॥ ७२ ॥
मरुतो मुनयः सिद्धाः खेचरा भूचराश्च ये ।
अर्चयित्वा परं लिङ्गं सप्तकोटीश्वरं शिवम् ॥
प्राप्तवन्तः परां सिद्धिं तस्मिँल्लिङ्गे[2] च नारद ॥ ७३ ॥ ३७९९ ।

इति श्रीब्रह्मपुराणोपपुराणे श्रीसौरे सूतशौनकसंवादे शिवार्चन-
माहात्म्यादिकथनं नाम षट्षष्टितमोऽध्यायः ॥ ६६ ॥

**ब्रह्मोवाच**—उज्जयिन्यां महाकालं ये वै पश्यन्ति मानवाः ।
अवाप्नुयुः परं लोकं यत्र गत्वा न शोचति ॥ १ ॥
महाकालस्य लिङ्गस्य दिव्यलिङ्गं तदुच्यते[3] ।
स्पर्शनात्तस्य लिङ्गस्य सशरीराः शिवं ययुः ॥ २ ॥
तज्ज्ञात्वा च मया तत्र पाषाणः कुक्कुटाकृतिः ।
निक्षिप्तश्च महाकाले ततोऽभूत्कुक्कुटेश्वरः ॥ ३ ॥
तत्रैव नगरे रम्ये शूलेश्वर इति[4] स्मृतः ।
तस्य दर्शनमात्रेण हयमेधफलं लभेत् ॥ ४ ॥
शूलेश्वरस्य पूर्वे तु ॐकारं लिङ्गमुत्तमम् ।
तत्र कुण्डं महादिव्यं[5] पूरितं पुण्यवारिणा ॥ ५ ॥

---

१ (क. ख. ग. ङ.) ०केऽस्मिन्मुक्तिस्तेषां क०। २ (क. ख. ग. घ.) ०ङ्गे तु ना०
३ (घ.) ०ते। दर्श०। ४ (क. ख. ग. ङ.) ०ति श्रुतः। ५ (घ.) ०हापुण्यं पू०।

स्नानं समाचरंस्तत्र प्रयतात्मा समाहितः ।
द्वितीयेऽह्नि तृतीयेऽह्नि दशमे वाऽपि नारद ॥ ६ ॥
पक्षे मासेऽथ षण्मासे स्वप्ने पश्यति शंकरम् ।
दिव्यं ज्ञानमवाप्नोति देवानामपि दुर्लभम् ॥ ७ ॥
यः पश्येल्लिङ्गमोंकारं स्नात्वा कुण्डे समाहितः ।
दीक्षासहस्रस्य फलं प्राप्य याति परां गतिम् ॥ ८ ॥
तत्रैवागस्त्यमुनिना तपसाऽऽराधितः शिवः ।
प्रादुर्भूतश्च भगवानगस्त्येश्वरनामतः ॥ ९ ॥
प्रसिद्धो दर्शनात्तस्य ब्रह्महत्यां व्यपोहति ।
तत्रैव शक्तिभेदाख्यं तीर्थं मुनिनिषेवितम् ॥ १० ॥
तत्र स्नात्वा भद्रवटं यस्तु पश्यति मानवः ।
सर्वपापविनिर्मुक्तः स्कन्दलोके महीयते ॥ ११ ॥
तीर्थानि कोटिशः सन्ति उज्जयिन्यां समन्ततः ।
तेषां माहात्म्यमखिलं स्कान्दे स्कन्देन भाषितम् ॥ १२ ॥
कुरुक्षेत्रे[1] तु देवर्षे स्थाणुर्नाम महेश्वरः ।
तपस्तप्त्वा मया तत्र प्राप्तं ब्रह्मत्वमुत्तमम् ॥ १३ ॥
वालखिल्यादयस्[2]तत्र सिद्धिं प्राप्ताः परां[3] द्विजाः[4] ।
तत्राऽऽसीत्पुलहः पूर्वं मशकः स्थाणुमन्दिरे ॥ १४ ॥
मृतस्तु विविधान्भोगान्भुक्त्वा दिव्यमनोरथान् ।
तदन्ते मत्सुतो जातः स्थाणुमूढप्रभावतः ॥ १५ ॥
सर्वदेवमयो यत्र स्थाणुर्नाम महेश्वरः ।
इष्टः सकृच्च मनुजः शैवं पदमवाप्नुयात् ॥ १६ ॥
तीर्थराज इति ख्यातः प्रयागो मुनिसत्तमाः ।
गङ्गायमुनयोस्तत्र संगमो लोकविश्रुतः ॥ १७ ॥
तत्र स्नात्वा दिवं गत्वा भोगान्भुक्त्वा यथेप्सया ।
आस्ते महेश्वरो यत्र सर्वानुग्राहकः परः ॥ १८ ॥
दर्शनादक्षयाँल्लोकान्प्राप्नोति मनुजोत्तमः ।
अन्यतीर्थं परं गुह्यं गयातीर्थमिति[5] स्मृतम् ॥ १९ ॥
यत्र शंभोर्भगवतश्चरणौ सुप्रतिष्ठितौ ।
पितॄणामक्षया तृप्तिस्तत्र पिण्डप्रदानतः ॥ २० ॥

---

१ ( क. ख. ग. झ. ) °त्रे च दे°। २ ( क. ख. ग. झ. ) °दयो यत्र । ३ ( घ. ) °रां पुरा । ४ ( क. ख. ग. झ. ) °जाः । यत्रा°। ५ ( घ. ङ. च. छ. ज. ) मिदं स्मृ°।

महानद्यां नरः स्नात्वा रुद्रपादं स्पृशेद्यदि ।
शिवलोकमवाप्नोति पितृभिः सह मोदते ॥ २१ ॥
महाकालं महातीर्थं कालकालस्य वल्लभम् ।
तत्रापि देवदेवेन विन्यस्तश्चरणो भुवि ॥ २२ ॥
तत्र स्नात्वा तु मेधावी चरणं पार्वतीपतेः ।
यः पश्यति नरो भक्त्या शैवं पदमवाप्नुयात्* ॥२३॥ ३८१८॥

इति श्रीब्रह्मपुराणोपपुराणे श्रीसौरे सूतशौनकसंवादे महाकाल-
माहात्म्यकथनं नाम सप्तषष्टितमोऽध्यायः ॥ ६७ ॥

†प्रायः प्रान्तमुपोष्यं स्यात्तीर्थे देवफलेप्सुभिः ।
मूलं हि पितृतुष्ट्यर्थं पित्र्यं चोक्तं महर्षिभिः ॥ १ ॥
यां प्राप्यास्तमुपैत्यर्कः सा चेत्स्यात्त्रिमुहूर्तिका ।
‡धर्मकृत्येषु सर्वेषु संपूर्णां तां विदुस्तिथिम् ॥ २ ॥
अष्टम्येकादशी षष्ठी तृतीया च चतुर्दशी ।
कर्तव्या परसंयुक्ता अपरा पूर्वमिश्रिता ॥ ३ ॥
बृहत्तल्पा तथा रम्भा सावित्री वटपैतृकी ।
कृष्णाष्टमी[3] च सभृता कर्तव्या संमुखी तिथिः ॥ ४ ॥
लिङ्गे स्वायंभुवे बाणे रत्ने च रसनिर्मिते ।
सिद्धप्रतिष्ठिते लिङ्गे न चण्डस्याधिकारतः ॥ ५ ॥
बाणलिङ्गं स्वयं भूमिश्चन्द्रकान्तिस्तथैव च ।
चान्द्रायणसमं पुण्यं शंभोर्नैवेद्यभक्षणात् ॥ ६ ॥
वृषं चण्डं वृषं चैव सोमसूत्रं पुनर्वृषम् ।
चण्डं च सोमसूत्रं च पुनश्चण्डं पुनर्वृषम् ॥ ७ ॥
आरं च आरनालं च कांस्यपात्रं मसूरिका ।
चणकास्तिलतैलं च मन्त्रवीर्यहराणि षट् ॥ ८ ॥
वामपार्श्वे विनिक्षिप्य गृहीत्वा वामपाणिना ।
धृत्वा च दक्षिणे पाणौ तैले दद्याज्जलाञ्जलिम् ॥ ९ ॥

* कखगङसंज्ञितपुस्तकेष्वेतदध्यायसमाप्तिरत्र न विद्यते । किंतु हेतुना केन भगवानित्यादिरध्यायो योऽस्मिन्पुस्तक एकोनसप्ततितमाध्यायस्थाने संगृहीतः सोऽस्यैव शेषः ।

† कखगङसंज्ञितपुस्तकेष्वयमध्यायो नास्त्येव ।

‡ घसंज्ञितपुस्तक इदं श्लोकार्धं नास्ति ।

१ ( ङ. च. छ. ) ०देवस्य त्रि० । २ ( घ. ) ०त्री पितृपै० । ३ ( ङ. छ. ज. ) ०मी सभूता च क० ।

गुशब्दस्त्वन्धकारश्च रुशब्दस्तु निरोधकः ।
अन्धकारनिरोधत्वाद्गुरुशब्दो निगद्यते ॥ १० ॥
गुरुत्यागी लभेन्मृत्युं मन्त्रत्यागी दरिद्रतां ।
गुरुमन्त्रपरित्यागात्सिद्धोऽपि नरकं व्रजेत् ॥ ११ ॥
एकमर्घ्यं प्रदातव्यं मध्यान्हे भास्करं प्रति ।
उभयोः संध्ययोरापस्त्रिः क्षिपेदसुरक्षयात् ॥ १२ ॥
भ्रातृद्वयं न कुर्वीत न कर्तव्यं पितासुतम् ।
अनग्निकं न कर्तव्यं न कुर्याद्गर्भिणीपतिम् ॥ १३ ॥
निरग्निकः स्मृतस्तावद्यावद्भार्यां न विन्दति ।
साग्निको भार्यया युक्त इत्येवं मनुरब्रवीत् ॥ १४ ॥
प्रणाममेकहस्तेन एकं वाऽपि प्रदक्षिणम् ।
कालसेवा तथाऽकाले अब्दपुण्यं विनश्यति ॥ १५ ॥
सभायां यज्ञशालायां देवतायतने गुरौ ।
प्रत्येकं च नमस्कारं हन्ति पुण्यं पुराकृतम् ॥ १६ ॥
गोक्षीरं गोघृतं चैव मुद्गधान्यं तिला यवाः ।
एते चैवाक्षारगणा अन्ये क्षारगणाः स्मृताः ॥ १७ ॥
मक्षिका मशका वेश्या याचकाश्चैव मूषकाः ।
गणका ग्रामणीश्चैव सप्तैते परभक्षकाः ॥ १८ ॥ ३८३६ ॥

इति श्रीब्रह्मपुराणोपपुराणे श्रीसौरे सूतशौनकसंवादे तिथिनिर्णयादिकथनं नामाष्टषष्टितमोऽध्यायः* ॥ ६८ ॥

**नारद उवाच**-हेतुना केन भगवान्कालकालो महेश्वरः ।
श्रोतुमिच्छामि भगवन्ब्रूहि मे कमलोद्भव ॥ १ ॥
**ब्रह्मोवाच**-आसीन्मुनिवरः पूर्वं नाम्ना श्वेत इति स्मृतः ।
तीर्थोदकानि सेवेत यमांश्च नियमांस्तथा ॥ २ ॥
माहेश्वराग्रणीः शान्तो महादेवार्चने रतः ।
तं नेतुमागतः कालो दण्डहस्तो भयंकरः ॥ ३ ॥
दृष्ट्वा कालं स विप्रेन्द्रो भयव्याकुलितेन्द्रियः ।
स्पृष्ट्वा कराभ्यां तल्लिङ्गं ध्यायमानो महेश्वरम् ॥ ४ ॥
प्रहसन्नब्रवीत्कालः श्वेतं मुनिवरं मुने ।
प्राप्ते मयि कथं ब्रह्मन्स्वस्थास्तिष्ठन्ति जन्तवः ॥ ५ ॥

* झङचछसंज्ञितपुस्तकेष्वत्रैव पुराणस्य समाप्तिः । हेतुना केनेत्यादिरन्तिमोऽध्याय एतेषु केषु नास्त्येव ।

चरन्ति मद्भयात्सर्वे ब्रह्मचर्यं तपांसि च।
तीर्थं दानं प्रशंसन्ति निरताः स्वेषु कर्मसु॥ ६॥
यजन्ति मद्भयाद्देवान्यज्ञांश्च विविधांस्तथा।
तस्मादुत्तिष्ठ नेष्यामि मम पाशवशं गतः॥ ७॥
दातारं नैव पश्यन्ति तवाद्य मुनिपुङ्गवाः।
एवं निशम्य वचनं स वै कालस्य नारद॥ ८॥
अथाब्रवीद्यमं भीतः पाशहस्तं करालिनम्।
कथमीशार्चनरतं त्वं मां नेतुमिहार्हसि॥ ९॥
शिवार्चनरतानां च त्वत्तः कस्माद्भयं वद।
एवमुक्तो यमः कोपादुद्बन्ध्य मुनिपुङ्गवम्॥ १०॥
पाशैर्दृढतरैः शीघ्रं ध्यायमानं महेश्वरम्।
अथ देवो महादेवः प्रादुर्भूतस्त्रिलोकभृत्॥ ११॥
तं दृष्ट्वा देवदेवेशं प्रहृष्टोऽभूत्तदा मुनिः।
शंकरोऽथाब्रवीत्कालं मम भक्तं विमोचय॥ १२॥
स्वतन्त्र एव मद्भक्तः स कथं नीयते त्वया।
यदुक्तं देवदेवेन तदतिक्रम्य सूर्यजः॥ १३॥
पुनर्बबन्ध नृपतिं स्वपुरीं गमनोद्यतः।
अथ देवो महादेवो विश्वेश्वर उमापतिः॥ १४॥
अकरोद्भस्मसात्कालं श्वेतः पाशैर्विमोचितः।
दत्तं भगवता तस्मै गाणपत्यं च शाश्वतम्॥ १५॥
देव्या सह महादेवः क्षणादन्तर्हितोऽभवत्।
अनेन हेतुना शंभुः कालकाल इति स्मृतः॥ १६॥
अहं च विष्णुना सार्धं स्तुत्वा देवं महेश्वरम्।
प्रसाद्याथ पुनर्जातः कालः शंभोरनुग्रहात्॥ १७॥
अन्यतीर्थं पुण्यतमं ज्वालेश्वरमिति स्मृतम्।
रेवातीरे मुनिश्रेष्ठ महापातकनाशनम्॥ १८॥
कोटिशः सन्ति तीर्थानि तस्मिञ्ज्वालेश्वरे शिवे।
तत्र स्नात्वा देवऋषे दृष्ट्वा ज्वालेश्वरं शिवम्॥ १९॥
कुलैकविंशमुद्धृत्य (?) शिवलोके महीयते।
अन्यं श्रीपर्वतं श्रेष्ठं सिद्धानामालयं शुभम्॥ २०॥

---

१ (क. ग.) ०त्पुरं ग०।

तत्र सिद्धाश्च मुनयो दृश्यन्ते सर्वतो गिरौ ।
सदा संनिहितः शंभुर्लिङ्गे श्रीमल्लिकार्जुने ॥ २१ ॥
दृष्टे तस्मिन्परे लिङ्गे जीवन्मुक्तो नरो भवेत् ।
मनुष्याः पशवः कोटिमृगाश्वमशकादयः ॥ २२ ॥
श्रीपर्वते मृताः सर्वे यान्ति शंभोः परं पदम् ।
केदारे परमं तीर्थं प्रियं देवस्य शूलिनः ॥ २३ ॥
तत्र स्नात्वोदकं पीत्वा संपूज्य च पिनाकिनम् ।
गाणपत्यमवाप्नोति देवानामपि दुर्लभम् ॥ २४ ॥
वृषध्वजे परं तीर्थं देविकायास्तटे मुने ।
यत्र स्नात्वा शिवं दृष्ट्वा ब्रह्महत्यां व्यपोहति ॥ २५ ॥
गोदावरी नदी यत्र निर्गता पापहारिणी ।
तत्र देवाधिदेवेशस्त्रियम्बक इति स्मृतः ॥ २६ ॥
तत्र स्नानं जपो दानं ब्रह्मयज्ञमखः कृतः ।
सर्वं तदक्षयं प्रोक्तं नूनं ब्रह्मगिरौ मुने ॥ २७ ॥
तत्र स्नात्वा शिवं दृष्ट्वा देवदेवं त्रियम्बकम् ।
स्कन्दनन्दिसमो भूत्वा क्रीडते शिवसंनिधौ ॥ २८ ॥
रेवाया नातिदूरे तु गोकर्ण इति विश्रुतः ।
अनुग्रहार्थं लोकानां तत्र संनिहितः शिवः ॥ २९ ॥
नियतोऽनियतो वाऽपि यो वा को वाऽपि मानवः ।
यस्तु पश्यति गोकर्णं रुद्रस्यानुचरो भवेत् ॥ ३० ॥
देवस्य वायुदिग्भागे देवेशी भद्रकालिका ।
योगसिद्धिप्रदा नित्यं दर्शनात्प्राणिनां मुने ॥ ३१ ॥
महाबलश्च भगवान्यत्राऽऽस्ते गिरिजापतिः ।
तस्य दर्शनमात्रेण गोसहस्रफलं लभेत् ॥ ३२ ॥
अन्यद्दक्षिणगोकर्णं सिन्धुतीर्थे महेश्वरः ।
तस्य दर्शनमात्रेण राजसूयफलं लभेत् ॥ ३३ ॥
अन्यद्दारुवनं पुण्यं शंकरस्यातिवल्लभम् ।
गिरिजापतिना यत्र मोहिता मुनिपत्नयः ॥ ३४ ॥

**नारद उवाच**-कथं भगवता तात मोहिता मुनिपत्नयः ।
आचक्ष्व तत्समासेन कौतुकं हृदि वर्तते ॥ ३५ ॥

**ब्रह्मोवाच**–शृणु नारद वक्ष्यामि भवस्य चरितं शुभम्।
श्रवणादेव मनुजः शिवस्य दयितो भवेत् ॥ ३६ ॥
भृगुरत्रिर्वसिष्ठश्च पुलस्त्यः पुलहः क्रतुः।
जमदग्निर्भरद्वाजो गोतमो भागुरिस्तथा ॥ ३७ ॥
वामदेवोऽङ्गिराः शङ्खो लिखितश्च बृहच्छ्रवाः।
विश्वामित्रोऽथ जाबालिरन्ये च मुनयस्तथा ॥ ३८ ॥
यज्ञैर्यजन्ति देवेशं तपन्ति च तपस्तथा।
अज्ञात्वैव परं भावं देवदेवस्य शूलिनः ॥ ३९ ॥
तेषां मूर्धोत्थितो धूमस्तपसा क्लेशितात्मनाम्।
तेन धूमेन महता व्याप्तो ब्रह्माण्डमण्डपः ॥ ४० ॥
शंभोरुत्सङ्गगा देवी धूमव्याप्तं जगत्त्रयम्।
दृष्ट्वा पप्रच्छ विश्वेशं कौतुकादीश्वरेश्वरी ॥ ४१ ॥
**देव्युवाच**–आश्चर्यमिव मे भाति धूमव्याप्तमिदं जगत्।
धूमस्य कारणं ब्रूहि देवदेव महेश्वर ॥ ४२ ॥
**ईश्वर उवाच**–यत्र दारुवनं पुण्यं मम चातीव वल्लभम्।
तत्र तिष्ठन्ति मुनयस्तपोनिष्ठा जितेन्द्रियाः ॥ ४३ ॥
अविदित्वैव मां देवि शरीरक्लेशकारिणि।
तेषां मूर्ध्नि स्थितो धूमो व्याप्नोति सचराचरम् ॥ ४४ ॥
कर्माणि यानि लोकेषु पुष्कलानि बहूनि च।
सर्वाणि निष्फलान्येव मामज्ञात्वैव पार्वति ॥ ४५ ॥
एवं देवस्य वचनं श्रुत्वा मर्षमथाब्रवीत् ॥ ४६ ॥
**देव्युवाच**–देवदेव महादेव मुनीनां भावितात्मनाम्।
अज्ञानस्य यथा व्याप्तिस्तामहं द्रष्टुमुत्सहे ॥ ४७ ॥
एवं देव्या वचः श्रुत्वा भगवान्नीललोहितः।
विटवेषमथाऽऽस्थाय ययौ दारुवनं प्रति ॥ ४८ ॥
स्त्रीरूपधारी विष्णुश्च शंकरेण समागतः।
विष्णुना सह विश्वेशो देवदारुवनौकसः ॥ ४९ ॥
मोहयन्मायया शंभुर्विचचार वने तदा।
मुनिस्त्रियः शिवं दृष्ट्वा मदनानलदीपिताः ॥ ५० ॥
त्यक्तलज्जा विवस्त्राश्च ययुस्ता अनु शंकरम्।
स्त्रीरूपधारिणं विष्णुं सर्वे मुनिकुमारकाः ॥ ५१ ॥

अन्वगच्छन्त देवर्षे कामबाणप्रपीडिताः।
तदद्भुतं तदा ज्ञात्वा कुपिता मुनयस्तदा ॥ ५२ ॥
लिङ्गहीनं हरं कृत्वा गोपवेषधरं हरिम्।
तदाप्रभृति विप्रेन्द्र शिवा मेखलसंज्ञिता ॥ ५३ ॥
उभयोश्चैव संयोगः सर्वपापहरः शिवः।
इति श्रुत्वा तु देवर्षिर्ब्रह्मणो वचनं तदा ॥ ५४ ॥
जगाम कर्तुं तीर्थानि शिवभक्तिपुरस्कृतः।
एतत्सौरं पुराणं ते यथावत्समुदीरितम् ॥ ५५ ॥
यच्छ्रुत्वा मनुजः सम्यग्गोसहस्रफलं लभेत्।
किं तीर्थैस्तु प्रयागाद्यैः किं यज्ञैर्भूरिदक्षिणैः ॥ ५६ ॥
यदि श्रुतं श्रद्दधानैः पुराणमिदमुत्तमम्।
यत्र देवाधिदेवस्य माहात्म्यं कथ्यते विभोः ॥ ५७ ॥
गिरीशस्य तु योगीन्द्राः किं तेन सदृशं भवेत्।
श्रद्दधानः शिवे भक्तो नियतः शृणुयादिदम् ॥ ५८ ॥
ब्राह्मणाञ्शिवभक्तांश्च पुरस्कृत्य समाहितः।
समाप्य सकलं वेदं पूजयेद्वाचकं नरः ॥ ५९ ॥
कनकेन सुशुद्धेन तथा चन्दनखण्डकैः।
विश्वेश्वरो महादेवः प्रीयतामिति भावतः ॥ ६० ॥
दद्यात्स्वर्णं यथाशक्ति वाचकाय सचन्दनम्।
यद्येकशीरमात्राऽपि दत्ता भूमिः शिवार्थिना ॥ ६१ ॥
सा तारयति दातुर्हि पूर्वजान्सकलानपि।
श्रुत्वा ग्रन्थमिमं सम्यग्दद्याद्दानानि शक्तितः ॥ ६२ ॥
तान्यक्षयफलान्याहुर्मुनयो वेदवादिनः ॥ ६३ ॥ ३८९९ ॥

इति श्रीब्रह्मपुराणोपपुराणे श्रीसौरे सूतशौनकसंवादे शिवतीर्थकथनं मुनिपत्नीमोहनं नामैकोनसप्ततितमोऽध्यायः ॥ ६९ ॥

---



॥ समाप्तमिदं सौरपुराणम् ॥